# अनुष्ठानपद्धतिः

# ANUSTHANAPADDHATI

**Part I Edited and Part II Originally Written**

**with notes & Appendix**



By

Mimāmsā-Sāhitya-Dharmaśāstra-Jyotiṣa-Vidvān

Nigamāgamapraviṇa

Paṇḍitaratnaṁ Vedavāridhi Vidyābhāskara

Dharmaśāstrābhijña

## KOTA VASUDEVA SOMAYAJI

STATE AWARDEE

RTD. PROFESSOR OF DHARMASASTRA

MAHARAJA SANSKRIT COLLEGE

MYSORE

**1996**





# अनुष्ठानपद्धतिः



मीमांसा-साहित्य-धर्मशास्त्र-ज्यौतिषविदुषा
श्रीमन्महाराजसंस्कृतमहापाठशाला
निवृत्तधर्मशास्त्रप्राध्यापकेन
निगमागमप्रवीणेन-पण्डितरत्नं वेदवारिधिः
विद्याभास्करः धर्मशास्त्राभिज्ञः इत्यादिबिरुदभाजा
राज्य प्रशस्ति भाजा

**कोट वासुदेव सोमयाजिना**

संशोधिता
स्वोपज्ञोत्तरार्घलघुटिप्पणीभ्यां समलङ्कृता
सपरिशिष्टा






शा श १९१८

श्री महागणपतये नमः

# उपोद्धातः

देवपूजाविहीनो यः स नरो नरके पतेत् ।
यथा कथञ्चिद्देवार्चा विधेया श्रद्धयान्वितैः ।।

विदितमेव भवतां यदस्मिन् प्रपञ्चे सर्वोऽपि जनः सुखं मे भूयात् मनागपि दुःखं मा भूदिति समीहते । किन्तु सुखप्राप्त्यर्थं दुःखपरिहारार्थं वा शास्त्रमार्गे न प्रवर्तते। कथञ्चित् प्रवर्तमानोऽपि अयथानुष्ठानेन फलमप्राप्नुवन् शास्त्रमाक्षिपतीति सार्वजनीनम्। सुखप्राप्तये च शास्त्रेऽनेक उपायाः प्रतिपादिताः । तच्च शास्त्रं निगमागमभेदेन द्विविधम् । मन्त्रब्राह्मणसमुदायरूपो वेदः निगमपदेनाभिधीयते । निगमप्रतिपाद्यास्त्रेताग्निसाध्या यागादयः अधिकद्रव्यव्ययायाससाध्या दुष्कराश्चेति ते विरलाः सञ्जाताः कलियुगे ।

आगमस्तु कर्मपाशबद्धान् जननमरणप्रवाहपतितान् संसारसागरं तर्तुमक्षमानुद्धर्तुं परमकारुणिकेन शिवेन शिवायै उपवर्णितः जनार्दनसम्मतश्च, तदुक्तं-आगतं शिववक्त्राब्जाद्गतं तु गिरिजाश्रुतौ । मतं तु वासुदेवस्य ह्यागमः परिकीर्तितः इति । अयमागमः श्रुतिमूलः स्मृतिस्थानापन्नः, यथाहुः- वेदमूलतया तन्त्रमाप्तमूलतयाऽथवा। पुराणवत्प्रमाणं स्यात् तथा मन्वादिवाक्यवत् इति । यथा त्रेताग्निसाध्यं कर्म श्रुतिमात्रगम्यं तथा प्रतिमाश्रितमर्चनमागमैकगम्यम् । यद्यपि क्वचित् पुराणादिषु देवतार्चनं कथ्यते तथाऽपि सम्पूर्णतया तदज्ञानमागमाधीनमिति पुराणविदामप्यतिरोहितम् । तच्चार्चनं प्रतिमाधीनम् । प्रतिमाश्च सप्तविधाः यथाहुः- रत्नलोहशिलाधातुमृत्काष्ठालेख्यभेदतः। प्रतिमा सप्तधा ज्ञेया निर्दोषा रत्नलोहजा । एकबेरं शिलालोहरत्नधातुमयं भवेत् । वहुवेरं तु मृद्दारुकृतमालेख्यमेव च । प्रासाद एव तु स्थाप्या या शिलादारुमृन्मयी । प्रतिमाऽन्यां गृहे पूज्या प्रासादे च यथाविधि इति । अतः आगमशास्त्रमनुसृत्य कृतं पूजादिकं पूर्णं फलं ददाति नान्यथेत्यपि सर्व सम्मतम् ।

सर्वजनसुलभार्चनप्रतिपादकाः परःशतमागमाः सन्ति, तथाऽपि सर्वैः स्वपरम्परागतागममनुसृत्यैवानुष्ठीयते । तत्र परशुरामक्षेत्रे पश्चिमपर्वतप्रदेशेषु च विष्णुसंहिताक्रियासारलक्षणसंहिताद्यनेकागमपर्यालोचनया केरलीयविदुषा नारायणभट्टेन रचितं तन्त्रसमुच्चयमाश्रित्यानुष्ठीयते इत्यप्यतिरोहितम् । प्रायशः आगमशास्त्रमेकैकां देवतामधिकृत्य प्रवर्तते । परन्त्वयं ग्रन्थः विष्णु-शिव-हरीश-दुर्गा-गणपति-स्कन्द-शास्त्राख्य-सप्तदेवतानां प्रतिष्ठादिकर्मकलापं बोधयतीति वैशिष्ट्यमस्य। तथाऽप्ययं ग्रन्थः प्रौढ श्लोकमयः छात्राणामनुष्ठातॄणां प्रयोगग्रन्थमन्तरानुष्ठानं बोधयितुं न प्रभवतीत्यालोच्य केरलीयेनैव केनचिद्विदुषा अनुष्ठानपद्धत्याख्यः प्रयोगग्रन्थ आरचितः। प्रायशः अयं तन्त्रसमुच्चयव्याख्याद्वयपूर्वकालीनः समकालीनो वा भवेत् । यतः मूलस्य यथा

श्रुतार्थत्वमङ्गीकृत्य प्रयोगो लिखितः व्याख्योक्तविशेषविचारः न स्पृष्टः । अस्य ग्रन्थकर्तुः नामकालादिकं न ज्ञायते । केरलीयभाषायां पदार्थवर्णनात् तत्र तत्र तन्त्रसमुच्चयश्लोकप्रतीकग्रहणात् तथैव प्रयोगलिखनाच्च केरलीयः इति तन्त्रसमुच्चयमूलः इति च निश्चितम् ।

गुरूणां ब्रह्मीभूतानां दीक्षितवेङ्कटकृष्णसोमयाजिनां सविधे तन्त्रसमुच्चयाध्ययनसमये प्रयोगानुकूलः कश्चन ग्रन्थः यदि स्यात्तदैव सुकरमनुष्ठानमिति मनीषा समजनि । एतत्समय एवास्मत्पितृवरेण्यैर्महता प्रयत्नेन तालपत्रस्थोऽयं ग्रन्थः सम्पादितः तं दृष्ट्वाऽयमेव ग्रन्थःअनुष्ठानसौकर्यं जनयेत् इत्यालोच्य ग्रन्थशोधने प्रयत्न आरब्धः तदा ब्रह्मश्री फणिधरसोमयाजिभिः ताळपत्रस्थः ग्रन्थः दत्तः अनन्तरं ब्रह्मश्री दीक्षित पद्मनाभ सोमयाजिभिः बन्धुगृहादानाय्य ताळपत्रस्थमपरं पूस्तकं दत्तम् । एतत्पुस्तकत्रयमवलम्ब्य संशोधने प्रवृत्तेनैतन्निश्चितं सर्वमेकमूलमिति यतः मूलविरोधः लेखकप्रमादः सर्वत्र समानः । किन्तु पूर्वपूर्वं शुद्धमिति नावगतम् । पुस्तकद्वयमपि कदा केन लिखितमित्यपि सम्यग्न ज्ञायते । परमेकस्मिन् पुस्तके विष्णुभट्टः आचार्यत्वेन स्मृतः । अन्ते हनुमत्प्रार्थनं कृतं पराभवसंवत्सरे वेङ्कटेशेन लिखितमित्युपसंहृतम्। तथाऽपि शकवर्षाद्यलेखनेन न कोप्युपकारः समजनि । आस्तां नामायं विचारः सर्वथा उपयुक्तोऽयं ग्रन्थः तालपत्र एव शेते अनुष्ठातृभिरनेकैरस्य नामापि न ज्ञातं इत्यहो महद्दौर्भाग्यम् । अस्य संशोधने वर्षत्रयमतीतम् । महाराजसंस्कृतमहापाठशालायां आगमसलहासमित्या धार्मिकदत्तिसमित्यादेशेनागमेषु पञ्चसु विभागेषु अध्ययनसौकर्यं कल्पितम् । किन्तु एतत्प्रान्तीयागमिकसौकर्यार्थं अन्यो विभागः स्थापनीयः, तत्र पठ्यग्रन्थोऽपि सम्पादनीयश्च आसीत् । अतः पुस्तसमिदं धार्मिकदत्तिसमित्यै मुद्रणार्थं दत्तम् । किन्तु पञ्चषवर्षनिरीक्षणेऽपि आगमविभागस्थापने ग्रन्थप्रकाशने च प्रयत्नः न कृतः । अतः एतत्प्रकाशनार्थं अन्यनिरीक्षणं न कार्यमिति मयैव प्रयतितम् । एतदर्थं मुद्रिता अमुद्रिता बहवः आगमग्रन्था अवलोकिताः । अस्य मूलं तन्त्रसमुच्चय एव, तन्त्रसमुच्चयस्य परं विष्णुसंहिता क्रियासार-लक्षणसंहितादयः, तत्रापि विष्णुसंहिता विशेषतः, इत्यापि निश्चितम् । यत्तु- ``केनचित् पण्डितंमन्येन लब्धप्रतिष्ठेनास्य न तन्त्रसमुच्चयो मूलम्, अन्यदेव मूलं भवेदिति भणितम्'' तदेतदागमानवलोकननिबन्धनमज्ञानविलसितं बालभाषितं चेत्युपेक्षितम् । यद्यपि क्वचित् यथाश्रुतमूलानुसारेण प्रयोगो लिखितः क्वचित् विस्तृतः, क्वचित्सङ्कुचितः, यत्र क्वापि मूलव्यत्यासः कृतः सोऽपि ग्रन्थान्तरनिबन्धनः लेखकप्रमादजनितो वेत्यवगन्तव्यम्। एतेन क्वचिदपाणिनीयप्रयोगोऽपि प्रत्युक्तः ।

ग्रन्थकारेण पूजा-प्रायश्चित्त-कलश-उत्सवा एव प्रतिज्ञातास्त एवोक्ताश्च। किन्तु प्रतिष्ठा-जीर्णोद्धारादिप्रयोगं विना पूर्णतां न यातीति मन्वानेन मया प्रतिष्ठादिप्रयोगं विरच्यान्ते उत्तरार्धत्वेन निवेशितः । यत्राप्यतीव विवरणस्यावश्यकता तत्र लघुटिप्पणी निवेशिता । एवमपि संशयो जायेत मूलग्रन्थो द्रष्टव्यः । एतेन तेनैव पण्डितंमन्येन हर्गाशे - अघोरमुदर्शनास्त्रद्वयवत्वे, षडुपहारपञ्चोपचारविषये, एवमन्यान्यविषयेषु च

संशयोद्भावनं कृतं तत्तस्यैवैतद्ग्रन्थविषयेऽज्ञानं प्रकाशयतीत्युपेक्षितम् । यतोह्ययं ग्रन्थः मन्त्रतन्त्रात्मकः गुरूपदेशमन्तरा नानुष्ठानानुकूलः तदुक्तं - आचार्यानुमतादेव क्रिया कार्या विजानता । तत्पूजयैव देवश्च वरदो नान्यथा भवेत् इति ।

ग्रन्थेऽस्मिन् मन्त्रस्य प्रतीकग्रहणमात्रं कृतम् । केरलभाषायां पदार्थवर्णनं कृतमपि सर्वेषां नोपयुक्तमिति मया परित्यक्तम् । एतदुभयं क्रोडीकृत्य परिशिष्टत्वेन प्रकानीयः तथा लक्षणसहिता-क्रियासार-वासिष्ठसंहिताः प्रकाशानीया इति मनीषाऽस्ति। किन्तु अधिकद्रव्यव्ययायाससाध्याः । अतस्तत्प्रकाशनमभिमानिनां प्रोत्साहायत्तम् । एतद्ग्रन्थविषये सदभिप्रायं दत्तवतां श्री श्री पलिमार-भण्डारकेरी स्वामिपादानां सन्निधौ शतशः नतयः समर्प्यन्ते । तथैव स्वाभिप्रायं दत्तवतां ब्रह्मश्री दीक्षित पद्मनाभसोमयाजिनां कृते कार्तज्ञ्यं वहामि । अस्मिन् कार्ये प्रात्साहं दत्तवतामन्येषामप्युपकारं सानन्दं स्मरामि। एवमपि कार्यान्तरव्यापृतत्वात् मानवसहजभ्रमप्रमादादिभिः सीसाक्षरयोजनमुद्रणैश्च सम्भाविता दोषाः क्षन्तव्याः ।

पिङ्गलवत्सरः
शा. श. १९००

विदुषामनुचरः,
कोट वासुदेवसोमयाजी

## द्वितीयप्रकाशनं प्रति

प्रथममुद्रणावसरे विदुषां प्रोत्साहलाभे क्रियासार-लक्षणसंहिता प्रकाशनं प्रतिज्ञातम् । तदिदानी निरूढमिति मोमुद्यते मे मनः । महागणपतेराराधकेन वासिष्ठसंहिताविनयकोदयौ च प्रकाशितौ । अनुष्ठानपद्धतिरपि विदुषां निर्बन्धेन द्वितीयवारं प्रकाशनमधिगतवती। प्रथममुद्रणे सम्भाविता दोषाः प्रायशः परिहृताः, अतः शुद्धाशुद्धपत्रिका परित्यक्ता । टिप्पण्यपि वृद्धिं गता परिष्कृता च । सम्प्रदायानुसारी उत्सवपटलः विशेषतः उत्सवप्रायश्चितं च परिशिष्टतया प्रकाशिते । यत्र पूर्वमनुक्ताः मृत्तिकाहरण-भेरीताडन-कौतुकबन्धन-रङ्गपूजा-रथाधिवासमृगयात्रादयः अतीवोपयुक्ताः सङ्गृहीताः । अन्ते च प्रायशः प्रबोधोत्सवदिने क्रियमाणतुलारोहणविधिरुपनिबद्धः । एतावता अनुष्ठातॄणामितरग्रन्थनिरपेक्षतया प्रायशः प्रयोगः सुकरो भवेत् । इतोऽपि विशेषजिज्ञासुभिः क्रियासारलक्षणसंहिते द्रष्टव्ये । एवमपि सन्देहो भवेच्चेद्गुरुमुखादेव परिहर्तव्य यतो हि मन्त्रशास्त्रमेतत् पुस्तकमात्रदर्शनेन प्रयोगो दुश्शकः । सम्यक् शोधने कृतेऽपि कार्यान्तरव्यापृतत्वाद्वा मनुजसहजभ्रमप्रमादादिभ्यः सीसाक्षरयोजकमुद्रकादिभ्यश्चवा सम्भाविता दोषा गुरुमुखात् परिहर्तव्या इति प्रार्थये ।

प्रथममुद्रण इव द्वितीयमुद्रणेऽपि क्षमया मदाग्रहं सोढ्वाऽपि मुद्रणं कृतवतां साम्राज्यं मुद्रणालयाधिकारिणां कृते मदीयं कार्तज्ञ्यमर्प्यते । अनेन मदीयपरिश्रमेणानुष्ठातॄणामीषदप्युपकारो भवेच्चेद्धन्यमात्मानं मन्ये । ओं तत्सत् ।।

रुधिरोद्गारिवत्सरः मार्गशीर्षपूर्णिमा
शा. श. १९०६

विदुषामनुचरः
कोट वासुदेवसोमयाजी

# तृतीयमुद्रणं प्रति

द्वितीयमुद्रणावसरे वक्तव्यमुक्तमेव । प्रथममुद्रणं दुःशकं संसृकृतशास्त्रीयग्रन्थानां, विशेषत आगमग्रन्थस्य, तत्रापि परिमित प्रदेशे लब्धप्रचारस्य। तथापि विदुषां प्रोत्साहात् तृतीयमुद्रणमलभतेति मोमुद्यते मे चेतः लक्षणसंहिताक्रियासारोऽपि द्वितीमुद्रणकांक्षेते। एतन्मूलभूतायाः विष्णुसंहिताया अपि लघुटिप्पण्या सहितायाः प्रकाशनं कर्तव्यमिति मनीषा वर्तते। तथापि पत्रमूल्यं मुद्रणमूल्यं दशगुणितं वृद्धम् । अन्ततोगत्वा आधिक्यं ग्राहकाणां शिरसिनिःक्षेप्तव्यमिति मनःक्लेशमनु भवामि।एतन्मुद्रणं DTP-OFFSET द्वारा सम्पादितम्।अल्पकाल एव प्रकाशने साहाय्यमाचरतां उदयरवि मुद्रणालयाधिकारिणां कृते मदीयं कार्तज्ञ्यं समर्प्यते। अनेन मदीयपरिश्रमेणानुष्ठातृणामिषदप्युपकारो भवेच्चेद्धन्यमात्मानं मन्ये ओं तत्सत् ।

युवमाघशुक्लपूर्णिमा — विदुषामनुचरः

कोट वासुदेवसोमयाजी

---

**ग्राह्यांशाः**

गणपतिमण्डलं - शक्रासुरानिलहुताशनवारुणेशभागाश्रितं परिलिखेद्रसकोणमन्तः । पाशीशपावकदिशाभ्युदितं त्रिकोणं विघ्नार्चनेषु विहितं नवकोणचक्रम् । प्रादेशप्रमितियुतं गणेशबिम्बं षट्कोणाकृतिमथवर्तुलत्रिराढयम् । तद्बाह्यं चतुरस्रमण्डलं लिखित्वा तन्मध्ये यजतु गणेश्वरं विपश्चित् ।

आसनं - कौशेयं कम्बलं वाऽपि अजिनं पट्टमेव वा । दारुजं तालपर्णं च आसनं षड्विधं स्मृतम् । द्रव्याभावे तु पूजायां पुष्पैरपि समर्चयेत् । पुष्पालाभे तु तोयेन तोयाभावे तु चेतसा । तथा - एवं कालद्वये कुर्याद्बलिं तीर्थदिनान्तिमम् । आरम्भदिवसे रात्रौ समाप्तिदिवसेऽह्नि । बलिमेकं क्षिपेन्मध्यदिवसेषु बलिद्वयम् ।

नीराजने - कुर्यादारार्तिकं पञ्चवर्तिकामनुसंख्यया । पादयोश्च चतुर्वारं द्विःकृत्वो नाभिमण्डले । एककृत्वो मुखे सप्तकृत्वः सर्वाङ्ग एव हि ।

शङ्खे-गोक्षीरधवलः स्निग्धो दीर्घनाळो बृहत्तनुः । वृत्तो यो दक्षिणावर्तो सो हि वै शङ्खसंज्ञितः । पूर्वोक्तलक्षणोपेतो वामावर्तोऽथ वा द्विज । शङ्खोऽयं नातिसुलभः सोऽपि मुख्यः सुरार्चने । उद्धरिण्या जलं ग्राह्यं नाप्सु शङ्खं निमाज्ञयेत् । किञ्च-उद्वाहावहने न स्तः स्थिरायामुद्भवार्चने । अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद्द्वयम् । घण्टावादनकालः- उद्घाटने कवाटस्य प्रस्तुते पूजने तथा । आवाहनार्घ्यस्नपने पुष्पधूपादिदित्सिते । नीराजने यवनिकासमुद्धारे निवेदने । होमे भूतवलौ कर्मण्युद्वाहे चालनं मणेः । उत्सादने पिशाचादेः प्रीणनं च हरेः स्मृतम् । प्रदक्षिणे-पादे पादान्तरं कृत्वा करौ चलनवर्जितौ । स्तुतिर्वाचा हृदि ध्यानं चतुरङ्गं प्रदक्षिणम्। किञ्च-अष्टबन्धं विना यत्र पूजाकर्म विनिष्फलम् । तस्मात्सर्वप्रयत्नेन क्षिप्रतः कारयेद्बुधः ।

जलनिर्गमनदिक्-तत्संस्थापनकाले तु देवानां दिग्द्वये हितम् । प्राक्प्रत्यगाननानां च तदुदग्दिग्गतं शुभम् । उदक्दक्षिणवक्त्राणां प्राग्भागे विहितं सदा । गर्भागारं शिरः प्रोक्तं गोपुराणि गलस्तथा । मण्डपं कुक्षिरित्युक्तं प्रतिमा जीव उच्यते ।

**H.H. Sri Vidyamanya Theertha Sripadangalavaru,**
**Sri Palimar & Bhandarakeri Mutts,**
**UDUPI (Karnataka)** **Dated 18-10-1977**

श्री विष्ण्वादि सप्तदेवतापूजाकलशरथोत्सवादिप्रयोगप्रतिपादकः तन्त्रसमुच्चयग्रन्थमुपजीव्य समुदभूतः अनुष्ठानपद्धत्याख्यः अपूर्वग्रन्थसूर्यः उदयमित इति सज्जनजलजसमुदायस्य महान् आनन्दः ।

कोटग्रामस्था महाविद्वांसः श्री वासुदेवसोमयाजिनः महता प्रयत्नेन इमं ग्रन्थरत्नं संशोध्य अणुटिप्पण्या संयोज्य सम्प्रकाशितवन्तः ।

अधुना एतादृशे कर्मणि एत एव समर्था इत्यालोच्य धर्मग्लानिविनाशकः भगवान् श्री वासुदेव एव एतेषु वासुदेवनामधेयेषु स्थित्वा प्रेरयित्वा एतन्मुखात् एतत् कर्म कारयामास इत्यनुमीयते । प्रतिष्ठाजीर्णोद्धारविभागोऽपि आवश्यकत्वात् अस्मिन् ग्रन्थे स्वयं विरचय्य प्रवेशितः । परशुरामक्षेत्रस्थानां तन्त्रिणां सर्वेषां अयं ग्रन्थः आवश्यकः ।

एवमेव इतः पूर्वमपि एतैः क्षयमासमीमांसानामधेयः अत्युच्चविचारचतुरीसमलङ्कृतः महान् ग्रन्थः स्वयं विरचय्य प्रकाशितः । एतादृशग्रन्थरत्नानि बहूनि धर्मतत्वप्रकाशकानि एतन्मुखात् विरचितानि प्रकाशितानि च भवन्तु, धर्माभिमानिनः सर्वे एतैरुपकृता भूत्वा सदा एतेषु कृतज्ञाश्च सन्तु इत्याशास्महे ।

इत्यनेकनारायणस्मरणानि
श्री विद्यामान्यतीर्थाः
श्री पलिमार-भण्डारकेरि उभय
मठाधीशाः, उडुपि

शैवाद्यागमग्रन्थेषु ग्रन्थबाहुल्यात् विषयाणां तत्र तत्र विक्षिप्तत्वाच्च सामान्येन देवताप्रतिष्ठाविचाराधिगमो दुष्कर इति मत्वा नारायणाख्येन केरलीयेन तन्त्रसमुच्चयाख्य आगमशास्त्रग्रन्थो विष्ण्वादिसप्तदेवताप्रतिष्ठादिक्रमनिरूपकः सम्यगारचितः, येन मन्दधियामप्यनुष्ठानं कर्तुं सुकरम् । स च पद्यरूपेण निरूपितोऽस्तीति, केरळीयेनैवाऽन्येन तन्त्रसमुच्चयोदीरितक्रमेण सम्यक् प्रयोगग्रन्थः अनुष्ठानपद्धत्याख्यः कृतोऽस्ति । स चैतावत्कालं तालपत्रस्थमेवासीत् । बहूनां तत्परिचयोऽपि नासीदिति तत्परिजिहीर्षुभिः, चतुःशास्त्रपण्डितैर्वासुदेवसोमयाजिभिः कृतः परिश्रमः देवताप्रतिष्ठातॄणां महते सौकर्याय भवेदिति निश्चप्रचम् ।

परन्तु अनुष्ठानपद्धतौ पूजामुपक्रम्योत्सवान्तभाग एव निरूपितः । न तु प्रतिष्ठाभागः, अतः एभिः पण्डितैः प्रतिष्ठाप्रयोगः जीर्णोद्धारादिप्रयोगश्च तद्रीत्यैव स्वयं विरचय्योत्तरार्धे संयोज्यानुष्ठानपद्धतिः सम्पूर्णतामापादितेति महत् प्रमोदस्थानम् । अनेन प्रतिष्ठादिकर्तॄणामगमिकानां अनुष्ठानसौकर्यसम्पादनेन महानुपकारः कृतः एभिः पण्डितैरिति मन्यामहे । पुरुषार्थसाधने देवताराधनं मुख्यमिति हि शास्त्रे प्रतिपादितम् । तच्च गुरूपदेशमन्तरा न साध्यते । अविधिना कृतं चेत् तदभिनयमात्रं भवेत्, नैतावन्मात्रं किन्तु दुरदृष्टाधिगमोऽपि भवेत् । प्रतिमामुखेन देवताराधनं सुलभं तच्च शास्त्रज्ञगुरुमुखेनाधिगत्य यथाविध्यनुष्ठानेनैव शक्यमित्यपि न वक्तव्यं खलु । एतदर्थमेवागमशास्त्रपण्डितान्वयसञ्जातैः पण्डित-वासुदेवसोमयाजिभिरनुष्ठानपद्धतिः सङ्गृह्य, भागशः विरचय्य च प्रकटीकृतेति। आशास्महे महता परिश्रमेण कृतमुद्यमं सफलीकुर्वन्तु सहृदयाः, एवमेवापूर्वग्रन्थसम्पादने रचने च भगवान् महागणपतिरेभ्यः सामर्थ्यं वितरतु इति च ।

सालिग्राम, (द. क. )
13-10-1977

दीक्षित पद्मनाभसोमयाजी
ज्योतिषशिरोमणिः निगमागमधुरीणः



# विषयसूची

**ग्राह्यांशाः**

मुद्राऽज्ञने-अलाभे सर्वमुद्राणामञ्जलिर्हृदि मूर्ध्नि वा।

"धर्मादि पूजने प्राची तथैवावरणार्चने । पूजकस्य पुरः कल्प्यं शक्रादिषु यथा स्वकम्"। "पाद्यादिद्रव्याभावे तु तत्स्मरन्नक्षतान् क्षिपेत्"। द्रव्याभावे-"द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाश्शुभाः"। कलशोक्तद्रव्याभावे-"द्रव्याभावे तु सर्वाणि गन्धपुष्पाक्षतोदकैः। पूरयेन्मतिमान् मन्त्री तत्तत्सङ्कल्पसंयुतम् "। होमोक्तद्रव्याभावे - अलाभे समिधामाज्यैश्चरुभिर्वाऽहुतिर्भवेत् । तयोरलाभे बीजैर्वा समिद्भिर्वा तथोदितैः। तथा-"पुष्पं पत्रं फलं देवे न प्रदद्यादधोमुखम् । पुष्पाञ्जलौ न तद्दोषस्तथा पर्युषितस्य च"। विल्वपत्रं त्वधोमुखमेव स्थापयेत् । कूर्चविषये-शान्तिकेऽधोमुखान्येव पौष्टिके तून्मुखानि च ।

दृढसम्प्रोक्षणम्- स्थापितस्याष्टवन्धस्य लक्षणं च मयोच्यते । मासं च मण्डलं वाऽथ त्रिमासं पञ्चमासकम्। सप्तमे नवमे मासे वत्सरान्तमथापि वा । यावद्दृढतरं वन्धं तावत्तन्नाभिषेचयेत् । वस्त्रं संक्षाल्य चोद्वर्त्य ततः सम्प्रोक्ष्य मन्त्रतः । अभिषेकं

विना पूजां कृत्वा नित्यं निवेदयेत् । तथा- यदि बन्धोत्सवादूर्ध्वं पूर्वं सम्प्रोक्षणाद्गुरुः। श्रेयस्कामी न कुर्वीत तन्मध्ये वत्सरोत्सवम् । तस्मात्कुर्याद्बन्धकर्म वत्सरोत्सवतः परम्। शेषकर्माणि कुर्वीत तन्मध्ये न च दोषभाक् ।

किञ्च- द्वादशाब्दात्परे देवि यदि बन्धे दृढे स्थिते । तदुत्सार्य पुनर्बन्धं नवीनं पूर्ववच्चरेत् । अथवाष्टादशाब्दान्ते दृढबन्धेऽपि कारयेत् । तथा-तेषु येन समारब्धं नित्यं नैमित्तिकादिकम् । समाप्तिस्तेन तन्त्रेण कर्तव्या तन्त्रपारगैः । अनुक्तं यत्र यत्तन्त्रे ग्राह्यं तद्भेदतस्तु तत् । तद्भेदेष्वपि यन्नोक्तं तदन्येभ्यश्च सङ्ग्रहेत् । तथा-ध्वजे ध्वजं न कर्तव्यं कर्तव्यं वृषभध्वजम् । देवकल्याणकाले तु नृकल्याणं न कारयेत् । बाणलिङ्गे चले लोहे रत्नलिङ्गे स्वयम्भुवे । प्रतिमासु च सर्वासु न चण्डाधिकृतिर्भवेत् । ...सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवेत् । यत्र चण्डाधिकारोऽस्ति भोक्तव्यं न तु मानवैः । तथा-द्वारगोपुरयोर्मध्ये महानन्दिं प्रकल्पयेत् ।

सस्यं क्षेत्रगतं प्राहुः सस्तुषं धान्यमुच्यते। आमान्नं वितुषं ज्ञेयं पक्वमन्नमुदाहृतम्। उत्तानेन तु हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम्। संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः।

पाण्याहुतिर्द्वादशपर्वपूरिका कंसादिना चेत् स्रुवमात्रपूरिका। दैवेन तीर्थेन च हूयते हविः.....।

तिष्ठन्नासीनः प्रह्वो वा नियमो यत्र नेदृशः। तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता। सावित्रीमात्रसारोऽपि वरं विप्रो नियन्त्रितः। नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ।

अष्टाङ्गं वापि पञ्चाङ्गं प्रणामं पुरुषश्चरेत्। पञ्चाङ्गमेव नारी तु नान्यथा मुनिसत्तम। दिवाऽतीते च गायत्रीं शतं नित्ये समाचरेत्। आदशाहात् परातीतं गायत्रीं लक्षमभ्यसेत्। मासातीते तु नित्ये हि पुनश्चोपनयं चरेत्। नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम्। तीर्थाभावेऽपि कर्तव्यमुष्णोदक परोदकैः। ब्राह्मणानां प्रसादेन दिवि तिष्ठन्ति देवताः। ब्राह्मणाभिहितं वाक्यं न मिथ्या जायते क्वचित्। यद्ब्राह्मणा स्तुष्टतमा वदन्ति तद्देवताः प्रत्यभिनन्दयन्ति। तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्ष देवेषु परोक्षदेवाः । आचार्यः स्नातकादीनां मधुपर्कार्चनं चरेत्। स्वगृह्योक्त विधानेन विवाहे च महामखे। गृहे लिङ्गद्वयं नार्च्यं शालग्रामद्वयं तथा। शक्तित्रयं त्रिविघ्नेशं द्वौशङ्खौ नार्चयेत्सुधीः। नार्चयेच्च तथा मत्स्यकूर्मादि दशकं तथा। भग्नावा स्फुटिता वाऽपि शालग्राम शिला शुभा। शालग्रामाः समाः पूज्याः समेषु द्वितयं न हि। विषमा नैवपूज्यन्ते विषमे त्वेक एवहि। सर्वत्रैव प्रशस्तोऽब्जः शिवसूर्यार्चनं विना।

गणेशार्कौ यजेन्नाम्र विष्णुं शङ्खेन पूजयेत्। शिवं गवयशृङ्गेन शक्तिमर्चेच्च धातुना।

देवमूर्ध्नि जलं सिञ्चेद्द्वादशाङ्गुलमुन्नतम्। गोशृङ्गवत् प्रमाणेन अभिषेकस्य लक्षणम्।

# अनुष्ठानपद्धतिः

**श्री गणाधिपतये नमः** ।। शुभमस्तु ।। श्रीसरस्वत्यै नमः ।। श्रीविष्णुभट्टाचार्यगुरुभ्यो नमः । विष्णुं शिवं शङ्करनारायणं दुर्गां सुब्रह्मण्यं गणपतिं शास्तारं च पृथक् पृथक् नमस्कृत्य तेषां मन्त्रबिम्बे पूजां प्रासादशुद्ध्यादिकं कलशप्रकारं उत्सवं च लिखामि।

स्नात्वा पादौ प्रक्षाल्याचम्य प्रासादस्य द्वारि द्वास्स्थौ संवन्द्यान्तः प्रविश्य देवस्य दक्षिणभागे उपविश्य शिवादि श्री गुं गुरुभ्यो नमः गं गणपतये नमः इति मूलाधारे मूर्ध्नि च संवन्द्य[1] स्वास्त्रेण करयोः तलपृष्ठपार्श्वेषु व्याप्य[2] तालत्रयदिग्बन्धनाग्निप्राकारान्विधाय

***नाडीशोधनम्*** -प्रणवेन द्वादशवारं प्राणायामं कृत्वा, अमिति त्रिवारमुक्त्वा पिङ्गलया[3] वायुं विमुच्य अमिति षड्वारमुक्त्वा वायुमापूर्य द्वादशवारमुक्त्वा परिकुम्भ्य इडया[4] विमुञ्चेत् पुनः उमिति त्रिवारमुक्त्वा इडया वायुं विमुच्य उमिति षड्वारमुक्त्वा प्रपूर्य द्वादशवारं उक्त्वा परिकुम्भ्य पिङ्गलया विमुञ्चेत् ।। पुनः अं,उं इति षड्वारं सञ्जप्य पिङ्गलया इडया च प्रपूर्य वायुं[5] ममिति षड्वारं सञ्जप्य सुषुम्नामार्गं सम्पूर्य ममिति द्वादशवारं प्रजप्य सुषुम्नानाडीं परिकुम्भ्य वायुं व्यत्ययेन[6] विमुञ्चेत्।

***रेचकादिः***- पुनः षोडशवारं प्रणवं सञ्जप्य पिङ्गलया वायुं विमुच्य द्वात्रिंशद्वारं प्रणवं सञ्जप्य इडया प्रपूर्य चतुःषष्टिवारं प्रजप्य सुषुम्नानाडीं प्रकुम्भ्य जीवस्य परमात्मभावं सञ्चिन्त्य[7] शोषणादि कुर्यात्।

***शोषणादिः***- यमिति षोडशवारं सञ्जप्य वायुमिडया विमुच्य द्वात्रिंशद्वारं सञ्जप्य वायुमापूर्य चतुःषष्टिवारं सञ्जप्य परिकुम्भ्य पिङ्गलया विमुञ्चेत्।

पुनः रमिति षोडशवारं सञ्जप्य पिङ्गलया विमुच्य द्वात्रिंशद्वारं

---

१ मुलाधारे गुरुं मुर्ध्नि गणपतिम् २ मुलेनेति। अस्त्रेण दाहनं मूलेन व्यापनं ३ पिङ्गला दक्षिणनाडी। ४ इडा वामनाडी। ५ सुषुम्नाया द्वारि सञ्चिन्त्य। सुषुम्ना मध्यनाडी ६ पिङ्गलया पूरितमिडया,इडया पूरितं पिङ्गलया। ७ ओं हंसः इति मनुना मुलाधारस्थं जीवं द्वादशान्तस्थपरमात्मनि सङ्गमय्य।

सञ्जप्य परिकुम्भ्य इडया विमुञ्चेत्।

पुनः वमिति षोडशवारं प्रजप्य वायुमिडया विमुच्य द्वात्रिंशद्वारं सञ्जप्यापूर्य चतुःषष्टिवारं प्रजप्य परिकुम्भ्य प्लावयेत्[1]।

***लिपिन्यासः***- अं नमः,आं नमः इत्यादि करयोः तलपृष्ठपार्श्वेषु दक्षिणवामक्रमेण व्याप्य ऋं नमः,ॠं नमः इत्यादि[2] अङ्गुष्ठाद्यङ्गुलीषु व्याप्य न्यस्य कं नमः, खं नमः इत्यादिभिः दक्षिणतर्जन्यादि वामतर्जन्यन्तं सन्धित्रये अग्रे च न्यस्य हं नमः, ळं नमः, क्षं नमः इत्यङ्गुष्ठद्वयसन्ध्यग्रेषु युगपन्न्यस्याङ्गानि अङ्गुष्ठादि तलान्तं युगपत् न्यसेत्। नपुंसकरहित ओजयुग्मस्वरषट्कद्वयमध्यगत कचटतपयादिवर्गैः अङ्गानि- अं कं खं गं घं ङं आं हृदयाय नमः, इं चं छं जं झं ञं ईं शिरसे स्वाहा, उं टं ठं डं ढं णं ऊं शिखायै वषट्, एं तं थं दं धं नं ऐं कवचाय हुं, ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट्, अं यं रं लं वं शं षं सं हं ळं क्षं अः अस्त्राय फट्।। शब्दब्रह्म ऋषिः लिपि गायत्री छन्दः, मातृका सरस्वती देवता पुनः हस्तद्वयेन स्वरस्पर्शव्यापक [3] भिदेत्युक्त्या लिप्या देहे मूर्धादिपादान्तं त्रिवारं व्यापकं कुर्यात्।

***मातृकान्यासः***- मूर्धनि, मुखवृत्त, नेत्रद्वय, श्रोत्रद्वय,नासिकाद्वय, कपोलद्वय, ओष्ठद्वय, दन्तपङ्क्तिद्वय, मूर्धास्येषु,(षोडश)स्वरान् न्यस्य करद्वय पादद्वय सन्ध्यग्रेषु कचटतवर्गान्न्यस्य पार्श्व द्वय पृष्ठ नाभि उदर हृदय दक्षिणकक्षगलवामकक्षेषु पकारादि वकारान्तं न्यस्य हृदयादि करद्वय (हृदयादि)पादद्वय गुह्यमूर्धसु शकारादि क्षकारान्तान् न्यसेत् इति शुद्धादि दशविधलिपिं वा[4] बिन्दुयुक्तां लिपिं[5] वा त्रिवारं वा न्यस्य अङ्गानि न्यस्य ऋषि छन्दो दैवतानि न्यस्य यथाशक्ति लिपिं सञ्जप्य लयाङ्गं कृत्वा [6] विघ्नमन्त्रं दुर्गामन्त्रं च सञ्जप्य मन्त्रोदयप्राणायामं कुर्यात्। ह ह ह इति प्रजप्य मूलाधारस्थं जीवं परमात्मनि विलाप्य मूलमन्त्रं जप्त्वा मूलमन्त्रात्मकं ध्यात्वा प्रणवसहितमूलं प्रजप्य हृदयपद्मे सुयोज्य मूलमन्त्रेण पञ्चविंशतिसंरव्यं प्राणायामत्रयं कृत्वा पीठन्यासं कुर्यात्।

---

१ लमिति पृथिवी बीजेन काठिन्यं हमित्याकाशबीजेन सुषरीकरणं च प्राणायामेन सम्पाद्य ,सोऽहमिति जीवमायोजयेत्। २ क्रमेण दक्षिणवामहस्तयोः, दक्षिणे ह्रस्वैः वामे दीर्घैः शिष्टैर्दशभिः स्वरैः। ३ व्यापकमक्षरं यादिः। ४ क,ख इति। ५ कं,खं इत्यादि। ६ गणानान्त्वेति ऋक् मालामन्त्रश्चेति विमर्शिनी।

***पीठन्यासः***- मूर्धनि गुरून् मूलाधारे गणपतिं च न्यस्य तदादि हृदयान्तं आधारशक्त्यादिकं न्यस्य दक्षिणादि ऊर्वंसयुग्मोरुनाभिमूलपार्श्वास्यपार्श्वेषु धर्माद्यष्टकं विन्यस्य सत्वादित्रयं मध्ये सूत्ररूपेण,मायां विद्यां च वितानरूपेण च न्यस्य पद्मादि हृदये न्यस्य हृदयदलकर्णिकासु मध्ये च नवशक्तीः न्यस्य समष्ट्या व्यापकं कुर्यात्।

पुनः हृदयपद्मे मूर्तिं सङ्कल्प्य आवाह्याङ्गं कृत्वा[1] वं अबात्मना जलं कल्पयामि। लं पृथिव्यात्मना गन्धं कल्पयामि, हं आकाशात्मना पुष्पं कल्पयामि, यं वाय्वात्मना धूपं कल्पयामि, रं अग्न्यात्मना दीपं कल्पयामि, वं अबात्मना नैवेद्यं कल्पयामि। इति मानसपूजां विधाय।

पुनः मूलमन्त्रेण प्राणायामं कृत्वा तत्तेजः अञ्जलौ निपात्य करन्यासादिकं कुर्यात्।

***मूलाक्षरन्यासः***- करयोर्दक्षिणवामक्रमेण तलपृष्ठपार्श्वेषु प्रणवपुटितमूलमन्त्रेण व्याप्य प्रणवपुटितनमोन्तानि मूलाक्षराण्यङ्गुलीषु स्वस्वागमोक्तप्रकारेण न्यसेत्। अष्टाक्षरविषये- दक्षिणतर्जन्यादि वामतर्जन्यन्तः सृष्टिन्यासः, दक्षिणतर्जन्यादि दक्षिणकनिष्ठान्तः, वामतर्जन्यादि वामकनिष्ठान्तः स्थितिन्यासः। वामतर्जन्यादि दक्षिणतर्जन्यन्तः संहारन्यासः, पुनः सृष्टिन्यासं स्थितिन्यासं च कुर्यात्। अष्टाङ्गानि सृष्टिन्यासवत्,[2]। पञ्चाङ्गानि अंगुष्ठाद्यङ्गुलीषु युगपन्न्यसेत्। शिवे पञ्चाक्षरे मं तत्पुरुषाय तर्जनीभ्यां नमः, शिं अघोराय मध्यमाभ्यां नमः, यं सद्योजाताय कनिष्ठिकाभ्यां नमः, वां वामदेवाय अनामिकाभ्यां नमः, नं ईशानायाङ्गुष्ठिकाभ्यां नमः इति न्यसेत्। सुब्रह्मण्ये मूलाक्षराणि अङ्गुष्ठादितलान्तं युगपत् न्यसेत्। शास्तरि गणपतौ सुब्रह्मण्ये च अङ्गुष्ठादितलान्तं स्वस्वषण्मन्त्रान् न्यसेद्वा[3]। दुर्गायां- सें दुर्गायै नमः। दं आर्यायै नमः। वें देव्यै नमः। तं भगवत्यै नमः। जां कन्यकायै नमः इत्यङ्गुलीषु युग्मतः तलरहितं न्यसेत्। सर्वत्र षडङ्गानि अङ्गुष्ठादितलान्तं युगपत् न्यसेदिति प्रायेण करन्यासः। पुनः मूलमन्त्रेण हस्तद्वयेन देहे त्रिवारं व्यापकं कृत्वा षडध्वन्यासं लिपितत्वन्यासं वा कुर्यात्॥

---

१ जलादि षडुपहाराः, क्वचित् गन्धादि पञ्चोपहाराः। विशेषस्तु द्वादशपटले तन्त्रसमुच्चये द्रष्टव्यः। २ सृष्टिस्थानेषु न्यसेदित्यर्थः। ३ वेति समुच्चयार्थ इति विमर्शिन्यां प्रायश अस्मिन् ग्रन्थे वाकारः समुच्चये विकल्पे चोपयुज्यते। प्रायश उपदेश एवात्र शरणम्। एवमुत्तरत्र व्यवस्थापनीयम्।

अथ स्वस्वमूलाक्षरन्यासः। वैष्णवे शङ्करनारायणे शास्तरि च[1]। ओं ओं ओं नमः, ओं नं ओं नमः, ओं मों ओं नमः, ओं नां ओं नमः, ओं रां ओं नमः, ओं यं ओं नमः, ओं णां ओं नमः, ओं यं ओं नमः[2]।

ओं हृं ओं नमः, ओं शिं ओं नमः, ओं वं ओं नमः, ओं नां ओं नमः, ओं रां ओं नमः, ओं यं ओं नमः, ओं णां ओं नमः, ओं यं ओं नमः[3]।

ओं घ्रूं ओं नमः, ओं नं ओं नमः, ओं मं ओं नमः, ओं पं ओं नमः, ओं रां ओं नमः, ओं यं ओं नमः, ओं गों ओं नमः, ओं प्त्रें ओं नमः इति च शिरोनेत्रास्यहृदयनाभिगुह्यजानु पादेषु[4]न्यसेत्।

दुर्गायां- ओं ओं ओं नमः, ओं ह्रीं ओं नमः, ओं दुं ओं नमः, ओं दुं ओं नमः, ओं र्गां ओं नमः, ओं यैं ओं नमः, ओं नं ओं नमः, ओं मं ओं नमः इति पूर्वोक्तस्थानेषु न्यसेत्।

दुंबीजरहिते मूलमन्त्रे जानुरहितेषु एषु स्थानेषु न्यसेत् इति सृष्टिन्यासः, नाभ्यादिहृदयान्तः स्थितिन्यासः, पादादिमूर्धान्तः संहारन्यासः। पुनः सृष्टिन्यासं, स्थितिन्यासं च कुर्यात्[5]।

शिवे- षडक्षरे मं तत्पुरुषवक्त्राय नमः। शिं अघोरहृदयाय नमः। यं सद्योजातपादाभ्यां नमः। वां वामदेवगुह्याय नमः। नं ईशानमूर्ध्ने नमः। मं तत्पुरुषपूर्ववक्त्राय नमः। शिं अघोरदक्षिणवक्त्राय नमः। यं सद्योजातपश्चिमवक्त्राय नमः। वां वामदेवोत्तरवक्त्राय नमः। नं ईशानोर्ध्ववक्त्राय नमः इति[6] न्यसेत्[7]। अथवा शिवे-ओं नं ईशानमूर्ध्ने नमः, ओं मं तत्पुरुषवक्त्राय नमः, ओं शिं अघोरहृदयाय नमः, ओं वां वामदेवगुह्याय नमः, ओं यं सद्योजातपादाभ्यां नमः, ओं नं ईशानायोर्ध्ववक्त्राय नमः, ओं मं तत्पुरुषाय पूर्ववक्त्राय नमः, ओं शिं अघोराय दक्षिणवक्त्राय नमः, ओं वां वामदेवाय

---

१ मूर्धनेत्राननहृदयनाभिषु लिङ्गे जानुनोः पादयोश्च तारपुटितान् नमोन्तान् मन्त्रवर्णान् न्यसेत् इति सृष्टिः। २ इति विष्णौ। ३ इति शङ्करनारायणे। ४ इति शास्तरि। मध्यमाङ्गुल्या मूर्धनि, नयनयुग्मे तर्जनीमध्यमाभ्यां, आस्ये अङ्गुष्ठानामिकाभ्यां, हृदि अङ्गुष्ठतर्जनीभ्यां, नाभौ कनिष्ठाङ्गुष्ठाभ्यां, गुह्ये अङ्गुष्ठेन तर्जन्यादि चतसृभिर्वा। जान्वोः अङ्गुष्ठरहिताभिः कनिष्ठिकारहिताभिर्वा चतसृभिः, पादयुगे समस्ताङ्गुलीभिर्न्यसेत्। ५ एतत्त्रये हरीशे आदिमं प्रणवं अन्तिमं नमः शब्दं, शास्तरि प्रणवं च वर्जयेत्। ६ वक्त्रहृदयपादगुह्यमूर्धसु पूर्वादि मुखेषु च। ७ ईशानतत्पुरुषाघोरवामदेवसद्योजातेषु अङ्गुष्ठादि कनिष्ठिकान्ता अङ्गुल्यः केवलाः, अङ्गुष्ठोपगृहीता वा ताः, ज्येष्ठा तर्जनीरहिता।

उत्तरवक्त्राय नमः, ओं यं सद्योजाताय पश्चिमवक्त्राय नमः इति न्यसेत्।

सुब्रह्मण्ये- शिरोमुखहृदयगुह्यजानुपादेषु षण्मन्त्रान्, वं नमः, चं नमः, भुं नमः, वें नमः,नं नमः, मः नमः इति मूलाक्षराणि च न्यसेत्।

गणपतौ- एषु स्थानेषु षण्मन्त्रान् न्यसेत्।

शास्तरि- शिरोमुखहृदयनाभिगुह्यपादेषु षण्मन्त्रान् न्यसेत्[1]। सर्वेषु हृदय फालान्त, शिखा, बाहुद्वयमध्य, नेत्र,करद्वयतलेषु स्वस्वषडङ्गानि न्यसेत्। वैष्णवे सुब्रह्मण्ये दुर्गायां च अस्त्रानन्तरं नेत्रं न्यसेत्। पञ्चाङ्गानि नेत्ररहितानि न्यसेत्। अष्टाङ्गानि उदरपृष्ठसहितानि न्यसेत्। पुनः भूषणन्यासं, आयुधन्यासं च यथायोग्यं कृत्वा हृदये देवं ,सङ्कल्प्य मानसपूजां कृत्वा मूलमन्त्रान् यथाशक्ति जपित्वा पुनः व्याप्य लयाङ्गं कृत्वा शङ्खपूरणं कुर्यात्।

***शङ्खपूरणम्*** - अग्रतः[2] चतुरस्रं स्थण्डिलं कृत्वा प्रणवेन गन्धपुष्पाक्षतान्निक्षिप्य स्वस्वास्त्रेण शङ्खाङ्घ्रि शङ्खमपि प्रक्षाल्य, वह्निमण्डलेनाङ्घ्रि सूर्यमण्डलेन शङ्खं निधाय हृदयमन्त्रेण गन्धपुष्पाक्षतान्निक्षिप्य शिरोमन्त्रेण[3] जलैः सम्पूर्य अष्टगन्धं विलोड्य [4] शिखामन्त्रेण गालिनीमुद्रया गालयित्वा [5] कवचमन्त्रेण आच्छाद्य [6] अस्त्रमन्त्रेण संरक्ष्य, गङ्गे च यमुने चैवेति[7] तीर्थमावाह्य [8][9] स्वमूलेनावाह्याङ्गं कृत्वा सम्पूज्य व्याप्य लयाङ्गं कृत्वा मूलमन्त्रमष्टवारं सञ्जप्य आप्लाव्य परमीकृत्य वर्धन्यां प्रतिषिच्य पूजाद्रव्याण्यात्मानं च त्रिरभ्युक्षेत्।

***आत्माराधनम्***- आत्मनि पीठं सम्पूज्य अं नमः, उं नमः, मं नमः इति मूलाधारहृदयद्वादशान्तपद्मेषु सम्पूज्य हृदयपद्मे (ओं इति) एकीकृत्य अङ्गं कृत्वा सम्पूज्यार्घ्यं दत्वा ललाटगलांसद्वयहृदयेषु[10] शिवे- पञ्चब्रह्मभिः अन्येषु स्वस्वपञ्चमन्त्रेण बिम्बे मूलमन्त्रेण च पुष्पमाराध्य पुनः सम्पूज्य

---

१ पुनः मूलाक्षराणि च न्यसेत्। दुर्गायां मूर्धादिक्रमेण पञ्चदुर्गामन्त्रान् न्यसेत्। २ **गोमयवारिणा इति शेषः**। ३ लिपिप्रतिलोमसहितेन। ४ मं वह्निमण्डलाय नमः, अं सूर्यमण्डलाय नमः, उं सोममण्डलाय नमः इति मन्त्रेण शंखपादं शंखं जलं च प्रार्च्य। ५ गरुडमुद्रया सह निर्विषीभवेति निर्विषीकरणं कृत्वा, सुरभिमुद्रया अमृतीकृत्य, नेत्रमन्त्रेण निरीक्ष्य। ६ करयुगलेन। ७ गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु।। ८ रवेर्मण्डलात्। ९ पीठं सम्पूज्य। १० विष्णौ-गन्धेन द्वादश नामभिः ऊर्ध्वपुण्ड्राण्यनुलिम्प्य शिवे- पञ्चब्रह्मभिः फाले गले अंसयुगले हृदि, अन्येषु मूलत एषु स्थानेषु तिर्यक्पुण्ड्राण्यनुलिम्प्य।

पूजकपूज्ययोरैक्यं भावयित्वा व्याप्य लयाङ्गं कृत्वा सम्पूज्यार्घ्यं दत्वा तत्स्थलं शङ्खादिकं च शोधयित्वा अर्घ्यादिकं संसाद्य, पीठे स्वस्वशक्तिबीजमन्त्रेण, बिम्बे मूलमन्त्रेण च पुष्पमाराध्य तालत्रयदिग्बन्धनाग्निप्राकारान् कुर्यात्।

***पीठपूजा***- स्वस्वमूलमन्त्रेण उदग्भागे गुं गुरून् दक्षिणभागे गं गणपतिं च सम्पूज्य पीठस्याधोभागमारभ्य उपर्युपरि आधारशक्तिं मूलप्रकृतिं आदिकूर्मं अनन्तं पृथिवीं च पूजयेत्। अग्न्यादिकोणेषु पीठपादं सङ्कल्प्य धर्मं, ज्ञानं, वैराग्यं, ऐश्वर्यं च, प्रागादिदिक्षु गात्रं सङ्कल्प्य अधर्मं, अज्ञानं, अवैराग्यं, अनैश्वर्यं च अर्चयेत्[1]। सूत्रत्रये सत्वं रजः तमश्च सम्पूज्याच्छादनरूपं वस्त्रद्वयं च सङ्कल्प्य मायां विद्यां च सम्पूज्य तन्मध्ये पद्मं च सम्पूजयेत्। पद्मस्य दलकेसरकर्णिकासु परितः सूर्यमण्डलं, सोममण्डलं, वह्निमण्डलं च, आत्मानं, अन्तरात्मानं, परमात्मानं च, उपरि ज्ञानात्मानं च सम्पूज्य पद्मस्य केसरस्थानेषु प्रागाद्यष्टदिक्षु, कर्णिकायां च नवशक्तीः सम्पूज्य स्वस्वसमष्टिमन्त्रेण पूजयेत्।

दुर्गां विना पद्मान्तं पीठपूजाक्रमः समानः। वैष्णवे विद्यांते अनन्तं पुनः पद्मं च[2] इति विशेषः। दूर्गायां विष्णौ शङ्करनारायणे च मण्डलात्मत्रयान्ते नवशक्तयः, अन्येषु नवशक्त्यन्ते मण्डलात्मत्रयमिति विशेषः। दुर्गायां पीठे अधः, प्रकृतिं कुर्मं च प्रागादिगात्रेषु सौम्यां, भद्रां, जयां, आर्यां च, अग्न्यादि पीठपादेषु बलं,प्रबलं, सुबलं, महाबलं च सम्पूज्य पुनः सत्वरजस्तमांसि मायां विद्यां कन्दं नालं पद्मं अ,उ,रं सहितं मण्डलत्रयं पूजयेत् इति विशेषः। इति भेदः।

***प्रयोगः***- ओं गुं गुरुभ्यो नमः। गं गणपतये नमः। आधारशक्त्यै **मूलप्रकृत्यै**। **आदिकूर्माय**। **अनन्ताय**। **पृथिव्यै**। **धर्माय**। **ज्ञानाय**। **वैराग्याय**। **ऐश्वर्याय**।। **अधर्माय**। **अज्ञानाय**। **अवैराग्याय**। **अनैश्वर्याय**। सं सत्वाय। रं रजसे। तं **तमसे**। **मं मायायै**। **विं विद्यायै**। पं पद्माय। इति दुर्गां विना समानम्। वैष्णवे- विं **विद्यायै अं अनन्ताय**। पद्माय इति विशेषः। अं सूर्यमण्डलाय। उं सोम- **मण्डलाय**। **मं वह्निमण्डलाय**। अं आत्मने। उं अन्तरात्मने। मं परमात्मने। ओं **ह्रीं ज्ञानात्मने नमः**[3] इति। दुर्गायां तु-गुं गुरुभ्यो नमः। गं गणपतये नमः। **आधारशक्त्यै**। ह्रीं प्रकृत्यै। कं कूर्माय। सं सौम्यायै। भं भद्रायै।

---

१ **सत्वादिषु सर्वत्राद्यक्षराणि** सूर्यादि मण्डलत्रये अं उं मं, आत्मादित्रये अं,उं,मं, ज्ञानात्मनि **शक्तिबीजं** च योजयेत्, २ पूजयेदिति शेषः। एवमुत्तरत्रापि यत्र द्वितीयान्तं तत्र योग्यक्रियापदमध्याहार्यम्। ३ विष्णौ श्रीं ज्ञानात्मने इति ।

जं जयायै। आं आर्यायै। भृं बलाय। भृं प्रबलाय। भ्लृं सुबलाय। भ्लृं महाबलाय। सं सत्वाय। रं रजसे। तं तमसे। मं मायायै। विं विद्यायै। क्लं कन्दाय। नं नाळाय। लां पद्माय। अ सूर्यमण्डलाय। उ सोममण्डलाय। रं वह्निमण्डलाय। अं आत्मने। उं अन्तरात्मने। मं परमात्मने। ओं ह्रीं ज्ञानात्मने नमः।

***पृथङ्नवशक्त्यादिकं लिख्यते-*** विष्णौ- विमलायै। उत्कर्षिण्यै। ज्ञानायै। क्रियायै। योगायै। प्रह्व्यै। सत्यायै। ईशानायै। अनुग्रहायै इति विष्णौ शङ्करनारायणे च नवशक्तयः। वामायै। ज्येष्ठायै। रौद्र्यै। काळ्यै। कलविकलिन्यै। बलविकलिन्यै। बलप्रमथिन्यै। सर्वभूतदमन्यै। मनोन्मन्यै इति शिवे। आं प्रभायै। ई मायायै। ऊं जयायै। एं सुक्ष्मायै। ऐं विशुद्धायै। ओं नन्दिन्यै। औं सुप्रभायै। अं विजयायै। अः सर्वसिद्धिदायै इति दुर्गायाम्। यां विद्यायै। रां शान्त्यै। लां स्मृत्यै। वां मेधायै। शां प्रज्ञायै। षां कान्त्यै। सां द्युत्यै। हां धृत्यै। ळां [१] व्यापिन्यै। इति सुब्रह्मण्ये। तीव्रायै। ज्वालिन्यै। नन्दायै। भोगदायै। कामरूपिण्यै। उग्रायै। तेजोवत्यै। सत्यायै। विघ्ननाशिन्यै इति गणपतौ। दीप्त्यै। सत्यायै। प्रभायै। कान्त्यै। विभूत्यै। मालिन्यै। संसृष्ट्यै। पुष्ट्यै। कामरूपिण्यै इति शास्तरि। शिवे सुब्रह्मण्ये गणपतौ शास्तरि च नवशक्त्यन्ते मण्डलात्मत्रयम्। अन्येषु मण्डलात्मत्रयान्ते नवशक्तयः।

***पीठपूरणाय समष्टिमन्त्राः-*** ओं नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगयोगपद्मपीठात्मने नमः इति वि ौ शङ्करनारायणे च समष्टिमन्त्रः। ओं नमो भगवते सकलगुणात्मशक्तियुक्ताय अनन्ताय योगपीठात्मने नमः इति शिवे। ओं वज्रनखदंष्ट्रायुधाय महासिंहाय हूं [२] नमः इति दुर्गायाम्। ओं ह्रीं गं सर्वशक्तिकमलासनाय नमः इति गणपतौ। ओं प्रभूतसिंहासनाय सर्वशक्तिमयाय पद्माय नमः इति शास्तरि। ओं सर्वशक्तियुक्तमयूरकमलासनाय नमः इति गुहे। इति समष्टिमन्त्राः।

इति स्वस्वोक्तक्रमेण जलगन्धपुष्पधूपदीपैः पीठं सम्पूज्य पुष्पैः शक्तिं सन्तर्प्य। ओं नमो नारायणाय श्री विष्णुमूर्तये नमः, ओं नमः शिवाय

---

१ ळकारो न ग्राह्य इत्युक्तं विवरणे। अतः परमत्र क्षकारेण भवितव्यमिति भाति ळलयोरभेदेन द्विप्रयोगोऽपि वारितो भवति। ळकारः साम्प्रदायेन लिखितः। तस्मात् ळलयोरभेदो मन्त्रशास्त्रे नास्तीत्यवगम्यते। २ हुमिति पाठान्तरम्।

सदाशिवमूर्तये नमः इत्याद्युक्त्वा पुष्पमाराध्य मूर्तिं सङ्कल्प्य तत्तन्मन्त्रमूर्तौ मनुचैतन्यमावाहयेत्। कराभ्यां पुष्पगन्धजलं[१] गृहीत्वा प्रणवत्रयमुच्चार्य उपचारेण स्तुत्वा स्वहृदयपङ्कजादुद्गमय्य प्रणवेन बन्धछेदनं कृत्वा पुनः प्रणवेन परमात्मनि विलाप्य मूलमन्त्रेण मन्त्रात्मना परिणामं कृत्वा ओं विष्णुभगवन्[२] इत्यादि सम्बुध्यन्तं, आगच्छागच्छ इत्युक्त्वा तच्चैतन्यं पुष्पे अवतार्य ओं आवाहयामीत्युक्त्वा[३] बिम्बमूर्ध्नि न्यसेत्। आवाहितो भव। संस्थापितो भव। सन्निरुद्धो भव [४]। सान्निध्यं कुरु[५] प्रसीद इति पञ्चमुद्राः प्रदर्शयेत्। पुनः मूलमन्त्रं जपन् अष्टगन्धलिप्तकरद्वयेन मूर्धादि पादान्तं त्रिर्व्याप्य षडध्वन्यासं वा लिपितत्वमन्त्रन्यासं वा कृत्वा तदन्ते मूलाक्षराङ्गायुधभूषणन्यासं विधाय तत्तन्मन्त्रोक्तक्रमेण ध्यायेत्।

भास्वद्भास्वदिति विष्णोर्ध्यानम्[६]। चक्राय नमः। शङ्खाय नमः। गदायै नमः। पद्माय नमः। किरीटाय नमः। मुकुटाय नमः। मकरकुण्डलाय [७] नमः। वनमालायै नमः। श्रीवत्साय नमः। श्री कौस्तुभाय नमः। श्रियै नमः। पुष्ट्यै नमः। वैनतेयाय नमः इत्यायुधादीनि। बिभ्रद्दोर्भिरित्यादि शिवे ध्यानम,[८]।परशवे।। हरिणाय। अभयाय। वरदाय इत्यायुधानि। ध्यायेज्जटामकुटेत्यादि शङ्करनारायणे ध्यानम्[९]। शूलायाचक्राय। कपालाय। शङ्खाय इत्यायुधानि। दुर्गां ध्यायतु इत्यादि दुर्गाध्यानम्[१०]। चक्राय। शङ्खाय। शरायाधनुषे। चापशरयोः स्थाने अभयाय वरदाय। तयोः स्थाने कटिबन्धाय। वरदाय इत्यायुधानि। स्फुरन्मकुटपत्रकुण्डलेत्यादि गुहे ध्यानम् [११]। शक्त्यै। वज्राय। यद्वा वरदाय।

---

१ गन्धजलक्लिन्नपुष्पाणि। २ सदाशिव भगवन् इति पाठान्तरम्। ३ आवाहनपरिपाटी सूचिता। ४ सन्निहितो भवेति विवरणे। ५ कुरु कुरु इति ख

६ भास्वद्भास्वत्सहस्रप्रभमरिदरकौमोदकीपङ्कजानि द्राघिष्ठैर्बाहुदण्डैर्दधतमजितमापीतवासो वसानम्। ध्यायेत्स्फायत्किरीटो वलमकुटमहाकुण्डलं वन्यमालावत्सश्रीकौस्तुभाढ्यं स्मितमधुरमुखं श्रीधराश्लिष्टपार्श्वम्।। ७ कुण्टलाभ्यामिति विमर्शिनी।

८ बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः सर्वालङ्कारदीप्तः सरसिजनिलयो व्याघ्रचर्मात्तवासाः। ध्येयो मुक्तापरागामृतरसकलिताद्रिप्रभः पञ्चवक्त्रस्त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिश्कलातुङ्गमौलिः।। ९ ध्येयो(ध्यायेत्)जटामकुट चन्द्रकलेद्धमूर्धात्र्यक्षरत्तरक्ष्वजिनपीतदुकूलवासाः। ईशाच्युतस्त्रिशिखचक्रकपालशङ्खान् बिभ्रत्सितासितवपुर्द्व्युचितात्मभूषः।। १० दुर्गां ध्यायतु दुर्गतिप्रशमनीं दूर्वादलश्यामलां चन्द्रार्धोज्वलशेखरां त्रिनयनामापीतवासोवसाम्। चकं शङ्खमिषू धनुश्च दधतीं कोदण्डबाणांशयोर्मुद्रे वाऽभयकामदे साकटिबन्धाभीष्टदां वाऽनयोः।।

११ स्फुरन्मकुटपत्रकुण्डलविभूषितं चम्पकस्रजाकलितकन्धरं करयुगेन शक्तिं पविम्।

कटिबन्धाय इत्यायुधद्वयम्। विघ्नेशं सपरश्वधेत्यादि गणपतेर्ध्यानम्[१]। परश्वधाय। अक्षवटिकायै[२]। स्वविषाणाय। लड्डुकाय इति। यद्वा पाशाय। अङ्कुशाय। स्वविषाणाय। वरदाय। बीजापूराय इत्यायुधानि। स्निग्धाराळ विसारीत्यादि शास्तृध्यानम्[३]। शराय। धनुषे। प्रभायै। सत्यकाय इत्यायुधानि। इति स्वस्वागमोक्तप्रकारेण यथावत् ध्यात्वा मूलमन्त्रेण श्रीपादद्वये पुष्पं आराध्य आसनमिदं इत्युक्त्वा पुनः स्वागतमिति वदेत्। पुनः उपहारान् दद्यात्[४]। शिवे शङ्करनारायणे गणपतौ च पाद्यं, अर्घ्यं, आचमनं इत्यादि क्रमात् उपहारान्, विष्णौ दुर्गायां सुब्रह्मण्ये शास्तरि च अर्घ्यं पाद्यं आचमनमित्यादि क्रमात् मन्त्री प्रायेण सकलेषु षोडशोपहारान् दद्यात्। (तद्यथा)मन्त्री हस्ताभ्यां गृहीतेन शङ्खेन देवस्य दक्षिणकरे मूर्धनि वा सङ्कल्प्य अग्रभागेऽर्घ्यं, पादयोः पाद्यं सङ्कल्प्याग्रभागे (पाद्यं )दद्यात्। आचमनं मधुपर्कं पुनराचमनं च हस्ते सङ्कल्प्य अग्रभागे दद्यात्। स्नानं वस्त्रद्वयं उपवीतं भूषणं च दद्यात्। शिवे शङ्करनारायणे गणपतौ पाद्यमिदं, अर्घ्यमिदं,आचमनमिदं, मधुपर्कमिदं, पुनराचमनमिदं,स्नानमिदं, अङ्गवस्त्रमिदं, वस्त्रमिदं, यज्ञोपवीतमिदं, भूषणमिदं अन्येषु चतुर्षु अर्घ्यमिदं पाद्यमिदं इत्यादि क्रमात् दद्यात्। अथ जलगन्धादिभिः देवं[५] पूजयेत्। पुनराचमनान्ते प्रणवेन पुष्पाञ्जलिं कृत्वा परिवारान्विहृत्य[६] देवाय परिवारेभ्यश्च पाद्यादीन् अर्घ्यादीन् वा त्रीनुपहारान् दद्यात्।

***आवरणम्***- शिवे षडावरणं, विष्णौ दुर्गायां पञ्चावरणं, शङ्करनारायणे सुब्रह्मण्ये गणपतौ शास्तरि च चतुरावरणम्। शिवे सुब्रह्मण्ये च मूर्त्याद्यावरणं, अन्येषु पञ्चसु देवेषु अङ्गाद्यावरणम्। विष्णौ पूर्वाद्यष्टदिक्षु अष्टाङ्गानि,

---

दधानमथवा कटीकलितवामहस्तेष्टदं गुहं घुसृणभासुरं स्मरतु पीतवासोवसम्।।

१ विघ्नेशं सपरश्वधाक्षपटिकादन्तोल्लसल्लडडुकैर्दोर्भिः पाशसृणिस्वदन्तवरदाढ्यैर्वा चतुर्भिर्युतम्। शुण्डाग्राहितबीजपूरमुरुकुक्षिं त्रीक्षणं संस्मरेत् सिन्धू (न्दू) राममिभास्यमिन्दुशकलाद्याकल्पमब्जासनम्।। २ पटिकेति ख ३ स्निग्धारालविसारिकुन्तलभरं सिंहासनाध्यासिनं स्फूर्जत्पत्रसुक्लृप्तकुण्डलमथेष्वासभृद्दोर्द्वयम्। नीलक्षौमवसं नवीनजलदश्यामं प्रभासत्यकस्फायत्पार्श्वयुगं सुरक्तसकलाकल्पं स्मरेदार्यकम्।। ४ उपहारक्रमा मूले एवान्तं विव्रियन्ते। एते लक्षणरांहितोक्ता उपहाराः-पाद्यमर्घ्यं तथाचामं मधुपर्काचमं पुनः। स्नानवस्त्रोपवीतानि भूषणं गन्धमक्षतम्। पुष्पं धूपं तथा दीपं नैवेद्यं च प्रदापयेत्। उद्वासनार्घ्यपर्यन्तमुपचारास्तु षोडश।। ५ सुमनोधूपदीपैः नैवेद्यैः वन्दनैः। ६ स्नानात् प्राक् इति शेषः।

पूर्वादि चतुर्दिक्षु कवचान्तानि, अग्न्यादिकोणेषु अस्त्रं इति पञ्चाङ्गानि। दुर्गायां पञ्चांगवत् अग्रे नेत्रं च पूजयेत्। शिवे शङ्करनारायणे सुब्रह्मण्ये गणपतौ शास्तरि च अग्नीशाननिर्ऋतिवायुदिक्षु हृदयादि कवचान्तान्यङ्गानि, अग्रे नेत्रं, पूर्वादि चतुर्दिक्षु अस्त्रं, सुब्रह्मण्ये अस्त्रान्ते अग्रे नेत्रमिति षडङ्गानि पूजयेत्॥

विष्णौ- अङ्गावरणान्ते पूर्वे पश्चिमे च वैनतेयं याम्ये सुदर्शनं, सौम्ये कौमोदकीं, अग्न्यादि कोणेषु पाञ्चजन्यं वरुणवाय्वन्तराळे शार्ङ्गं वरुणनिर्ऋत्योरन्तराळे इषुधी, यमनिर्ऋत्योरन्तराळे खड्गं, सोमवाय्वोरन्तराळे खेटकं, यमाग्न्योरन्तराळे श्रियं,सोमेशानयोरन्तराळे पुष्टिं पूर्वे वनमालां, इन्द्राग्न्योरन्तराळे श्रीवत्सं, इन्द्रेशानयोरन्तराळे श्रीकौस्तुभं च पूजयेत्। केषांचित्पक्षे एतदेवायुधादीनां यथायोग्यं व्यत्यासं कुर्यात्[1]।

शिवे- तत्पुरुषाघोरसद्योजातवामदेवेशानान् पूर्वदक्षिणपश्चिमोत्तरेशानदिक्षु सम्पूजयेत्। पुनरङ्गावरणम्। अनन्तं, सूक्ष्मं, शिवोत्तमं,एकनेत्रं च पूर्वादि दिक्षु, एकरुद्रं त्रिमूर्तिं श्रीकण्ठं शिखण्डिनं ईशानादि कोणेषु पूजयेत्। उमां, चण्डेश्वरं, नन्दिनं, महाकालं,गणेश्वरं,वृष[2] भृङ्गिरिटिं स्कन्दं च उत्तरादि वाय्वन्तदिक्षु पूजयेत्।

गुहे- पूर्वादि दिक्षु सनत्कुमारं,स्कन्दं, बाणं, हेमचूडं, ईशानादि कोणेषु भद्रसेनं भवपुत्रं देवसेनं देवयानीं च पूजयेत्।

शिवहरौ- अङ्गावरणान्ते तत्पुरुषाघोरवामदेवसद्योजातान् पूर्वदक्षिणोत्तरपश्चिमेषु सम्पूज्य अग्न्यादिकोणेषु वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धान् सम्पूज्य पद्मान्ते अग्रभागे वृषभसहितं गरुडं पूजयेत्।

दुर्गायां- अङ्गावरणान्ते पूर्वाद्यष्टदिक्षु जयां,विजयां,कीर्तिं, प्रीतिं,प्रभां,श्रद्धां,मेधां श्रुतिं पूनः पूर्वाद्यष्टदिक्षु चक्रं,शङ्खं गदां खड्गं पाशं अंकुशं शरं धनुश्च पूजयेत्। जयादौ चक्रादौ च स्वस्वाद्यक्षरं बीजं, कीर्तेः कं बीजं प्रीतेः पं बीजं,मेधायां मं बीजं, चक्रस्य रं बीजं च योजयेत्। चक्रादीनि सम्बुध्यन्तानि फडन्तानि च।

---

१ देवे पश्चिममुखे रातीति शेषः७। ७२ श्लोकव्याख्याने (उभयोरपि व्याख्ययोः)पूर्वमुखे पश्चिममुखे च देवे समानमेव कैश्चित्तु विपर्यस्यते इत्युक्तेः, श्लोकेऽपि व्यत्यस्यते कैश्चिदयं क्वचिच्च इत्युक्तेश्च देवालयमुखभेदेन एषां व्यत्यासो नावश्यक इति भाति।
२ वृषभमिति पा

*शास्तरि*- अङ्गान्ते पूर्वादि दिक्षु हुं फट् छुरिकां,हुं फट् खड्गं हुं फट् धनुः, हुं फट् शरं,ईशे-मधुकरं,अग्नौ शम्बरं च पूजयेत्।

गणपतौ- अङ्गावरणान्ते पूर्वाद्यष्टदिक्षु गणञ्जयं विघ्नेशं, एकदंष्ट्रं वीरं गजवक्त्रं लम्बोदरं वरदं भक्तप्रियं[1] च पूजयेत्। इति पृथग्भूतावरणानि। अथं समानावरणं-यथा मन्त्रवित् पूर्वाद्यष्टदिक्षु इन्द्रं अग्निं, यमं,निर्ऋतिं,वरुणं, वायुं,सोमं,ईशानं,निर्ऋतौ-अनन्तं,ईशे ब्रह्माणं च पूजयेत्। इन्द्रादेर्बहिः पूर्वाद्यष्टदिक्षु वज्रं,शक्तिं, दण्डं, खड्गं, पाशं, अङ्कुशं, गदां,शूलं,चक्रं,पद्मं च पूजयेत्। पुनः सर्वेषु देवेषु वज्राद्यन्ते विष्वक्सेनादिकं स्वस्वनिर्माल्यधारिणं सोमेशानयोर्मध्ये पूजयेत्।

अथ तत्तन्मन्त्राः क्रमेण लिख्यन्ते- विष्णौ आवरणम्। अङ्गावरणान्ते वैनतेयाय,२ सुदर्शनाय,कौमोदक्यै पाञ्चजन्याय नमः इति चतुर्वारं। शार्ङ्गाय। इषुधिभ्यां खड्गाय। खेटाय। श्रियै। पुष्ट्यै। वनमालायै। श्रीवत्साय। श्रीकौस्तुभाय इति [तृतीयम्]। इन्द्राय। अग्नये। यमाय। निर्ऋतये। वरुणाय। [illegible]वे। सोमाय। ईशानाय। अनन्ताय। ब्रह्मणे इति [चतुर्थं ]वज्राय। शक्त्यै। [illegible]डाय। खड्गाय। पाशाय। अङ्कुशाय। गदायै। त्रिशूलाय। चक्राय। पद्माय। [गरु[illegible]ाय]विष्वक्सेनाय। इति पञ्चमावरणम्। सुब्रह्मण्ये-,सनत्कुमाराय। स्कन्दाय। बा[illegible]ाय। हेमचूडाय। भद्रसेनाय। भवपुत्राय। देवसेनाय। देवयान्यै नमः। [इति प्रथमं ] अङ्गैः [ द्वितीयं] इन्द्रादि [ तृतीयं],वज्रादि [चतुर्थं ] , अन्ते [मयूराय ] धूर्तसेनाय नमः इति। शिवे- तत्पुरुषाय नमः। अघोराय। सद्योजाताय। वामदेवाय। ईशानाय नमः इति [प्रथमं] । अङ्गैः [द्वितीयं] । अनन्ताय। सूक्ष्माय शिवोत्तमाय। एकनेत्राय। एकरुद्राय। त्रिमूर्तये। श्रीकण्ठाय। शिखण्डिने नमः इति [तृतीयं] । उमायै। चण्डेश्वराय । नन्दिने। महाकालाय। गणेश्वराय। वृषाय[2]। भृङ्गिरिटये। स्कन्दाय नमः इति [चतुर्थं] । इन्द्रादि [पञ्चमम्]। वज्रादि [षष्ठं] [वृषभाय] चण्डेश्वराय नमः [इत्यन्तं] । अथ दुर्गायाम्- अङ्गान्ते [प्रथम] । जं जयायै। विं विजयायै। कं कीर्त्यै । [पं प्रीत्यै] प्रं प्रभायै । श्रं श्रद्धायै। मं मेधायै। श्रुं श्रुत्यै इति [द्वितीय] । रं चक्र फण्नमः। शं शङ्ख फण्नमः। गं गदे फण्नमः। खं खड्ग फण्नमः। पां पाश फण्नमः। अं अङ्कुश फण्नमः। शं शर फण्नमः। धं धनुः फण्नमः इति [तृतीयं]। इन्द्रादि [चतुर्यं ]। वज्रादि [पञ्चमम्]। [महासिंहाय]

---

१ नाम्नामादौ गं गिं गुं गृं ग्लृं गें गों गं इति बीजाक्षराणि योजयेत्। २ वृषभायेति पा।

क्लीं मुण्डिन्यै नमः [इत्यन्तो] । अथ गणपतौ- अङ्गान्ते [प्रथमावरणम्] । गं गणञ्जयाय नमः। गिं विघ्नेशाय। गुं एकदंष्ट्राय। गृं वीराय। ग्लृं गजवक्त्राय। गें लम्बोदराय। गों वरदाय। गं भक्तप्रियाय नमः इति [द्वितीयम्] । इन्द्रादि [तृतीयम्] । वज्रादि [चतुर्थं]। [महाचाषाय] कुम्भोदराय नमः इति। शिवहरौ- अङ्गान्ते [प्रथमावरणम्]। तत्पुरुषाय। अघोराय। सद्योजाताय। वामदेवाय[१]। वासुदेवाय। सङ्कर्षणाय। प्रद्युम्नाय। अनिरुद्धाय इति [द्वितीयम् ] । इन्द्रादि [तृतीयम् ] वज्रादि [चतुर्थं] । वृषगरुडात्मने नमः इति। चण्डसेनाय नमः इति। अथ शास्तरि-अङ्गान्ते [प्रथमावरणम् ] । ओं हुं फट् क्षुरिकायै नमः। हुं फट् खड्गाय। हुं फट् धनुषे। हुं फट् शराय। मधुकराय। शम्बराय नमः इति [द्वितीयं]। इन्द्रादि [तृतीयं] । वज्रादि [चतुर्थं]। [अश्वाय] घोषवते नमः। इति परिवाराः। एवं स्वस्वपरिवारान् सङ्कल्प्य देवाय सर्वपरिवारेभ्यश्च पाद्यादित्रयं अर्घ्यादित्रयं वा दत्वा पुनः स्नानादिभूषणान्तानुपहारान् अङ्गावसानपरिवारेभ्यो दत्वा जलगन्धादिभिः सर्वं[२] पूजयेत्। प्रणवस्व-स्वोपचारमूलाक्षराङ्गायुधभूषणमन्त्रैर्जलगन्धपुष्पैर्देवं पूजयित्वाऽन्तरारभ्य निर्माल्यधार्यन्तान् स्वस्वपरिवारान् तत्तत्स्थानेषु पूजयेत्[३]। घण्टानादसहितेन[४] धूपेन नीचैः, दीपेनोच्चैरावरणसहितं देवं सम्पूज्य [देवाय] परिवारेभ्यः सकृत्सकृज्जलं दद्यात्। प्रणवेन पुष्पाञ्जलिं विधाय सर्वपरिवारान् देवे विलाप्य जलगन्धपुष्पै रभ्यर्च्य पाद्यादित्रयं अर्घ्यादित्रयं वा दद्यात्।

***नैवेद्यम्***- पुनः देवस्याग्रे स्थलं संशोध्य तत्र शुद्धं लौहं[५] पात्रं न्यस्य उपस्तीर्य निर्मलं हविः सम्पाद्य नाळिकेरकादळगुडादिकं तदुपरि न्यस्याज्येन द्रवीभूतं कुर्यात्। स्वस्वास्त्रमन्त्रेण सम्प्रोक्ष्य, संरक्ष्य वायुबीजं [६] जप्त्वा जलैः सम्प्रोक्ष्य निवेद्यान्नं संशोध्य दक्षिणहस्तेनाग्निबीजं [७] विलिख्य तेन हस्तेन सन्दह्य वामहस्तेनामृतबीजं [८] विलिख्य तेन हस्तेन हविराप्लाव्य मूलमन्त्रमष्टवारं सञ्जप्य मन्त्रामृतमयं सङ्कल्प्य सुरभिमुद्रां बध्वाऽमृतमयं भावयित्वा सम्पूज्य मलधातुरसांश

---

१ अनयोर्व्यत्ययो युक्तः २ देवमिति शेषः। पञ्चामृतादिभिरित्यपि योज्यम्। ३ मूलोक्ता पुष्पावृतिः सौकर्याय परित्यक्तेति भाति। ४ उद्घाटने कवाटस्य प्रस्तुते पुजने तथा। आवाहनार्घ्यस्नपने पुष्पधूपादिदित्सिते। नीराजने यवनिकासमुद्धारे निवेदने।। होमे भूतबलौ कर्मण्युद्वाहे चालनं मणेः। उत्सादने पिशाचादेः प्रीणनं च हरेः स्मृतम्।।

५ लौहं सौवर्णादि। ६ यमिति। ७ रमिति। ८ वमिति। ठमिति अमृतबीजं वमिति निर्विषीकरणबीजं क्ष्रौमिति गरुडबीजमिति विवरणे।

विभज्य पुष्पमाराध्य देवस्य निवेद्यग्रहणेच्छां कुर्यात्। गुरूक्तविधिना परिषेकादिकं विधाय हस्ताभ्यां पुष्पैर्देवस्य जिह्वार्चि र्निवेद्ये निपात्य निवेदयामि मन्त्रेण हस्ताभ्यां निवेद्य, निवेद्यामृतं देवस्यास्ये समर्पयेत्। निवेदयामि भवते जुषाणेदं हविर्हर[1] इति विष्णौ निवेदनमन्त्रः शिवादिषु हर दुर्गे विनायक इति योजयेत्। पुनर्वामहस्तेन ग्रासमुद्रां प्रदर्श्य प्राणाय स्वाहेत्यादिमन्त्रैः दक्षिण हस्तेन प्राणादिमुद्राः प्रदर्शयन् अन्नात् मलांशं धात्वंशं च परित्यज्य रसांशं देवस्य वदनार्चिषि समर्पयेत्। पुनः हस्तयोरङ्गुष्ठाभ्यामनामिकाद्वयं संस्पृश्य वं अबात्मना इत्यादि जप्त्वा नैवेद्यमुद्रां प्रदर्शयेत्। एवं रसं समर्प्य पुनः महसा सुधांशं अग्न्यात्मके समर्पयेत्। नैवेद्यसारं रससमर्पणाज्ञातं सुधांशं अग्न्यात्मके देवे समर्प्य धेनुमुद्रां बध्वाऽञ्जलिमुद्रां बध्वा नैवेद्यसाररससमर्पितजातामृतमयसुधांशुना पुनः पुनर्वर्धितं अग्न्यात्मकं देवं हृन्मूर्तिं देवं ध्यायन् स्वस्वमूलमन्त्रं यथाशक्ति जप्त्वा स्वस्वास्त्रेण संरक्ष्य बहिर्गत्वा कवाटं बध्वा[2] देवात्मकेऽग्नौ शेषहविषा वैश्वदेवं कुर्यात्।

***पूजाहोमः***- तत्र पचनालये वा[3] कुत्रचित्प्रदेशे मण्डलमुपलिप्याग्निं निक्षिप्य परिसमूहन परिस्तरणपर्युक्षणादिकं विधाय पीठं प्रपूज्य प्रणवोपचारमूलेनाराध्यावाह्य लिपिन्यासादिभिः सकलीकृत्य उपहारान् दत्वा सपरिवारं सम्पूज्य नैवेद्यकाले एवं जुहुयात्। पूर्वं प्रणवव्याहृतिपीठमन्त्रैः सकृत्सकृद्धुत्वा प्रणवोपचाराभ्यां हुत्वा स्वस्वमूलमन्त्रेणाष्टशतं[4] हुत्वा अङ्गमन्त्रैर्दशांशं हुत्वा अशेषैः पूजामन्त्रैः परिवारमन्त्रैः[5] व्याहृतिप्रणवैः सकृत्सकृज्जुहुयात्। पुनः गण्डूषादिकं दत्वा प्रसन्नपूजां विधाय व्याप्य लयाङ्गं कृत्वा अग्निं स्वात्मन्युद्वास्य परिसमूहनादिकं कृत्वा अग्निं विसर्जयेत्। अग्निकोणे वायुकोणे वा द्वारसमीपस्थिते बलिपीठे परिषद्भ्यो बलिं दत्वा नमस्कृत्य पादौ प्रक्षाळ्याचम्य द्वारं गत्वा द्वास्स्थान्संवन्द्यान्तः प्रविशेत्। पुनः देवं संवन्द्यामृतपानीयं दत्वा हस्ताभ्यां पुष्पैर्निवेद्यगतमशेषरसं प्रकृतिमुखार्चिश्च देवस्य मुखे आनन्दात्मके

---

१ हविर्हर इति शिवे, हविर्गुहेति स्कन्दे, हविर्विभो इति वा सर्वत्र दुर्गायां तु भवत्यै जुषाणेदं हविश्शिवे इत्याद्यूह्यम्। २ प्रासादस्थावरं बिम्बं सर्वथा न प्रकाशयेत्। अर्चयित्वा विधानेन पूजान्ते तु प्रकाशयेत्।। ३ वा शब्दः प्रायः वाक्यालङ्कारे प्रयुज्यते ग्रन्थकृता। ४ अष्टौ वा इति विवरणम्। यद्यपि मूले सतारभूरादिकपीठिकाणुभिरित्युक्तेऽपि विवरणे-प्रणवोपचारव्याहृतिपीठमन्त्रैर्होम इत्युक्तत्वादुपचारादि प्रवेशेऽपि न दोषः। ५ आवरणप्रोक्तैरित्यर्थः।

अद्वये ब्रह्मणि च समर्प्य अमृतापिधानमसीति जलं दत्वा मलांशाद्याधिक्यं अशेषं तदन्नं विष्वक्सेनादिनिर्माल्यधारिण अधीनं कुर्यात्। गतरसं तन्निर्माल्यधारिणे निवेद्य बहिः सन्त्यज्य अग्रतः स्थलं संशोध्य देवाय गण्डूषं दन्तशोधनं गण्डूषं जिह्वाशोधनं गण्डूषं हस्तशोधनं मुखशोधनं पाद्यादित्रयं [1] अर्घ्यादित्रयं वा पुनः ताम्बूलादिकं पुनः पाद्यादि अर्घ्यादि वा दद्यात्। देवस्य प्रसन्नपूजां कृत्वा अपूपादि निवेद्य प्रसादयेत्। पुनः जलगन्धपुष्पैर्देवमभ्यर्च्य देवप्रसादनाय भक्त्या वेदोक्तैरागमोक्तैश्च मन्त्रैः पुष्पाञ्जलिं कुर्यात्। गुरुभ्य इदं, ओं नमो नारायणाय, पितृभ्य इदं, मातृभ्य इदं, आत्मने, भ्रातृभ्यः, कुटुम्बिन्यै, पुत्रेभ्यो, ज्ञातिभ्यः, साध्येभ्यः, महीतलवासिभ्यः, त्रिभुवनवासिभ्य इदमिति स्वस्वमूलमन्त्रमुक्त्वा पृथक् पृथक्पुष्पाञ्जलिं कुर्यात्। प्रीणात्वित्यादिना, सजलपुष्पेणाराध्य कर्म समर्पयेत्। श्रीपादं संस्पृश्य मूलमन्त्रं सहस्रवारं सञ्जप्य गुह्यातिगुह्येत्यादिना सजलं पुष्पमाराध्य जपं समर्पयेत्। इतः पूर्वं प्राणबुद्धीत्यादिना मां मदीयं च[2] अस्मदित्यादीदं तत्सदित्युक्त्वा सजलं पुष्पं देवस्य पादमूले आराध्य ब्रह्मार्पणं कृत्वा प्रश्रयान्वितः प्रणवगायत्रीवेदमन्त्रान् प्रजप्य देवं प्रसाद्य प्रसन्नार्घ्यं दद्यात्।। स्वस्य पुण्यकर्मणः फलं हृन्मूर्तेर्देवस्य करात्सञ्जातममृतकलशमिति[3] सङ्कल्प्य देवस्य श्रीपादसमीपे शङ्खं कृत्वा देवपादाद्गलितमिति सङ्कल्प्य तीर्थजलमावाहयेत्। दक्षिणकरार्पिततीर्थजलैरग्रभागे गुरून् सङ्कल्प्य प्रोक्षेत्।। ईशकोणे देवान्, असुरकोणे असुरान् भुवि पुरतः पितृन् सङ्कल्प्य प्रोक्ष्य पुनरग्रे साध्यं पुनः अन्यान् भक्त्या नमस्कारयुक्तान् प्रोक्षेत्। पुनः मान एकस्मिन्, य ईशिरे, इत्यादिना नमस्कृत्य ज्ञात्वा अज्ञात्वा च कृतं दुरितं विशोध्य प्रणवेन पुष्पमाराध्यावसानीयार्घ्यमिति जलं दत्वा व्याप्य लयाङ्गं कृत्वा रक्षां कुर्यात्। प्रसादपुष्पं स्वमूर्धनि न्यस्य प्राणायामं कृत्वा व्याप्य लयाङ्गं कृत्वा, मानसपूजां कृत्वा सदा देवं संस्मृत्य सर्वव्यापारं कुर्यात्।

***मूलमन्त्राः*** - शिवे नारायणे च पूर्वं प्रणवः पुनर्नमः इति पुनश्चतुर्थ्यन्तं स्वस्व नामेति षडक्षरः अष्टाक्षरश्च मूलमन्त्रः। ओं नमः शिवाय। ओं नमो नारायणाय इति।

शिवनारायणे पूर्वं प्रणवः पुनरष्टमस्वरबीजयुतः हकारः हृं इति

---

१ देवभेदेन क्रमभेदः पूर्वमुक्तः। २ अस्मत्स्वामिने नारायणाय समर्पयामि इत्यादि।
३ इत्यभिहितेऽपि द्वितीया समाधेया एवमुत्तरत्रापि द्वितीयाप्रयोगः समाधेयः। आगमस्य श्रुतितुल्यत्वेनाङ्गीकारात् समाधानं वा वक्तव्यम्।

पुनर्नत्यन्तं स्वनाम ओं हृं शिवनारायणाय नमः इति शिवनारायणे मूलमन्त्रः।

अथ दुर्गायां पूर्वं प्रणवः पुनर्भुवनेश्वरीं पुनश्चतुर्थ्यन्तं नमोन्तं स्वनाम इति सप्ताक्षरः अष्टाक्षरे दुं बीजसहितं स्वनाम ओं ह्रीं दुर्गायै नमः, ओं ह्रीं दुं दुर्गायै नमः इति वा मूलमन्त्रः।

षण्मुखे- पूर्वं प्रणवः पुनर्वकारः स्पर्शे षष्ठः चकारः, स्पर्शे षोडशः विगतस्वरः, स्पर्शे चतुर्विंशः भकारः,पुनः उकारश्च नमोन्तो वेकारः इति षडक्षरः। ओं वचद्भुवे नमः इति मूलमन्त्रः।

गणपतौ स्पर्शे तृतीयः गकारः अमिति औमिति च ओं गं, ओं गौं इति वा मूलमन्त्रः।

शास्तरि पूर्वं प्रणवः पुनः स्पर्शे चतुर्थः घकारः रेफः षष्ठः स्वरः ँ इति बिन्दुः, घ्रूं इति बीजं नमः पराय गोप्त्रे इत्यष्टाक्षरः। ओं घ्रूं नमः पराय गोप्त्रे इति मूलमन्त्रः।

***ऋष्यादि***- साध्यो नारायणः ऋषिः, देवी गायत्री छन्दः, परमात्मा देवता इति विष्णौ। वामदेवऋषिः, पङ्क्तिश्छन्दः, सदाशिवरुद्रो देवता इति शिवे। ब्रह्मा ऋषिः अतिजगती छन्दः, हरिहरो देवता इति शङ्करनारायणे।। नारदऋषिः, गायत्रीछन्दः, दुर्गा देवता इति दुर्गायाम्। सनत्कुमारऋषिः,गायत्री छन्दः, सुब्रह्मण्यो देवता इति गुहे। गणक ऋषिः, निचृद्गायत्री छन्दः, गणपतिर्देवता इति गणपतौ। रेवन्तऋषिः, गायत्री छन्दः, शास्ता देवता इति शास्तरि।

***अङ्गानि***- सर्वेषु देवेषु हृदय शिरः शिखा कवचं नेत्रं अस्त्रमिति षडङ्गानि। विष्णौ अष्टाक्षरे उदरं पृष्ठमित्यष्टाङ्गानि। विष्णौ दुर्गायां सुब्रह्मण्ये च अस्त्रं नेत्रमिति विनिमयं कुर्यात्। स्वस्वबीजान्ते हृदयाय नमः इत्यादि। विष्णौ बिन्दुयुतमूलाक्षराणि बीजानि। शिवे च तानि, यः अस्त्रायफडिति विशेषः।। गुहे वचद्भुवे नमः इति बीजाक्षराणि। शिवहरौ नपुंसकरहितयुग्मस्वर-बिन्दुयुतहकारः, हां, हीं, हूं , हैं, हौं, हः इति बीजानि। दुर्गायां ह्रां दुर्गायै इत्यादि बीजयुतानि चतुर्थ्यन्तनामानि। ह्रः ह्रौं इति व्यत्यासः। गणपतौ गं इति मन्त्रे गां,गीं,गूं,गैं,गौं,गः इति बीजानि, गौं इति मन्त्रे गं इति नेत्रमिति विशेषः। शास्तरि षण्मन्त्रा अङ्गानि। विष्णौ क्रुद्ध, महा,वीर,द्यु, सहस्र इति प्रत्येकमुक्त्वा उल्काय इत्यन्ते स्वाहा इति प्रत्येकं वदेत्। इति पञ्चाङ्गानि। अनुक्ताङ्गेषु प्रणवेन पञ्चाङ्गानि योज्यानि। नमः, स्वाहा, वषट्,हुं,वौषट्,फट्

इति षड्जातयः। उदरादिषु नमः इति। नेत्ररहितं पञ्चाङ्गम्।

अङ्गमन्त्रा लिख्यन्ते- ओं हृदयाय नमः। नं शिरसे स्वाहा। मों शिखायै वषट्। नां कवचाय हुं। रां अस्त्राय फट्। यं नेत्राभ्यां वौषट्। णां उदराय नमः। यं पृष्ठाय नमः इति। क्रुद्धोल्काय[1] स्वाहा हृदयाय नमः। महोल्काय स्वाहा शिरसे स्वाहा। वीरोल्काय स्वाहा शिखायै वषट्। द्युल्काय स्वाहा कवचाय हुं। सहस्रोल्काय स्वाहा अस्त्राय फट् इति च विष्णौ अष्टाङ्गानि पञ्चाङ्गानि। अथ शिवे- ओं हृदयाय नमः, नं शिरसे स्वाहा, मं शिखायै, शिं कवचाय, वां नेत्रत्रयाय,यः अस्त्राय इति षडङ्गानि। सुब्रह्मण्ये- वं हृदयाय, चं शिरसे,भु[2] शिखायै, वें कवचाय, मं अस्त्राय, नं नेत्राभ्यां इति षडङ्गानि। अथ हरिहरे-हां हृदयाय नमः, हीं शिरसे,हूं शिखायै,हैं कवचाय, हौं नेत्रत्रयाय, हः अस्त्राय इति षडङ्गानि। दुर्गायां ह्रां दुर्गायै हृदयाय, ह्रीं दुर्गायै शिरसे, ह्रूं दुर्गायै शिखायै, ह्रैं दुर्गायै कवचाय, ह्रः दुर्गायै अस्त्राय, ह्रौं दुर्गायै नेत्रत्रयाय इति अङ्गानि। गणपतौ- गां हृदयाय, गीं शिरसे, गूं शिखायै,गैं कवचाय, गौं नेत्रत्रयाय,गः अस्त्राय इत्यङ्गानि। शास्तरि रेवन्ताय हृदयाय, महाशास्त्रे शिरसे,गोप्त्रे शिखायै, प्रभवे कवचाय, दीप्त्रे नेत्राभ्यां, प्रशास्त्रे अस्त्राय फट् इति अङ्गानि।

***षण्मन्त्राः***- रेवन्ताय, महाशास्त्रे, गोप्त्रे, प्रभवे, दीप्त्रे,प्रशास्त्रे इति शास्तरि षण्मन्त्राः। ओं विघ्नाय, विनायकाय,वीराय, शूराय, वरदाय,हस्तिमुखाय इति षण्मन्त्राः गणपतौ। सनत्कुमाराय, स्कन्दाय,इन्द्राय,विशाखाय,षष्ठाय (षिने), षण्मुखाय इति षण्मन्त्राः षण्मुखे। सें दुर्गायै, दं आर्यायै, वें देव्यै, तं भगवत्यै,जां कन्यकायै इति दुर्गायां पञ्चमन्त्राः।

***उपचारमन्त्राः***- शिवे स्थाणुमन्त्रः उपचारः। विष्णौ जितन्त इत्युपचारः। शङ्करनारायणे जितन्त इत्युपचारः। दुर्गायां प्रणवपुटिता शक्तिः उपचारः। शास्तरि स्वगायत्री उपचारः। गुहे षण्मुखविद्या उपचारः। गणपतौ गणानांत्वेत्युपचारः। ओं नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गावृतात्मने। चतुर्मूर्ति वपुश्छायाभासिताङ्गाय शम्भवे।। इति शिवे। जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन। सुब्रह्मण्य नमस्तेऽस्तु महा(नमः) पुरुषपूर्वज।। इति विष्णौ हरिहरे च

---

१ उल्केत्यादिषु तकारपाठः मूलसम्मतः परन्तु देशभाषायां उच्चारवैपरीत्येन तलयोरभेदोपचारात् भेदोपपत्तिरिति चिन्त्यम्। २ द्भुं इति वक्तव्यम्।

ओं ह्रीं ओं इति दुर्गायाम्। भूतनाथाय विद्महे भवपुत्राय धीमहि[1]। तन्नः शास्ता प्रचोदयात्।। इति शास्तरि। ओं नमः षण्मुखाय इति स्कन्दे। गणानान्त्वा गणपतिं इति गणपतौ चोपचारमन्त्राः।

***पञ्चतत्वानि***- विष्णौ ओं षों नमः पराय परमेष्ठ्यात्मने 'वासुदेवाय'[2] नमः। ओं यं नमः पराय पुरुषात्मने 'सङ्कर्षणाय' नमः। ओं रां नमः पराय विश्वात्मने प्रद्युम्नाय नमः। वं नमः पराय निवृत्त्यात्मने "अनिरुद्धाय" नमः। ओं लां नमः पराय सर्वात्मने "नारायणाय"नमः इति पञ्च तत्वानि। अथ शिवे ओं हौं नमः शिवाय शान्त्यतीतात्मने नमः। ओं ह्यैंनमःशिवाय शान्त्यात्मने नमः। ओं हूं नमः शिवाय विद्यात्मने नमः। ओं ह्वीं नमः शिवाय प्रतिष्ठात्मने नमः। ओं ह्लां नमः शिवाय निवृत्त्यात्मने नमः इति पञ्च तत्वानि। अथ शङ्करनारायणे- ओं हों षों नमः पराय ईशानाय परमेष्ठ्यात्मने नमः। ओं हें यं नमः पराय तत्पुरुषाय पुरुषात्मने नमः। ओं हु रां नमः परायाघोराय विश्वात्मने नमः। ओं हिं वं नमः पराय वामदेवाय निवृत्यात्मने नमः। ओं हं लां नमः पराय सद्योजाताय सर्वात्मने नमः इति पञ्चतत्वानि। अथ दुर्गायां ओं षौं नमः पराय श्रेष्ठाशक्त्यात्मने नमः। ओं यौं नमः पराय पौरुषीशक्त्यात्मने नमः। ओं रौं नमः पराय विश्वरूपाशक्त्यात्मने नमः। ओं वौं नमः पराय निवृत्तिनीशक्त्यात्मने नमः। ओं लौं नमः पराय सर्वरूपाशक्त्यात्मने नमः इति पञ्चतत्वानि। अथ सुब्रह्मण्ये-ओं नं नमः पराय शान्त्यतीतात्मने नमः। ओं वें नमः पराय शान्त्यात्मने नमः। ओं भुं[3] नमः पराय विद्यात्मने नमः। ओं चं नमः पराय प्रतिष्ठात्मने नमः। ओं वं नमः पराय निवृत्त्यात्मने नमः। ओं मं नमः पराय क्षेत्रज्ञतत्वात्मने नमः इति षट् तत्वानि। गणपतौ ओं गों नमः पराय शान्त्यतीतात्मने नमः। ओं गें नमः पराय शान्त्यात्मने नमः। ओं गुं नमः पराय विद्यात्मने नमः। ओं गिं नमः पराय प्रतिष्ठात्मने नमः। ओं गं नमः पराय निवृत्त्यात्मने नमः इति पञ्च तत्वानि। अथ शास्तरि- ओं घ्रों नमः पराय शान्त्यतीतात्मने नमः। ओं घ्रें नमः पराय शान्त्यात्मने नमः। ओं घ्रुं नमः पराय विद्यात्मने नमः। ओं घ्रिं नमः पराय प्रतिष्ठात्मने नमः। ओं घ्रं नमः पराय निवृत्त्यात्मने नमः इति पञ्च तत्वानि[4]। प्रीणातु भगवान्विष्णुः

१ धीमहे इति आत्मनेपदप्रयोगः मूलसम्मतः। आकरेऽपि धीमहे इत्येव दृश्यते। २ अत्र वासुदेवादि योजनं सम्प्रदायसिद्धं न तु मूलारूढम्। तथा विष्णौ पञ्चतत्वेषु सर्वत्र बिन्द्वन्ततत्वम्। तदुक्तमाकरे 'आदौ तार नमो मध्ये बिन्द्वन्ताः षोयरावलाः। पराय भगवत्स्थाने पञ्चोपनिषदादिषु इति। ३ दभुं इति युक्तम्। ४ अयं सृष्टिक्रमः।

कर्मणाऽनेन शाश्वतः। शिवे विष्णुस्थाने रुद्रः। दुर्गायां- भवती दुर्गा-शाश्वती। गुह्यातिगुह्यगोप्तस्त्वं[1] गृहाणास्मत्कृतं जपम्। सिद्धिर्भवतु मे देव त्वत्प्रसादात् हृदि स्थिता। इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः। जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना। यत् स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहों मां मदीयं चास्मत्स्वामिने समर्पयामि ओं तत्सत् इति समर्पणमन्त्रः, इति पूजापटलः।

***शुद्धिप्रकारः***- नित्यपूजार्थं प्रतिष्ठिते बिम्बे नित्यपूजा अवश्यकर्तव्या इत्यत्र निमित्तं स्याच्चेत् तन्निष्कृतिं कृत्वैव देवं पूजयेदिति विधिः। प्राकारान्तर्भागे मरणं प्रसवश्च, अङ्गणे मण्डपे महाबलिपीठे महाध्वजे नृत्तशालायां च मूत्ररुधिरशवादिकं च पतितादीनां प्रवेशश्च उलूककाकगृध्रश्वगर्दभोष्ट्र-सूकरशिवावानरडुण्डुभादीनां गर्भगृहप्रवेशश्च, बिम्बस्य पतनं चलनं इत्यादि, दहनं स्वेदः रोदनं हसनं चेत्यद्भुतानि छत्राक[2] नाकु[3] मधुकादि[4] समुद्भवश्च, अनिमित्ते पूजालोपः क्षुद्रैः अन्यमन्त्रैश्च पूजा, निषिद्धैर्दुष्टैश्च पुष्पादिभिः पूजा मरीचादिभिर्लेपनं च एतानि तन्त्रागमेषु कथितानि निमित्तानि। कानिचित् गुरूणि कानिचित् लघूनि च। प्रासादः बिम्बं च देवस्य स्थूलं सूक्ष्मं च शरीरं यस्मात् तस्मादाधाराधेयत्वादेकस्मिन् सञ्जातो दोषः अन्यं प्राप्नोति। तस्मादेकत्र सञ्जाते दोषे उभयोः शुद्धिः कार्या। क्षेत्रगते दोषे खननादिभिः सह उभयोः शुद्धिः अन्यथा अवस्रावोक्षणादिभिः शुद्धिः कार्या इति नियमः।

***स्थानशुद्धिः***- खननं हरणं दाहः पूरणं गोनिवासनम्। विप्रोच्छिष्टं पञ्चगव्यं सप्तैताः स्थानशुद्धयः इति। अथ प्रयोगः-खननयोग्यप्रदेशे उपविश्य देहशुद्धिं शङ्खपूरणमात्माराधनं च विधाय गणपतिं च सम्पूज्य तत्समीपे खदिरकृतखनित्रं सन्निधाय स्वस्वास्त्रेण सम्पूज्य विप्रेभ्यो दानं दत्वा अस्त्रमन्त्रेण तेन खनित्रेण यथायोग्यं खात्वा बहिः निर्ऋतिकोणे वायुबीजेन तत्पांसु सन्त्यज्य तत्र गर्ते दर्भादीन्निक्षिप्याग्निना दहेत्। भस्मादिकं सर्वं त्यक्त्वा तत्र ब्राह्मणानां पादौ प्रक्षाळ्य तेभ्यो दक्षिणां दत्वा पुनः गोमूत्रादिपञ्चगव्यैश्चाप्लाव्य कुशतीर्थदर्भादिजाताभिः शुद्धाभिर्मृद्भिः गर्तमापूर्य मर्दयित्वा हस्तिपादादिभिर्दृढीकृत्य गाः निवास्य ताभ्यो यवसादि दत्वा भूमिं विशोद्धय

---

१ गोप्ता त्वमिति,पा

२ छत्राकोद्भवः।

३ नाकुः -वल्मीकम्।

४ मधुकं-मधुनीडम्।

ब्राह्मणभोजनस्य योग्यं मण्टपादिकं कृत्वा तत्र ब्राह्मणान् भोजयित्वा तेभ्यो दक्षिणां दद्यात्। उच्छिष्टादिकं त्यक्त्वा स्थलं परिशोध्य पञ्चगव्यैः सम्प्रोक्ष्य विकिरैर्विकिरेत्। पुनस्तत्राष्टदलं कृत्वा पीठं सम्पूज्य मूलेनावाह्य सकलीकृत्य सम्पूज्य निवेद्य प्रसन्नपूजां विधाय पूजां समाप्य व्याप्य लयाङ्गादिकं कृत्वा तत्स्थलं तच्चैतन्येन व्याप्तं सङ्कल्प्य रक्षेत् इति स्थानशुद्धिः।

***प्रासादशुद्धिः***- गुरुः स्नात्वाऽऽचम्य प्रासादस्याग्रभागे[1] दक्षिणे उप विश्य देहशुद्धिं शङ्खपूरणमात्माराधनं च कृत्वा स्वस्तिके गणपतिपीठं सम्पूज्य[2] बीजमन्त्रेणावाह्य सकलीकृत्य सम्पूज्य कदलीपक्वादिकं प्रभूतं सम्पाद्य निवेद्य प्रसन्नपूजां विधाय प्रसाद्य कर्मणः निर्विघ्नतां प्रार्थयेत्। तत्समीपे पूर्वपश्चिमायतं मण्डलमुपलिप्य प्रागग्रान् दर्भान्विकीर्य तत्र त्रिगुणीकृत-सूत्रादिपुष्पाक्षतावसानानि शोधनद्रव्याणि पश्चिमादिक्रमेण न्यस्य सम्पाद्य शोषणदाहनप्लावनानि कृत्वा प्रणवेन सम्पूज्य क्रमात् संस्पृश्य स्वस्वमन्त्रान् जपेत्। १ त्रिगुणीकृतसूत्रं,२ दर्भदाम,३ मुष्टिः, ४ गोमयजलं,५ सर्षपः[3], ६ पुनर्मुष्टिः, ७ पुनर्गोमयजलं,८ पञ्चगव्यं, ९ विकिरं, १० मुष्टिः, ११ गन्धजलं, १२ दर्भाग्रान्वितं पुष्पाक्षतं इति द्रव्याणि। अथवा सर्षपादि द्रव्याणि उभयपक्षे अवसाने वा विकिरं इति चत्वारः पक्षाः। सूत्रे प्रणवाक्षराणि दर्भमालायां प्रणवः तिसृषु मुष्टिषु वायुबीजं गोमयजले अमृतबीजं सर्षपेऽग्निबीजं पञ्चगव्ये पञ्चतत्वानि शिवे पञ्च ब्रह्माणि[4] वा विकिराद्येषु शेषेषु द्रव्येषु मूलमन्त्रः। विष्णौ विकिरे द्वादशाक्षरं सर्षपे नृसिंहबीजं वा। सर्वदेवेषु सूत्रे कवचं गव्येऽस्त्रं वा इति मन्त्रनियमः। पुनः ब्राह्मणेभ्यो गोदानं दत्वा गणपतये ब्रह्मार्पणादि कृत्वा प्रार्थ्य लयाङ्गं कृत्वा स्वस्वमूलेन प्राणायामं कृत्वा सकलीकृत्य [5] प्रासादस्य द्वारसमीपे स्थित्वा अस्त्रमुक्त्वा अस्त्रदृष्ट्या प्रासादं निरीक्ष्य दक्षिणकरतले[6] जलं गृहीत्वा अष्टवारं प्रणवं सञ्जप्य फडन्तप्रणवेन प्रोक्ष्य तत्र कृतावासान् राक्षसादीन् निरस्येत्। तालत्रयादिना रक्षां कुर्यात्। पुनः सूत्रं मालां च गृहीत्वा पूर्वोक्तमन्त्रेण प्रासादस्येशकोणमारभ्य कपोतोपरीशकोणावसानंसंवेष्ट्य पूर्वोक्तमन्त्रं सञ्जप्य प्रथममुष्ट्या अन्तर्बहिश्च तद्वत्समार्ज्य स्वमन्त्रं सञ्जप्य गोमयजलेन

१ प्राङ्मुखे प्रासादे याम्यबलिपीठपुरतः प्रत्यङ्मुखे तत्पश्चिमत इति विवरणे। २ गणपतिं ३ सितसर्षपो मुरव्यः। ४ सद्योजातादि पञ्च। ५ देवताया हृदयादिषु तत्र तत्र हृदयादिमन्त्रन्यासः सकलीकरणं साङ्गीकरणमिति यावत्। देवताङ्गे षडङ्गानां न्यासः स्यात्सकलीकृतिः इति। ६ शङ्खादिति विवरणे।

तद्वत् सम्प्रोक्ष्य[1] पञ्चगव्येन सिञ्चेत्। स्वमन्त्रेण उत्तानपाणिना त्रिधा विकिरेद्वा। पूर्वोक्तवत् विकिरान् विकीर्य तृतीयमुष्ट्या सम्मार्ज्य स्वमन्त्रं प्रजप्य अष्टगन्धजलैः प्रोक्ष्य स्वमन्त्रेणाक्षतैर्विकिरेत्। गन्धजले आपः इत्यादि वा मन्त्रः अक्षते इषेत्वेति वा मन्त्रः। पुनः धूपेन दीपेन च परितः भूषयेत्। अन्ते विकिरसादनं चेदन्तेविकिर-प्रयोगः। अथ[2] ईशकोणे अग्निकोणे वायुकोणे वा स्वस्तिकं कृत्वा व्रीहीन् निक्षिप्य दर्भाग्रे निक्षिप्य तत्र क्षाळितं सूत्रवेष्टितं धूपितं घटं न्यग्बिलं न्यस्य पीठं सम्पूज्य कुम्भस्य शोषणदाहनप्लावनकाठिन्यसुषरीकरणानि कृत्वा दर्भविन्यासं अष्टगन्धप्रोक्षणं अक्षतविकिरणं च विधाय उत्तानीकृत्य न्यस्य गन्धपुष्पा-क्षतसहितमधोग्रं कूर्चं न्यस्य जलैर्यथोक्तमापूर्य पल्लवचक्रिकादिकं न्यस्य स्वस्वास्त्रमन्त्रेणावाह्य सकलीकृत्य उपहारान् दत्वा सम्पूज्य निवेद्य प्रसन्नपूजां विधाय ब्रह्मार्पणादिकं कृत्वा वस्त्रेणाच्छाद्य व्याप्य लयाङ्गं कृत्वा रक्षेत् इति अस्त्रकलशपूजा।

***मुष्टिविभागाः***- शिवे शङ्करनारायणे गणपतौ शास्तरि च पलाशशाखादर्भैर्बद्धा मुष्टिः। सुब्रह्मण्ये अश्वत्थस्य पलाशस्य च शाखाशलाकादर्भैर्मुष्टिः। दुर्गायां विष्णौ च सहाशलाकादर्भैर्बद्धा मुष्टिः शङ्करनारायणे पलाशशाखासहाशलाकादर्भैर्वा बद्धा मुष्टिः इति पक्षान्तरम्।

***अस्त्रमन्त्राः***- विष्णौ दुर्गायां शङ्करनारायणे सुदर्शनास्त्रं गणपतौ शिवे च अघोरं पाशुपतं वा अस्त्रं, शङ्करनारायणे पाशुपतसहितं सुदर्शनं वा अस्त्रं, सुब्रह्मण्ये ज्वालामालिनि हुं इत्यस्त्रं, वा[3] हृदयाय, लां शिरसे, मां शिखायै, लिं कवचाय, निं नेत्राभ्यां, हुं अस्त्राय इत्यङ्गानि। एतत् षडक्षरम्। शास्तरि ज्वलघृणि हुं फट् इति षडक्षरमस्त्रम्। ज्वं हृदयाय, लं शिरसे, घृं शिखायै णिं कवचाय, हुं नेत्राभ्यां, फट् अस्त्राय इत्यङ्गानि।

***सुदर्शनम्***- ओं सहस्रार हुं फट् इति सुदर्शनास्त्रम्। अन्ते आयस्वाहा इति आदौ आ, वि,सु, धी, सं, ज्वालायुक्तैश्चक्रैरङ्गानि। अहिर्बुध्न्यऋषिः, अनुष्टुप् छन्दः सुदर्शनमहाविष्णुर्देवता। आचक्राय स्वाहा हृदयाय। विचक्राय स्वाहा शिरसे। सुचक्राय स्वाहा शिखायै। धीचक्राय स्वाहा कवचाय। सञ्चक्राय स्वाहा नेत्रत्रयाय

---

१ स्वमन्त्रेण सर्षपं विकीर्य मुष्ट्या स्वमन्त्रेण सम्माज्य पुनर्गोमयजलेन तद्वत् सम्प्रोक्ष्य। (इति त्रुटितं योजनीयम्।)२ गर्भालये इति विवरणे। प्रतिष्ठादि कार्यसामाप्तावस्योद्वासनं कर्तव्यं रक्षार्थत्वादस्य। ३ ज्वामित्यावश्यकम् ? ज्वालामालाय हुं इति पा।

[नेत्राभ्यां]। ज्वालाचक्राय स्वाहा अस्त्राय इति षडङ्गानि[1]।

***अघोरास्त्रम्***- "ओं ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोरतर तनूरूप चट चट प्रचट प्रचट कह कह वम वम बन्ध बन्ध घातय घातय हुं फट्" इति। अघोरऋषिः, त्रिष्टुप् छन्दः अघोररुद्रो देवता। ओं ह्रीं स्फुर स्फुर हृदयाय। प्रस्फुर प्रस्फुर शिरसे। घोर घोरतर तनूरूप शिखायै। चट चट प्रचट प्रचट कवचाय। कह कह वम वम नेत्रत्रयाय। बन्ध बन्ध घातय घातय हुं फट् अस्त्राय इत्यङ्गम्

***पाशुपतम्***- "ओं श्लीं पशु हुं फट्" इति। अघोरऋषिः,गायत्री छन्दः, पाशुपतरुद्रो देवता। ओं हृदयाय। श्लीं शिरसे। पं शिखायै। शुं कवचाय। हुं नेत्रत्रयाय। फट् अस्त्राय। इत्यङ्गानि। पुनः[3] कृणुष्वपाजादिराक्षोघ्नसूक्तं असकृत्सञ्जप्य स्वास्त्रमष्टोत्तरशतं जप्त्वा अन्तर्बहिश्च सर्षपान्विकीर्य तालत्रयादिना प्रासादं संरक्ष्य बहिराग्नेयकोणे राक्षोघ्नहोमं कुर्यात्।

***राक्षोघ्नहोमः***- अग्निकोणे उपविश्य मण्डलमुपलिप्योल्लेखनादि स्वगृह्योक्तमार्गेण याजुषेण वा अग्निमुखं विधाय रक्षोहणं+नक्तों ३, विज्योतिषा+विनिक्षे स्वाहा इति पक्वं हुत्वा,रक्षोहाग्नय इदं न मम इति उद्देशत्यागं कृत्वा कृणुष्वपाजेत्यष्टादशभिः, ये देवाः इत्यादि पञ्चभिः, पञ्चदुर्गामन्त्रैः व्याहृतिभिः सकृत्सकृदाज्यं जुहुयात्। शङ्करनारायणे पञ्चदुर्गामन्त्रान्ते पञ्चतत्वैः सकृत्सकृत् हुत्वा व्याहृतिभिर्जुहुयात्। स्वस्वमन्त्रेण पूर्णाहुतिः। सर्वदेवेषु स्वस्वास्त्रमन्त्रेण खरमञ्जरी[4] समिद्घृतचरुघृतैः पृथगष्टोत्तरशतं अन्तरान्तरा पूर्णाहुतिसहितं हुत्वा पुनः स्विष्टकृदादि होमशेषं समाप्य अग्निं विसर्जयेत्। पुनः स्वास्त्रं अष्टोत्तरशतवारं सञ्जप्य होममन्त्रं जपन् खरमञ्जरीरसभस्मप्रणीताजलसहितं प्रासादे संस्पृश्य [5] ईशकोणे वास्तुहोमं कुर्यात्।

---

१ कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं भीमदंष्ट्राट्टहासम्। शङ्खं चक्रं गदाब्जे प्रथुतरमुसलं चापपाशाङ्कुशान् स्वैर्बिभ्राणं दोर्भिराद्यं मनसि मुररिपुं भावयेच्चक्रसंज्ञम्।। २ सजलघनसमाभं भीमदंष्ट्रं त्रिनेत्रं भुजगधरमघोरं रक्तवस्त्राङ्गरागम्। परशुडमरुखड्गान् खेटकं बाणचापौ त्रिशिखनरकपाले बिभ्रतं भावयामि।। ३ गर्भालयेऽर्चितविष्टरे,शिवे-प्रासादमन्त्रेण, इतरेषु मूलेन देवमावाह्य इन्द्रवज्राद्यावरणैः सह प्रार्चयेत्। एवं च यत्रावरणमस्त्रादिमन्त्रेषु नोक्तं तत्र सर्वत्र अङ्गैः, इन्द्रादिभिः, वज्रादिभिश्चावरणपूजां कुर्यात् इति ज्ञेयम्। ४ खरमञ्जरी-अपामार्गः।
५ दर्भपलाशापामार्गाश्वत्थशाखाभिः।

***वास्तुहोमः***- तत्र मण्डलमुपलिप्योल्लिरव्य राक्षोघ्नहोमाग्निं तत्र निक्षिप्य अन्वाधानादि पूर्ववद्विधाय अग्नेः पूर्वे मण्डलमुपलिप्य पश्चिमपूर्वक्रमेण स्वस्तिकद्वयं कृत्वा शालीवस्त्र[1]तण्डुलतिलसर्षपैः पीठं विरचय्य तस्मिन्पीठे दूर्वाशमीदल कुशकूर्चान् न्यस्य पश्चिमपूर्वक्रमेण कुम्भद्वयं न्यग्बिलं निधाय तत्र पीठं सम्पूज्य पूर्वोक्तवत् कुम्भसंस्कारं कृत्वा उत्तानीकृत्य न्यस्याधोग्रं कूर्चं न्यस्य पश्चिमकुम्भे तण्डुलैः स्वर्णेन च सम्पूर्य पल्लवचक्रिकादिकं न्यस्य शन्नो देवीति शान्तिमावाह्य[2] मुद्राः प्रदर्श्य शन्नोदेवीरभिष्टये हृदयाय। आपो भवन्तु पीतये शिरसे। शंयोरभिः स्त्रवन्तु नः शिखायै। शन्नो-भिष्टये कवचाय। आपो-पी तये नेत्राभ्यां। शंयो-नः अस्त्राय इत्यङ्गान्ते आसनस्वागतादिकं कुर्यात्। पुनः प्राचीने च कुम्भे अधोऽग्रं कूर्चं न्यस्य स्वर्णरत्नजलैः सम्पूर्य मूलेनावाह्य सकलीकृत्य उपहारान् दत्वा सम्पूज्य निवेद्य प्रसन्नपूजां कृत्वा पूजां समाप्य आच्छाद्य रक्षेत्। अग्नौ परिधिन्यासादिचक्षुष्यन्तं विधाय जुह्वामुपस्तीर्य पिण्डद्वयं कृत्वा हविषि पिण्डद्वये च प्रत्यभिघार्य, वास्तोष्पतिर्देवता, वास्तोष्पते.... ष्पदों ३ वास्तोष्पते शग्मया.... सदानः स्वाहा इति पक्वं हुत्वा, वास्तोष्पतय इदं न मम इत्युद्देशत्यागं कृत्वा पुनः वास्तोष्पते ध्रुवा.... सखा स्वाहा। गृह्यं भयं.... पशुभ्यः स्वाहा अक्षिस्पन्देङ्गे... पशुभ्यः स्वाहा। दुःस्वप्ने.... पशुभ्यः स्वाहा। वास्तोष्पते प्रतरणोन...जुषस्व स्वाहा। अमीवहावास्तोष्पते...एधिनः स्वाहा इति षड्भिर्मन्त्रैर्हुत्वा, पञ्चदुर्गाभिः,शन्न इन्द्राग्नीत्यादिपञ्चदशभिः, व्याहृतिभिश्च सकृत्सकृदाज्यं हुत्वा पूर्णाहुतिं जुहुयात्। शिवे- पञ्चदुर्गास्थाने सद्योजातादिपञ्चब्रह्मभिराज्यं जुहुयात्। शङ्करनारायणे अमीवहावास्तोष्पते इति मन्त्रान्तं हुत्वा, पञ्चतत्वैर्हुत्वा पञ्चदुर्गाभिर्जुहुयात्। गुहे पृतनाजितान्तं हुत्वा षण्मन्त्रैर्हुत्वा शन्न इन्द्राग्नीत्यादिभिर्जुहुयात्। पुनः सर्वदेवेषु शन्नो देवीरभिष्टयेति मन्त्रेण शमीसमिदाज्यचर्वाज्यानि पृथगष्टोत्तरशतं, पञ्चगव्याप्लुताः दूर्वाश्चाष्टोत्तरशतं स्वस्वपूर्णाहुतिसहितं जुहुयात्। दुर्गायां जातवेदसे इति मन्त्रेण समिदादि चतुर्द्रव्यं हुत्वा शन्नोदेव्या दूर्वा हुनेदिति विशेषः। विष्णौ मूलमन्त्रेण दूर्वाः हुनेदिति विशेषः। शास्तरि सुब्रह्मण्ये च

---

**१ वस्त्रान्तरितैः शाल्यादिभिः।** २ अत्र लेखकप्रमादः सञ्जात इत्याभाति पुस्तकद्वयेऽपि। **यतः मूलग्रन्थसमालोचने प्रत्यक्स्थिते** तण्डुलघटे मूलेनावाहनं, प्राक्स्थिते जलपूर्णघटे **शन्नो देवीति शान्त्यावाहनं इत्यवगम्यते।** उभयत्र शान्त्यावाहनमिति क्रियासारे लक्षणसंहितायां **च। पश्चिमकुम्भं जलेन, पूर्वकुम्भं तण्डुलैः** सम्पूरयेदिति लक्षणसंहितायाम्।

समिदादि पञ्च द्रव्याणि स्वस्वगायत्र्या जुहुयाद्वा इति विशेषः। पुनः सर्वदेवेषु पूर्णां हुत्वा स्विष्टकृतः पूर्वं[1] घटाज्येनोपस्तीर्य अन्यस्मिन्पात्रे हविः कृत्वा स्विष्टकृदादि होमशेषं समाप्य अग्नेः पूर्वतः कलशस्य पश्चिमे मण्डलं कृत्वा दर्भान्विकीर्य नमो रुद्राय वास्तोष्पतये आयने विद्रवणे उद्याने यत्परायणे आवर्तने विवर्तने यो गोपायति तँ हुवे नमः इति मन्त्रेण जलाज्यसहितेन होमशेषहविषा बलिं विकीर्य परिसमूहनादि गन्धपुष्पाराधनं च कुर्यात्। अग्निं विसर्जयेच्च।

***वास्तुपूजा***- पुनः वास्तुहोमस्येशभागे[2] वास्तुबलिं कुर्यात्। तत्र मण्डलं कृत्वा प्रागग्राणि उदगग्राणि च पृथक् दशसूत्राणि कृत्वा नवपुटे क्षेत्रे मध्ये नवकेन ब्रह्मणः पदं कल्पयेत्। पूर्वषट्कं आर्यकस्य पदम्। अग्निकोणे चतुष्के उत्तरद्वयं सावित्रस्य पदं, दक्षिणद्वयं सवितुः पदं, दक्षिणषट्कं विवस्वतः पदं, निऋतिकोणे चतुष्के पूर्वद्वयं इन्द्रजयस्य पदं, पश्चिमद्वयं इन्द्रस्य पदं, पश्चिमषट्कं मित्रस्य पदं, वायुकोणे चतुष्के दक्षिणपदद्वयं रूद्रजयस्य पदं, उत्तरद्वयं रुद्रस्य पदं, उत्तरषट्कं महीधरस्य पदं, ईशकोणे चतुष्के पश्चिमद्वयं, आपवत्सस्य पदं, पूर्वद्वयं आपस्य पदं कल्पयेत्। तद्बाह्ये एकैकं खण्डं एकैकस्य पदं कल्पयेत्। तद्बहिरष्टदिक्षु एकैकं पदं कल्पयेत्। पुनः सर्वत्र रजोभिः यथाशोभं प्रपूर्य दर्भान्विन्यसेत्। तत्रोपविश्य गुरुवन्दनादिकं विधाय सकलीकृत्य शङ्खपूरणादि कृत्वा गणपतिं सम्पूज्य पीठपूजां कृत्वा वास्तुपुरुषं सङ्कल्प्य ओं वां वास्तुपुरुषाय नमः। भगवन्नागच्छागच्छ। ओं आवाहयामीत्यावाह्य मुद्राः प्रदर्श्य व्याप्य वां हृदयाय, वीं शिरसे, वूं शिखायै, वैं कवचाय, वौं नेत्राभ्यां, वः अस्त्राय इत्यङ्गानि कृत्वा उपहारान् दत्वा सम्पूज्यार्घ्यं दत्वा पुष्पाञ्जलिं कुर्यात्। ओं तत्सन्नमो ब्रह्मणे तत्सन्नमः। इति ब्रह्मणो द्वादशाक्षरो मन्त्रः। ओं नमो ब्रह्मणे इति षडक्षरो मन्त्रः। ओं हृदयाय। तत्सच्छिरसे। नमः शिखायै। ब्रह्मणे कवचाय। तत्सत् नेत्राभ्यां। नमः अस्त्राय इति द्वादशाक्षरस्याङ्गानि। ओं हृदयाय, नं शिरसे, मों शिखायै, ब्रं कवचाय, ह्मं नेत्राभ्यां, णें अस्त्रायेति षडक्षरस्याङ्गानि पुनः द्वादशाक्षरेण षडक्षरेण वा चतुरस्रवास्तुविग्रहस्य नाभौ ब्रह्माणमावाह्य मुद्राः प्रदर्श्य व्याप्य लिपिन्यासादिभिः सकलीकृत्य उपहारान् दत्वा प्रणवमूलाक्षराङ्गान्ते

---

[1] मूल स्विष्टकृच्छेषेण बलिदानमुक्तं अत्र तु विशेषप्रयोगः राङ्गृहीतः। [2] पूर्वे उत्तरे वा इत्यपि।

विष्णौ दुर्गायां च आर्यकादीन् पूजयेत्। आर्यकाय नमः। सावित्राय। सवित्रे। विवस्वते। इन्द्रजयाय। इन्द्राय। मित्राय। रुद्रजयाय। रुद्राय। महीधराय।।१०।। आपवत्साय। आपाय।।१२।। इति पूर्वादीशावसानं आवाह्य पुनः ईशानाय। पर्जन्याय। जयन्ताय। इन्द्राय। सूर्याय। सत्याय। भृशाय। अन्तरिक्षाय। अग्नये। पूष्णे ।।१०।। वितथाय। गृहक्षताय। यमाय। गन्धर्वाय। भृङ्गराजाय। मृगाय। पितृभ्यः। दौवारिकाय। सुग्रीवाय। पुष्पदन्ताय।। २०।। वरुणाय। असुराय। शोषाय। रोगाय। वायवे। नागाय। मुख्याय। भल्लाटाय[1]। सोमाय। अर्गलाय।। ३०।। दित्यै। उदित्यै[2]।। ३२।। इति ईशादेकैगपदे पूजयेत्। दुर्गायां विष्णौ च एवं क्रमः। शिवे शङ्करनारायणे सुब्रह्मण्ये गणपतौ शास्तरि च ईशानाय नमः इत्यादि उदित्यै नमः इत्यन्तमावाह्य ततः आपाय[3]। आपवत्साय। आर्यकाय। सवित्रे। सावित्राय। विवस्वते। इन्द्राय। इन्द्रजयाय। मित्राय। रुद्राय। रूद्रजयाय। महीधराय।।१२।। ओं नमो ब्रह्मणे इति क्रमः। पुनः सर्वदेवेषु पूर्वादि चतुर्दिक्षु शर्वस्कन्दाय। अर्यम्णे। जम्भकाय। पिलिपिञ्छिकायेति। ईशानादि कोणेषु-चरक्यै। विदार्यै। पूतनायै। पापराक्षस्यै।।८।। इति चावाह्य पूर्वाद्यष्टदिक्षु-देवग्रहेभ्यः। असुरग्रहेभ्यः। गन्धर्वग्रहेभ्यः। यक्षग्रहेभ्यः। पितृग्रहेभ्यः। नागग्रहेभ्यः। राक्षसग्रहेभ्यः। पिशाचग्रहेभ्यो नमः। ईत्येताभिर्देवताभिः सहितं ब्रह्माणं जलादिभिःसम्पूज्य ब्रह्मणे नैवेद्यं [समर्प्य]विसर्जयित्वा गण्डूषं दत्वा किञ्चिदभ्यर्च्य बलिं दद्यात्। हविस्तत्र निधाय संस्कारं कृत्वा कुशपुष्पाक्षतजलानि हविषि संयोज्य वास्तुपुरुषाय ब्रह्मणे च त्रिवारं बलिं दत्वा आर्यकादिभ्यः ईशानादिभ्यो वा एकैकवारं, देवग्रहादिभ्यः पञ्चक्रूरसहितं[4] एकैकवारं बलिं दद्यात्। पुनः गण्डूषादि दत्वा सकृत्सकृज्जलं दत्वा ब्रह्मणे प्रसन्नपूजां विधाय पूजां समाप्य प्राकारान्तर्भागं प्रसादितवास्तुदेवताभिः संस्थितं सङ्कल्प्य रक्षां कुर्यात्। इति होमस्यैशानदिग्भागे उत्तरभागे पूर्वभागे वा वास्तुबलिं विधाय। त्वं विप्रस्त्वं

१ भल्लाटकायेति पा २ उदितिरिति मूलपाठः, विवरणे परं अदितिदिती वा इत्युक्तम्। ३ मूले कोणगतद्वितयानामापवत्सादीनां स्थानेन सह आप-आपवत्सादि क्रमेण विनिमयः प्रोक्तः। एवं सति पूर्वोक्तरेखारचने देवताभेदेन व्यत्यासो न कार्यः। किन्तु क्षेत्रसहितानां देवानां व्यत्यासः कार्यः। तथा च ऐशद्विकयोर्मध्ये पश्चिमे आपः पूर्वे आपवत्सः आग्नेयद्विकयोः उत्तरे सविता दक्षिणे सावित्रः नैर्ऋत्यद्विकयोः पूर्वे इन्द्रः पश्चिमे इन्द्रजयः वायव्यद्विकयोः दक्षिणे रुद्र उत्तरे रुद्रजयः इति क्रमादर्चनम्। ४ पललं रजनीचूर्णं सलाजं दधिसक्तुकम्। भूतकू(क्रू)रबलिं दद्यात्पूर्वं भूतप्रहर्षणम् इत्याकरे

कविरिति जपन् शमीपल्लवैर्भस्मप्रणीताजलसहितं सम्पातं प्रासादे समर्प्य गर्भगृहं गत्वा तत्रोपविश्य देवस्याग्रे स्थलं संशोध्य दर्भान् विन्यस्य पीठपूजां कृत्वा शिवे प्रासादमन्त्रेण, अन्यदेवेषु स्वस्वमूलमन्त्रेणावाह्य सकलीकृत्य स्नानकाले नीराज्य शन्नोदेवीरिति मन्त्रं जपन् तण्डुलपूर्णकलशेनाभिषिच्य पुनः मूलमन्त्रेण स्वर्णरत्नोदपूर्णकलशेनाभिषिच्य व्याप्य लयाङ्गं कृत्वा नीराज्य सम्पूज्यार्घ्यं दत्वा पुष्पाञ्जलिं कृत्वा रक्षेत्। ओं हौं इति प्रासादमन्त्रः। पञ्चाक्षरोक्ता[1] ऋष्यादयः। हां हृदयाय। हीं शिरसे। हूं शिखायै। हैं कवचाय। हौं नेत्रत्रयाय। हः अस्त्राय इत्यङ्गानि। पुनः गर्भगृहं संशोध्य पुण्याहपात्रं न्यग्बिलं न्यस्य मूर्तिपेभ्यः पवित्रादिकं दत्वा पात्रमुत्तानीकृत्य दर्भाक्षतपुष्पचन्दनजलानि निक्षिप्य जलं सम्पूर्य स्वर्णफलं च निक्षिप्याच्छाद्य स्वमूलेन सम्पूज्य सम्भूष्य तत्राग्रे वास्तुं सङ्कल्प्य पवित्रदर्भादिकं दत्वा ओं मनस्समाधीयतामित्यादि मूर्तिपैस्सह ओं वास्तुदेवताः प्रीयन्तां, ओं प्रीयन्तां वास्तुदेवताः इत्येतत्सहितं पुण्याहं विधाय देवस्य शार्वरीं पूजां कुर्यात्। इति प्रासादशुद्धिः।

***बिम्बशुद्धिः***- क्षाळनप्लावनस्नानमार्जनानि यथाक्रमम्। धारावगाहसेकाश्च सप्तैता बिम्बशुद्धयः इति।

***चतुःशुद्धिः***- अग्रतः स्वस्तिकचतुष्कं कृत्वा व्रीहिभिः पीठानि विधाय अग्न्यादिखण्डेषु पात्रचतुष्कं न्यग्बिलं न्यस्य तत्रोपविश्य देहशुद्ध्यादिकं कृत्वा गणपतिं सम्पूज्य निवेद्य पुष्पाञ्जलिं कृत्वा पीठं सम्पूज्य पात्राणां शोषणादि कृत्वा दर्भविन्यासादिकं विधाय उत्तानीकृत्याधोग्रं कूर्चं न्यस्य अग्निखण्डपात्रे दर्भमृत्त्वग्भिः[2] सम्पूर्य निर्ऋतिखण्डपात्रे अक्षतपत्रपुष्पसहितजलैः सम्पूर्य वायुखण्डपात्रे कूर्चाक्षतपुष्पफलगन्धस्वर्णसहितजलैः सम्पूर्य ईशखण्डपात्रे पूर्वोक्तद्रव्यैः सम्पूर्य तद्विधाय पूनर्मूलेन पृथगावाह्य सम्पूज्य किंञ्चिन्निवेद्य प्रसन्नपूजां कृत्वा वस्त्रेणाच्छाद्य रक्षेत्। पुनः गर्भगृहे उपविश्य किञ्चित्पीठं सम्पूज्यावाह्य सकलीकृत्य स्नानकाले अग्निखण्डस्थितदर्भमृत्त्वग्भिः पृथक् तूष्णीं सङ्घृष्य जलैः संक्षाल्य पुनः किंचित्सम्पूज्य निवेद्य प्रसादयेद्वा[3]। पुनरपि पीठं किंचित्सम्पूज्यावाह्य सकलीकृत्य स्नानकाले वा निर्ऋतिखण्डस्थितद्रव्यैः अमन्त्रमाप्लावयेत्। पुनः पूजादिकुर्याद्वा[4]। पुनर्यथाविधि पीठं सम्पूज्य मूलेनावाह्य

---

१ वामदेवऋषिः इत्याद्याः।
२ दर्भशकलैः वल्मीक मृदा क्षीरिद्रुमत्वग्भिः इत्यर्थः]
३ इति क्षालनम्।
४ इति स्नानम्।

सकलीकृत्य स्नानकाले एवमभिषिच्य नीराज्य वायुखण्डस्थितद्रव्यैः मूलमन्त्रेण शान्तिं स्मरन् स्नापयेत्। पुनः पूजादि कुर्याद्वा[1]। पुनः यथावत्पीठं सम्पूज्य मूलेनावाह्य सकलीकृत्य स्नानकाले अभिषिच्या[2] ग्रभागं संशोध्य ईशानखण्डस्थितद्रव्यं तत्र न्यस्य पुण्याहं कुर्यात्। तच्छेषेणाभिषेचयेत् इति मार्जनम्। पुनः देवं सम्पूज्य निवेद्य प्रसन्नपूजां कुर्यात्। इति चतस्रः शुद्धयः।।

***धारा-*** पुनस्तद्वत्सर्वं संशोध्य ईशकोणे स्वस्तिकं कृत्वा धान्यराशिं निक्षिप्य सूत्रवेष्टितं महत्कटाहं न्यग्बिलं न्यस्य तत्रोपविश्य सकलीकृत्य शङ्खपूरणादि कृत्वा कटाहे पीठपूजां कृत्वा शोषणदाहनप्लावनकाठिन्यसुषरीकरणानि कृत्वा दर्भविन्यासं अष्टगन्धप्रोक्षणं अक्षतविकिरणं च विधाय सम्पूज्योत्तानीकृत्य न्यस्य पुष्पाक्षतसहितमधोग्रं कूर्चं न्यस्य शङ्खे जलं कृत्वा अष्टगन्धं विलोड्य पद्मं मूर्तिं च न्यस्य सङ्कल्प्य मूलेनावाह्य सकलीकृत्य किंचिदभ्यर्च्य कटाहे निषिच्य गालितोदकेन यथावत्सम्पूर्य पल्लवचक्रिकादिकं न्यस्य स्वर्णक्लृप्तं रजतक्लृप्तं च कूर्मद्वयं मत्स्यद्वयं च न्यस्य कन्दपुष्पपत्रसहितं पद्मं मृणालं च निक्षिप्य वं वरुणाय नमः इति वरुणमूर्तिं सङ्कल्प्य ओं ओं ओं आयातु वरुणः शीघ्रं प्राणिनां प्राणरक्षकः। अतुल्यबलवानत्र सर्वदुष्टप्रशान्तये। ओं ओं ओं वरुण भगवन्नागच्छागच्छ। ओं वरुणमावाहयामि। इति वरुणमावाह्य वामित्याद्यङ्गैः सकलीकृत्य सम्पूज्य तीर्थमन्त्रेण तीर्थमावाह्य सम्पूज्य मूलेन देवमावाह्य सम्पूज्य निवेद्य प्रसन्नपूजां कृत्वा व्याप्य लयाङ्गं कृत्वा अवते हेळ°।। उदुत्तमं°।। इमं मे वरुण°।। तत्त्वायामि°।। त्वन्नो अग्ने° (इति )पञ्चवारुणं सञ्जप्य। इमा आपः शिवाः सन्तु शुभाः शुद्धाश्च निर्मलाः। पावनाः शीतलाश्चैव पूताः सूर्यस्य रश्मिभिः इति, मूलमन्त्रं च यथाशक्ति सञ्जप्य रक्षेत्। पुनः देवस्य पीठपूजां कृत्वा मूर्तिं सङ्कल्प्यावाह्य सकलीकृत्य स्नानकाले अर्घ्यादित्रयं पाद्यादित्रयं वा दत्वा अभिषिच्य पलाशेन क्षीरवृक्षैर्वा पादत्रयं विधाय तेषु पात्राधारं देवस्योपरि स्थिरीकृत्य ताम्रादिकृतं स्वर्णरंध्रं धारापात्रं अधोग्रकूर्चं आधारे न्यस्य पादानां शोषणदाहनप्लावनानि कृत्वा अं नमः, उं नमः मं नमः इति सम्पूज्य आधारे पात्रे च शोषणदाहनप्लावनकाठिन्यसुषरीकरणानि कृत्वा तद्द्वयं कूर्चं च प्रणवेन सम्पूज्य तत्र गन्धाक्षतपत्रपुष्पाणि निक्षिपेत्। पुनः पूजितं जलं शङ्खेन गृहीत्वा अष्टगन्धं विलोड्य पद्मं मूर्तिं च सङ्कल्प्य स्वमूलेनावाह्य सम्पूज्य मूलेन पात्र

---

१ इति स्नानम्। २ आप्यैः चितिः स्रुगित्यादिभिः, शूलिनि ब्रह्मभिश्च कूर्चाग्रैः संप्रोक्ष्य।

परिपूर्य तच्छेषजलैः परिपूरयेत्। पुनः कूर्चाग्रेण निर्गतां प्रभूतां धारां बिम्बस्य मूर्ध्नि याममात्रं समापातयेत्। तत्रैतान् मन्त्रान् जपेत्। धारायां कृतमनसः ब्राह्मणाश्च पात्रं संस्पृश्य पञ्चतत्वानि शिवे ब्रह्माणि च दशप्रणवगायत्रीं चतुर्वेदानामादीन् स्वस्वसूक्तानि पावमानं पुरुषसूक्तं वात आवातु... इत्यादि जपेयुः।अत्राखिलाः संहिता वा जपेयुः तत्पक्षे पञ्चतत्वादि वातआवात्ववसानानि उक्तानि आदावन्ते च जपेयुः। शिवे कद्रुद्रायेत्यादिसूक्तानि। विष्णौ अतो देवा इत्यादिसूक्तानि। शङ्करनारायणे एतद्द्वयं च[1] स्कन्दे अग्निं होतारं इत्यादि कुमारं माता इत्यादि यस्मिन्वृक्षे इत्यादि[2]। गणपतौ कद्रुद्रायेत्यादि गणानान्त्वेत्यादि। दुर्गायां अतो देवा इत्यादि, जातवेदसेत्यादि दुर्गाः जपेयुः। इति धारां जप्त्वा यामान्ते धारापात्रगतं चैतन्यं पुष्पेण देवे उद्वास्य व्याप्याङ्गं कृत्वा पादादिकं क्वचित्प्रदेशे निधाय संरक्ष्य स्थलं संशोध्य पूर्ववत्पुष्पादिकं सम्भृत्य वस्त्राद्युपहारान् दत्वा यथाविधि देवं सम्पूज्य निवेद्य द्वारं बध्वा वैश्वदेवं कृत्वा परिषद्बलिं विकीर्याचम्यान्तर्गत्वा नैवेद्यं विसृज्य प्रसन्नपूजां विधाय पुष्पाञ्जलिं कृत्वा पूजां समाप्य व्याप्य लयाङ्गं कृत्वा रक्षेत्। एवं दिवसत्रये धारां जपति चेत्तत्रैव धाराकटाहं अप्रचाल्य रक्षेत्। ऊर्ध्वदिवसे देवस्य अभिषेकादिकं कृत्वा सम्पूज्य पुनः धारार्थं पीठं सम्पूज्यावाह्य स्नानकाले देवमभिषिच्य पूर्ववद्धारापात्रादिकं स्थिरीकृत्य कटाहे पर्युषितं जलं सन्त्यज्य शुद्धजलैः सम्पूर्य पूर्ववत्पीठपूजादिकं सर्वं कृत्वा धारापात्रं सम्पूर्य जपेत् पुनः पूजयेच्च। तृतीयदिवसे एवं सर्वं कृत्वा जपावसाने कटाहगतचैतन्यं सर्वं देवे उद्वास्य धारापात्रगतं चैतन्यं च व्याप्याङ्गं कृत्वा मत्स्ययुग्मं कमठयुग्मं च स्वीकृत्यान्यत्सर्वं बहिः सन्त्यज्य संक्षाळ्य पुष्पादिकं सम्भृत्य यथोक्तविधिना देवं सम्पूजयेत् इति धाराप्रकारः।

***तदुचितदिनेऽवगाहं*** कुर्यात्। तत्राग्रमण्टपे वा क्वचित् प्रदेशे स्वस्तिकं कृत्वा धान्यानि निक्षिप्य दर्भान् विन्यस्य अताम्रं?[लौहं] महत् पात्रं न्यग्बिलं न्यस्य दक्षिणभागे दीपं न्यस्य पात्रे पीठं सम्पूज्यास्त्रेण पात्रं संक्षाळ्य कवचेन सूत्रं संवेष्ट्य मूलेनाष्टगन्धं विलिप्य प्रणवेन धूपयित्वा मूलेन पीठे न्यग्बिलं

---

१ अतो देवेत्यादि कद्रुद्रायेत्यादि। २ अत्र किंचित् लुप्तमित्याभाति। इदमत्र ज्ञेयम् शास्तरि- यान ऊतिरव मा इत्यादिकं, वैष्णवं शैवं च, षण्मुखे अग्निर्होता नो अध्वरे इत्यादिकं, गणपतौ-गणानान्त्वेत्यादिकं, स्कन्दे गणपे च रुद्रोक्तञ्च। दुर्गायां- जातवेदसेत्यादिकं वैष्णवं च।

न्यस्य पुनः यं रं वं लं हं इति पृथक्पञ्चविंशतिसंख्यं प्राणायामं कृत्वा पुनः पञ्चतत्वेषु आद्येन दर्भविन्यासं द्वितीयेनाष्टगन्धप्रोक्षणं तृतीयेनाक्षतविकिरणं च विधाय मूलेन सम्पूज्य चतुर्थेनोद्धृत्य उत्तानीकृत्य मूलनिष्ठेन पञ्चमेन पीठे न्यसेत्। पुनः प्रणवेन गन्धपुष्पाक्षतसहितं कूर्चमधोग्रं न्यस्य किंचित्सम्पूज्य स्वस्वमन्त्रैः गोमूत्रादि पञ्चगव्यानि परिमीय संयोज्य प्रणवेन पलाशमथ्ना विलोड्य एकीकृत्य पुनः प्रणवोपचारसहितेन मूलेनावाह्य लिपिन्यासादिभिः सकलीकृत्य उपहारान् दत्वा सम्पूज्य निवेद्य प्रसन्नपूजां कृत्वा पूजां समाप्य वस्त्रेणाच्छाद्य रक्षेत्। तत्समीपे स्वस्तिके पात्रं कृत्वा अष्टगन्धजलेन च तथा प्रपूर्य सम्पूज्य रक्षेत्।

***पञ्चगव्यप्रमाणम्***- स्वेच्छया गोमूत्रं परिमीय तदर्धं गोमयं गोमूत्रेण सप्तगुणं क्षीरं त्रिगुणं दधि गोमूत्रतुल्यमाज्यं इति परिमाणम्। तत्सवितुरिति गोमूत्रस्य गन्धद्वारामिति गोमयस्याप्यायस्वेति क्षीरस्य दधिक्राव्णो इति दध्नः मन्त्राः। तेजोऽसि तेजोनुप्रेहि अग्निस्ते तेजो मा विनैत्। अग्नेर्जुह्वासि सुभूर्देवानां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे भव शुक्रमसि ज्योतिरित्याज्यस्य मन्त्रः इति पञ्चगव्यादिकं सम्पूज्य प्रासादे अन्तर्गत्वा तत्र पीठं सम्पूज्यावाह्य सकलीकृत्य स्नानकाले जलैरभिषिच्य वस्त्रेण दर्भैः संवेष्ट्य पुनः पीठे पाथोवलये उदकधात्र्यां वा पलाशादिभिर्निर्मितं पञ्जरं यथावत्स्थिरीकृत्य माषपिष्टैर्विलिप्य साधुविच्छिद्रं कृत्वा नीराज्य पञ्चगव्यमानाय्य तेन सम्पूर्यावगाहं कुर्यात्। अत्र ब्राह्मणैः सह धारायामुक्तसूक्तादिकं प्रजप्य जपावसाने तत्पञ्चगव्यं सर्वं त्यक्त्वा शुद्धजलैः संक्षाळ्य पुनः पूर्ववत् पञ्जरं स्थिरीकृत्य माषपिष्टैः निच्छिद्रं कृत्वा सान्द्रीभूतैरष्टगन्धजलैरवगाह्य प्रजप्य पञ्जरादिकं त्यक्त्वा सर्वं संशोध्य जलैः संक्षाळ्य पुष्पादिकं पूर्ववत्सम्भृत्य वस्त्राद्युपहारान् दत्वा देवं यथावत्सम्पूज्य नैवेद्यं (वैश्वदेवं)च कृत्वा परिषद्बलिं विकीर्याचम्यान्तः प्रविश्य नैवेद्यं विसृज्य प्रसन्नपूजां विधाय रक्षां कुर्यात्। इति सर्वेषु अवगाहकर्म। शिवे विशेषः- यथोक्तवत्पञ्चगव्यं प्रपूज्य स्नानकाले शिवलिङ्गं वस्त्राद्यैः संवेष्ट्य पञ्चगव्यैः सम्पूर्य प्रणवं प्रासादं मूलमन्त्रं व्योमव्यापिद्वयं पञ्चब्रह्माणि श्रीरुद्रं विप्रैः सह जपेत्।

***अग्निमुखम्***-पूर्वपूजितपञ्चगव्यस्योत्तरभागे उपलिप्योल्लिख्याग्निं निधाय अल्पेन्धनानि निक्षिप्य ज्वलिते सति अग्नीषोमावाज्यभागौ रुद्रः अग्निः स्विष्टकृत्

इत्यन्वाधानं कृत्वा दर्भद्वयं समित्पूगं च बध्वा उत्तरभागे न्यस्य किञ्चिदुपलिप्य परिसमुह्य परिस्तीर्य प्रणीतार्थं दर्भद्वयं निक्षिप्य दर्भद्वयं प्रादेशमात्रं परिमीय छित्वा पवित्रं प्रकल्प्य दक्षिणेन प्रणीतापात्रे न्यस्य वामेन गृहीत्वा दक्षिणेन पादोनप्रस्थजलं सम्पूर्य त्रिः परिषिच्य नासिकान्तमुद्धृत्य ब्रह्माणं निरीक्ष्य न्यस्य उपरि दर्भद्वयं न्यस्य पवित्रं दक्षिणेनाज्यस्थाल्यां न्यस्य वामेन गृहीत्वा दक्षिणेनाज्यं निक्षिप्याङ्गारत्रयं कृत्वा तेषाज्यस्थालीं न्यस्य दर्भद्वयेनाज्यस्थाल्यामग्नेर्ज्वालां प्रदर्श्य विशीर्य दर्भयोरग्रे छित्वा संक्षाल्य संशोष्याज्ये निक्षिप्य हविषा सह पर्यग्नीकृत्य आज्यमुत्तरत अवतार्याग्रतः कृत्वा अङ्गारानग्नौ संयोज्य हस्तं प्रक्षाळय हस्तयोरङ्गुष्ठानामिकाभ्यां उत्तराग्रं पवित्रं गृहीत्वा सवितुष्ट्वाप्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः इति सकृन्मन्त्रमुक्त्वा पश्चिमादि पूर्वावसानं, पुनर्द्विवारं तूष्णीं च उत्पूय पवित्रं प्रोक्ष्याग्नौ क्षिप्त्वा अग्रतः दर्भद्वयं संस्तीर्याज्यपात्रं तस्मिन्प्रतिष्ठाप्य स्रुवं जुहूं च संस्कृत्य हविष्युपस्तीर्य उदगवतार्य उपस्तीर्य दक्षिणतः न्यस्य पश्चिमे दक्षिणे उत्तरे च परिधीन्न्यस्य पूर्वे आदित्यं सङ्कल्प्य पुष्पमाराध्य ऊर्ध्वसमिधौ क्षिप्त्वा परिषिच्य गन्धपुष्पेणाभ्यर्च्य पीठं सम्पूज्यावाह्य सकलीकृत्योपहारान् दत्वा सम्पूज्य नैवेद्यकाले इध्मं गृहीत्वा बन्धनं श्लथयित्वा हस्तं प्रक्षाळय उपस्तीर्यानुयाजं पाशं च तत्रैव न्यस्य, गौतमो वामदेवऋषिः, अग्निर्जातवेदा देवता, त्रिष्टुप् छन्दः अयन्त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्धस्व चेद्ध वर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा इतीध्मं हुत्वा, अग्नये जातवेदस इदं न मम इत्युद्देशत्यागं कृत्वा। प्रजापतिर्देवता, प्रजापतये स्वाहा। प्रजापतय इदं न मम। इत्यग्नेर्दक्षिणवामक्रमेणाघारौ कृत्वा अग्निर्देवता। अग्नये स्वाहा अग्नय इदं न मम। सोमो देवता। सोमाय स्वाहा सोमायेदं न मम इति चक्षुषी कृत्वा पुनः प्रणवव्याहृतिपीठमन्त्रैः सकृत्सकृदाज्यं हुत्वा तत्पुरुषेण पक्वं हुत्वा पूजामन्त्रैः सकृत्सकृदाज्यं हुत्वा व्योमव्यापिदशाक्षरेण पूर्णं हुत्वा मूलेनाष्टवारमाज्यं हुत्वा पूर्णाहुतिं जुहुयात्। पुनः पञ्चब्रह्मभिः शतमाज्यं हुत्वा पूर्णां हुत्वा अघोरेणाष्टशतं समिदाज्यचर्वाज्यानि हुत्वा अन्तरान्तरा पृथक् पूर्णां हुत्वा स्विष्टकृदादिहोमं समाप्याग्निं सम्पाते उद्वास्याग्निं विसृजेत् तत्सम्पातं पञ्जरस्थशिवलिङ्गे संस्पृशेत्। पुनः जपं कुर्यात् इति शिवे विशेषः। गुरुतरदोषे विशेषावगाहः। **अत्यन्तंगुरुतरे दोषे** - गोमूत्रादिद्रव्यैः पृथक्पृथगवगाह्यान्ते समस्तैः पञ्चगव्यैरवगाह्य

पुनरष्टगन्धैरवगाहयेत्। यद्वा दोषे गरीयसि दिवसे दिवसे गोमूत्रादिद्रव्यैरष्टगन्धजलैश्चावगाहयेत्। पुनर्देवं पूजयेच्च। अल्पदोषे पञ्चगव्याभिषेकमात्रेण शुद्धिः इत्यवगाहप्रकारः। *अभिषेकः*- गव्यस्येव पदां कृत्वा व्रीहिभिः पीठं विरचय्य दर्भान् विन्यस्य मध्ये पूर्वादिचतुर्दिक्षु च सूत्रवेष्टितान् पञ्चकलशान् निधाय दीपादिकं न्यस्य गुरुस्तत्रोपविश्य देहशुद्धिशङ्खपूरणात्माराधनानि विधाय गुरुं गणपतिं च सम्पूज्य गुरवे अर्घ्यं दत्वा गणपतये नैवेद्यं कृत्वा उभयत्र पुष्पाञ्जलिं कुर्यात्। पीठं सम्पूज्य मध्यादि कुम्भान् संस्पृश्य उत्तानीकृत्य कूर्चाण्यधोग्राणि न्यस्य शिवे ईशानादिपञ्चब्रह्मभिः पञ्चतत्त्वैर्वा विष्ण्वादिषु देवेषु पञ्चतत्त्वैरेव शङ्खजले प्रत्येकमावाह्य तेन तेन मध्यादिपञ्चकुम्भेषु प्रत्येकं प्रपूर्य अन्यजलैर्यथावत्प्रपूर्य पल्लवचक्रिकादिकं न्यस्य दर्भान् विन्यस्य शिवे ईशानादिपञ्चब्रह्मभिः पञ्चतत्त्वैर्वा विष्ण्वादिषड्देवेषु पञ्चतत्त्वैरेव मध्यादिपञ्चकुम्भेषु प्रत्येकमावाह्य प्रणवेनाङ्गं कृत्वा उपहारान् दत्वा तेन तेन तत्वेन सम्पूज्यार्घ्यं दत्वा पुष्पाञ्जलिं कृत्वा पुनः प्रणवेनैकीकृत्य प्रणवोपचारमूलैरावाह्य लिपिन्यासं पञ्चतत्वन्यासं मूलाक्षरन्यासं च विधाय उपहारान् दत्वा यथाविधि सम्पूज्य निवेद्य प्रसन्नपूजां कृत्वा व्याप्य लयाङ्गं कृत्वा स्वस्वपञ्चतत्वैः पुष्पाञ्जलिं विधाय पृथक् कृत्वा यथाशक्ति [illegible]त्वानि सञ्जप्य वस्त्रेणाच्छाद्य रक्षेत्। पुनः गर्भगृहं प्रविश्य पीठपूजां विधाय देवमावाह्य सकलीकृत्य स्नानकाले शुद्धजलैरभिषिच्य नीराज्य स्वपञ्चतत्त्वैः मध्यादिघटैरभिषिच्य प्रणवेन त्रिर्व्याप्य हृदये स्पृष्ट्वा पञ्चतत्वानि सञ्जप्य सर्वाङ्गे पृथक् व्याप्य पञ्चस्थानेषु सूत्रन्यासं कृत्वा, पुनर्लिपिन्यासं पञ्चतत्वन्यासं मूलाक्षराङ्गन्यासं विधाय नीराज्य वस्त्राद्युपहारान् दत्वा सम्पूज्य निवेद्य वैश्वदेवं कृत्वा बलिं विकीर्यान्तः प्रविश्य नैवेद्यं विसृज्य प्रसन्नपूजां कृत्वा पूजां समाप्य व्याप्य लयाङ्गं कृत्वा रक्षेत्। अथवा अवगाहान्तां विशुद्धिं कृत्वा उक्तवत् पञ्चकं सम्पूज्य गर्भगृहं प्रविश्य गुरुं गणपतिं [illegible]ज्य पाणौ जलं सङ्गृह्य प्रणवमष्टवारं सञ्जप्य बिम्बं प्रोक्ष्य संरक्ष्य पुनरपि प्रोक्ष्य हृदये स्पृष्ट्वाष्टवारं प्रणवं जप्त्वा चैतन्यं सुषुम्नानाड्या स्वात्मन्युद्वास्य बिंम्बस्य पादाग्रनाभिहृदय-कण्ठतालुदेशेषु संस्पृश्य लं वं रं यं हं इति जप्त्वा ए[illegible] पञ्च भूतानि सङ्कल्प्य पादाग्रं स्पृष्ट्वा ह्लां[1] इति पञ्चविंशतिसं[illegible] पृथक् पञ्च

---

१ सर्वत्र पञ्चभूतबीजानि विवक्षितानि।

प्राणायामान् विधाय ह्लां हुं फट् इति पादाग्रादिनाभ्यन्तं व्याप्य पृथिवीमप्सु संहरेत्। पुनः नाभिदेशं स्पृष्ट्वा ह्रीमिति पञ्चविंशतिसंख्यं पृथक् चतुःप्राणायामान् विधाय ह्रीं हुं फट् इति नाभ्यादिहृदयान्तं व्याप्य अपः अग्नौ संहरेत्। पुनः हृदयं स्पृष्ट्वा ह्रू मिति पञ्चविंशतिसंख्यं पृथक् त्रिवारं प्राणायामान् विधाय ह्रूं फट् इति हृदयादिकण्ठान्तं व्याप्य अग्निं वायौ संहरेत्। पुनः कण्ठदेशं स्पृष्ट्वा ह्रैमिति पञ्चविंशतिसंख्यं पृथग्द्विवारं प्राणायामौ कृत्वा ह्रैं हुं फट् इति कण्ठादिताल्वन्तं व्याप्य वायुमाकाशे संहरेत्। पुनस्तालुदेशं स्पृष्ट्वा ह्रौमिति पञ्चविंशतिसंख्यं सकृत् प्राणायामं कृत्वा ह्रौं हुं फट् इति ताल्वादिमूर्धान्तं व्याप्य आकाशं परमात्मनि संहरेत्। पुनः शोषणदाहनप्लावनकाठिन्यानि कृत्वा प्रणवेन बिम्बं प्रकल्प्य स्वात्मनि संहृतं चैतन्यं बिम्बे नियोज्य ओं ह्रीं इत्यैक्यं सम्भाव्य ओं ह्रौं नमः इत्यादि पूर्ववत् प्राणायामं व्यापकं च विधाय पञ्चभूतानि सृष्ट्वा संवत्सरोषितमण्डभेदं च विधाय लिपिप्राणायामं लिपिन्यासं च विधायाङ्गं कृत्वा पुनः मन्त्रप्राणायामं विधाय व्याप्य मूलाक्षराङ्गं कृत्वा पीठं सम्पूज्य स्वहृदयादावाह्य लिपिपञ्चतत्वमूलाक्षराङ्गानि कृत्वा स्नानकाले पञ्चकेनाभिषिच्य न्यस्य सम्पूजयेत् इति गुरुतरे दोषे विशेषविधिः। सर्वेष्वेवं सप्तशुद्धिं कृत्वा पुण्याहं कुर्यात्।

*सुब्रह्मण्ये महाकुम्भाभिषेकः*- तत्प्रकारस्तु अग्रभागे षड्दलार्थं प्रागग्राणि उदगग्राणि च पंचसूत्राणि पातयित्वा तत्र षोडशपदेऽन्तश्चतुष्के समं वृत्तत्रयं कृत्वा मध्यवृत्ते कर्णिकां तद्बहिर्दलसन्धीन् तद्बाह्ये प्रागादिषड्दलानि कृत्वा दलसन्ध्यर्धे केसरान् विधाय दिक्षु द्विपदं द्वारं कोणेष्वेकपदं कोणं भद्रोक्तवत् अष्टदलोक्तवद्वा पूरणं इति षड्दलं पद्मं कृत्वा व्रीह्यादिभिः पीठं विरचय्य तत्र सूत्रवेष्टितं महाकुम्भं न्यग्बिलं न्यसेत्। पुनःदीपादिकं न्यसेत्। गुरुस्तत्रोपविश्य देहशुद्धिं शङ्खपूरणं आत्माराधनं च विधाय गुरून् गणपतिं सम्पूज्य गुरवेऽर्घ्यं दत्वा गणपतये निवेद्य उभयत्र पुष्पाञ्जलिं कुर्यात्। पुनः पीठं सम्पूज्य भुवनेश्वरीमावाह्य सम्पूज्य षड्दलपद्ममुद्रां कुर्यात्। पुनः प्रागादिदलेषु ब्रह्मणे नमः, भद्रकाल्यै नमः, गणपतये नमः, विष्णवे नमः, ईश्वराय नमः, शास्त्रे नमः इति सम्पूज्य घटमस्त्रेण संक्षाल्य कवचेन सूत्रेण संवेष्ट्य मूलेनाष्टगन्धैर्विलिप्य प्रणवेन धूपयित्वा मूलेन न्यग्बिलं न्यस्य शोषणदाहनप्लावनकाठिन्यसुषरीकरणानि कृत्वा पञ्चतत्वैः क्रमेण दर्भविन्यासं, अष्टगन्धप्रोक्षणं, अक्षतविकिरणं च विधाय

मूलेन सम्पूज्य चतुर्थेनोत्तानीकृत्य उद्धृत्य पञ्चमं षष्ठं मूलं चोक्त्वा पीठे न्यसेत्। प्रणवेन कुम्भमुखं प्रोक्ष्य कलाः न्यस्य सम्पूज्य कूम्भावाहनं विधाय सम्पूज्य कूर्चं न्यस्य मानसपूरणं कृत्वा गालितैः पूजितैर्जलैः प्रपूर्य तस्मिन् सुवर्णेन निर्मितं पद्मं,गजं,मयूरं,शक्तिं, वज्रं च कुम्भे निक्षिप्य लिपिपङ्कजं सम्पूज्य क्षेत्रज्ञतत्वेनावाह्य सम्पूज्य पुनर्मूलेनावाह्य लिप्यादिभिः सकलीकृत्याघ्र्यादि दत्वा स्नानकाले कुम्भस्याग्रतः पुण्याहपात्रं कृत्वा ओं सुब्रह्मण्यदेवताः प्रीयन्तामिति सहितं पुण्याहं कृत्वा शिष्टजलैः कुम्भं प्रपूर्य वस्त्राद्युपहारान् दत्वा पुनः प्रणवोपचारमूलाक्षराङ्गायुधैः, पुनः सनत्कुमारादिमूर्त्यङ्गेन्द्रादिभिः सम्पूज्य जयन्ताद्यष्टान्तरालेषु आदित्येभ्यो नमः अश्विभ्यां नमः, पितृभ्यो नमः, गणपतये नमः, मातृभ्यो नमः,अप्सरोभ्यो नमः, वसुभ्यो नमः, रुद्रेभ्यो नमः इति सम्पूज्य पुनरस्त्रादि, धूर्तसेनान्तं संपूज्य निवेद्य प्रसन्नपूजां कृत्वा पूजां समापयेत्। तस्य पार्श्वद्वये स्वस्तिकद्वयं कृत्वा तत्र दक्षिणे[1] पञ्चगव्यं वामे विकिरं च संयोज्य न्यस्यास्त्रेण सम्पूज्य रक्षेत्। व्रीहियवतिलतण्डुलमाषसर्षपदूर्वादर्भकुशाग्रतुलसीदलपद्मकेसराणि विकिरं स्यात्। इति महाकुम्भं सम्पूज्य गुरुर्विप्राश्च कुम्भं संस्पृश्य एतान् मन्त्रान् जपेयुः।अग्निमीळेत्यादि, कद्रुद्रायेत्यादि,अग्निर्होतानो अध्वरेत्यादि, कुमारं मातेत्यादि कनिक्रददित्यादि,स्वस्तिनो मिमीतेत्यादि, हिरण्यवर्णामित्यादि, शन्न इन्द्राग्नीत्यादि, शन्नोदेवीरित्यादि, सहस्रशीर्षेत्यादि, यस्मिन् वृक्षेत्यादि, वात आवातु इत्यादि, पुनर्मूलमन्त्रद्वयं अङ्गमन्त्राश्च गायत्रीषण्मन्त्राः द्वादशमन्त्राः प्रणवश्च जपमन्त्राः। इति विप्रैः सह सञ्जप्य गर्भगृहं प्रविश्य पीठं सम्पूज्य मूलेनावाह्य लिपितत्वमन्त्रैः सकलीकृत्य अर्घ्याद्युपहारान् दत्वा स्नानकाले शुद्धजलैरभिषिच्य बहिर्निर्गत्य पीठमुद्वास्य नीराज्य कलशं पञ्चगव्यं विकिरं कुशपलाशशमीशाखाश्चोद्धृत्त्यान्तः प्रविश्य देवं नीराज्य आपोहिष्ठेत्यादिभिः मूलद्वयेनाङ्गमन्त्रैः गायत्र्या षण्मन्त्रैः द्वादशनामभिश्च देवमभिषिच्य तच्छेषजलैः कुशपलाशशमीपल्लवैः आपोहिष्ठाद्यभिषेकोक्तमन्त्रैः प्रोक्ष्य अस्त्रेण पञ्चगव्यप्राक्षणं विकिरार्पणं च विधाय सावशेषमभिषिच्य त्याप्याङ्गकृत्वा तैः सह बहिर्निर्गत्य द्वारस्थादिपरिवारान् महाबलिपीठं च संप्रोक्ष्य पञ्चगव्यप्रोक्षणं विकिरार्पणञ्च विधाय धूर्तसेनान्तं तत्त्रयं समर्पयेत्। पुनर्देवं सम्पूज्य निवेद्य वैश्वदेवादिकं कृत्वा नैवेद्यं विसृज्य प्रसन्नपूजां कृत्वा शेषं समाप्य रक्षेत् इतिसुब्रह्मण्ये

---

1 उदग्भागस्थस्वस्तिकयोरिति विमर्शिन्याम्।

महाकुम्भप्रोक्षणप्रकारः। सर्वदेवेषु निमित्तं द्रव्यं चानुसृत्य वेदजपैः सह सप्तशुद्धिं कृत्वा पुनर्मरणादिदोषशान्त्यै आगमोक्तहोमं कुर्यात्।

***अग्निजननप्रकारो*** लिख्यते- मुष्ट्यादीन् संसाद्य कुण्डस्य स्थलशुद्धिं कृत्वा[1] दर्भेण कुण्डं स्पृष्ट्वा यं रं वं लं हं रं इति बीजैः पृथक् पञ्चविंशतिसंख्यं प्राणायामं कुर्यात्[2]। इति कुण्डस्याग्निजनने विशेषशुद्धिः। पुनरग्निं जनयेत्। पुनः स्वस्वास्त्रमन्त्रेण स्वगृह्योक्तप्रकारेणायतनमुल्लिख्य पुनरभ्युक्ष्य[3] शकलं सन्त्यज्य पुष्पाक्षताष्टगन्धजलकूर्चैः प्रणवेन विष्टरं न्यस्य पीठपूजां विधाय शक्तिमावाह्य[4] मुद्राः प्रदर्श्य शिवादिषु ह्रां हृदयाय नमः। ह्रीं शिरसे। ह्रूं शिखायै। ह्रैं कवचाय। ह्रौं नेत्रत्रयाय। ह्रः अस्त्राय इत्यङ्गानि कृत्वा उपहारान् दत्वा सम्पूज्य कूण्डशक्तिमेवं ध्यायेत्। ॠतुस्नातां शुद्धां प्राग्भागे शिरः, पश्चिमे पादौ, दक्षिणोत्तरौ बाहू , इत्युत्तानीभूतां आत्मनः पुत्रमिच्छन्तीं सुरताभिलाषां ध्यात्वा नाभौ कूर्चं विन्यस्य विप्रावसथ्यादग्निमादाय नाभौ न्यस्य क्रव्यादभागं निर्ऋतौ त्यक्त्वा अग्निचैतन्यमात्मन्युद्वास्य प्रणवेनाङ्कं कृत्वा अग्नौ शोषणदाहने कृत्वा पद्मं सङ्कल्प्य स्वहृदयादग्निचैतन्यं तत्रावाह्य प्रणवेनाङ्कं कृत्वा ओं रं ओं इति पूजयेत्। तत्सर्वं शीघ्रमेव कुर्यात्। पात्रे सन्ताड्य उद्बोधयित्वा पिधानं त्यक्त्वा जानुभ्यां स्थित्वा अग्निमुद्धृत्य कुण्डस्योपरि त्रिः परिभ्रमय्य प्रणवेन कुण्डं प्रकृतेर्योनिं, अग्निं, देवस्य रेतः ध्यात्वा अग्निं कुण्डे विनिक्षिप्य गर्भाशयं प्रापय्य पुनरल्पेन्धनानि निक्षिप्य प्रज्वालयेत्। कुण्डं विलिप्य स्वचरणोक्तप्रकारेण परिसमुह्य परिस्तीर्य पर्युक्ष्याज्यसंस्कारं कृत्वा स्रुवं जुहूं संस्कृत्य गन्धपुष्पैराराध्य गर्भाधानादिक्रियाः कुर्यात्। पूर्वं प्रणवेन सम्पूज्य गर्भाधानं करिष्ये इत्युक्त्वा एकां समिधं हुत्वा स्वस्वमन्त्रेणाज्यमष्टवारं हुत्वा, स्रुवेण चतुरवदानं कृत्वा प्रणीकृत्य[5] स्रुवमुपरि न्यस्य स्थित्वा स्वस्वपूर्णाहुतिमन्त्रेण पूर्णाहुतिं कुर्यात्। उपविश्य गर्भाधानं कृतमिति वदेत्। इदानीं प्रणवेन पूजयेद्वा। इति सर्वत्र

---

१ ओं हुं फट् इति मन्त्रेण कुण्डे प्रोक्ष्य। २ शोषणादि कुर्यात्।

३ विष्णुदुर्गाशिवनारायणेषु तारेण पश्चिमत उदग्गामिनी एका, तत्पार्श्वयोः प्रागग्रे द्वे रेखे, तदन्तरास्तिस्रः, शेषेषु देवेषु पश्चिमतः उदगग्रा एका, प्रागग्रा याम्यादितस्तिस्र एव। महेशगुह्ययोरसृता रेखाः स्वास्त्रतः कुर्यात्। स्कन्देशयोः कवचतः, शेषेषु तारेण सलिलैः समुक्ष्य इति शेषः। ४ विष्णौ श्रीं बीजेन अन्येषु ह्रीं बिजेनेत्यर्थः। विष्णौ श्रामित्यादि, इतरेषु ह्रामित्यादि षडङ्गं कुर्यात्। ५ पूरणं कृत्वा इत्यर्थे प्रयुक्तमिति भाति।

अग्निसंस्करक्रिया। शिवे-गर्भाधानं पुंसवनं सीमन्तं जातकर्म नामकरणं उपनिष्क्रमणं अन्नप्राशनं चौलं उपनयनं महानाम्नीं महाव्रतं उपनिषदं[1] गोदानं समावर्तनं विवाहं अग्न्याधानं इति षोडशक्रियाः। विष्णुगुहविघ्नार्यशङ्कर-नारायणेषु गर्भाधानं पुंसवनं सीमन्तं जातकर्म नामकरणं अन्नप्राशनं चौलं उपनयनं इत्यष्टक्रियाः। दुर्गायां- गर्भाधानादिचौलान्ताः सप्तक्रियाः। शिवे-सद्योजातवामदेवाघोरतत्पुरुषेशानतत्पुरुषेशानतत्पुरुषेशान सद्योजात-वामदेवाघोरतत्पुरुषेशानव्योमव्यापिदशाक्षरप्रासादमन्त्रैः षोडशक्रियाः कुर्यात्। शास्तरि षण्मन्त्रमूलप्रणवैः[2] अष्टक्रियाः कुर्यात्। गुहे- षण्मन्त्रमूलद्वयैः[2] कुर्यात्। शङ्करनारायणे-सप्तव्याहृतिभिः चौलमुपनयन[3] च सत्येन कुर्यात्। गणपतौ-स्वाङ्गबीजमन्त्रैः[4] अन्नप्राशनं चौलं उपनयनं च अस्त्रबीजमन्त्रेण कुर्यात्। विष्णौ दूर्गायां मूलाक्षरैः कुर्यात्। सर्वेषु एवं क्रियाः कृत्वा पुनः पीठं सम्पूज्य मूर्ति सङ्कल्प्य प्रणवोपचारमूलेनावाह्य लिपितत्वमन्त्रैः सकलीकृत्य उपहारान् दत्वा सपरिवारं सम्पूजयेत्। पाद्यादित्रयं अर्घ्यादित्रयं वा दत्वा प्रणवव्याहृतिपीठमन्त्रैः प्रणवोपचारमूलाक्षराङ्गायुधपरिवारमन्त्रैश्च सकृत्सकृदाज्यं हुत्वा स्वस्वमन्त्रेण पूर्णाहुतिं कृत्वा मूलेनाष्टोत्तरशतमाज्यं हुत्वा पूर्णाहुतिं हुत्वा व्याहृतिप्रणवैः सकृत्सकृदाज्यं हुत्वा होमशेषं समाप्य गण्डूषादिकं दत्वा प्रसन्नपूजां कृत्वा समाप्य व्याप्य लयाङ्गं कृत्वा परिसमुह्य पर्युक्ष्य पुष्पैराराध्य पर्युक्ष्य रक्षां कुर्यात् इत्यग्निजननप्रकारः।

***होमसामान्यं*** लिरव्यते- कुण्डे परिस्तरणादिकं कृत्वा उपलिप्य अग्निः सोमः आज्यभागौ विष्णुः इत्यादि तत्तदेवनामान्ते अग्निः स्विष्टकृत् इत्युक्त्वा अन्वाधानं कृत्वा दर्भान् समिधश्च सम्बध्य उत्तरभागे न्यस्य परिसमुह्य परिस्तीर्य प्रणीतायां दर्भान् विन्यस्य दर्भौ प्रादेशमात्रौ छेदयित्वा प्रणीतापात्रमुद्धृत्याग्रतोन्यस्य ...णकरेण तत्पवित्रं तस्योपरि न्यस्य वामेन गृहीत्वा दक्षिणेन जलं निषिच्य

१ माहानाम्न्यं महाव्रतं औपनिषदम् पा। २ यथासंरव्यमित्यर्थः। ३चौलान्ताः सप्तक्रियाः सप्तव्याहृतिभिः अष्टममपि अन्त्येनैव इत्यर्थः। ४ गां गीं इत्यादिभिरित्यर्थः अन्तिमेनास्त्रबीजाक्षरेण संस्कारत्रयमित्यर्थः। ओं गां स्वाहा इत्येव, पीठपरिवारादिषु गुरुभ्यः स्वाहा इत्येव न तु मध्ये नमश्शब्दस्यावश्यकता। तथा चोक्तं विमर्शिन्याम्-मन्त्राणां बीजानां व्याहृतीनां विभक्तिरहितत्वं स्वाहान्तत्वं, पीठपरिवारादीनाममन्त्राणां स्वाहान्तत्वं विभक्तिसहितत्वमिति, तदुक्तमाकरे-स्वाहाकारवषट्कारौ होमे [illegible] नमस्कारो जपार्चादावैश्वर्ये प्रणवोऽन्ततः इति।

पर्युक्ष्य दर्भोपरि न्यस्य पवित्रमुद्धृत्य अन्यैर्दर्भैराच्छादयेत्। पुनराज्यस्थालीमुद्धृत्याग्रतो न्यस्य दक्षिणेन पवित्रं न्यस्य वामेन संगृह्य दक्षिणेनाज्यं निक्षिप्य कुण्डस्य मेखलोपरि त्रीनङ्गारान् सम्पाद्य तेष्वाज्यं न्यस्य द्वाभ्यां दर्भाभ्यां अभिद्योतनं कृत्वा द्वे दर्भाग्रे छेदयित्वा प्रक्षाळ्य संशोध्याज्ये क्षिप्त्वा हविषा सह पर्यग्नि कृत्वा विकृष्योत्तरभागे अवतार्याग्रतो न्यस्याङ्गारानग्नौ संयोज्य हस्तौ प्रक्षाळ्य उत्तराग्रे पवित्रे हस्तयोरङ्गुष्ठोपकनिष्ठिकाभ्यां गृहीत्वा सवितुष्ट्वेति सकृदुच्चार्य त्रिवारं गालयित्वा पवित्रे प्रोक्ष्याग्नौ क्षिप्त्वा अग्रतो दर्भान् संस्तीर्य आज्यस्थालीं न्यस्य स्रुवं जुहूं च दर्भैः संमृज्याग्नौ तप्त्वा आज्यस्थाल्यां न्यस्य दर्भानग्नौ क्षिपेत्। पुनः हविष्युपस्तीर्य उत्तरतोऽवतार्य उपस्तीर्य दक्षिणे न्यसेत्। पश्चाद्दक्षिणत उत्तरत इति क्रमेण परिधीन् न्यस्य पूर्वे आदित्यं सङ्कल्प्य पुष्पमाराध्य ऊर्ध्वसमिधौ क्षिप्त्वा पर्युक्ष्य गन्धपुष्पाणि आराध्य पर्युक्ष्य पीठपूजां कृत्वा मूलेनावाह्य सकलीकृत्य सम्पूज्य नैवेद्यकाले इध्मं गृहीत्वा श्लथयित्वा उक्तमन्त्रेण हुत्वा उद्देशत्यागं कृत्वा आघारौ चक्षुषी च कुर्यात्। अथ[1] चक्षुष्यन्ते पीठं सम्पूज्य मूलेनावाह्य सकलीकृत्य सम्पूजयेत्। प्रणवव्याहृतिपीठमन्त्रैः सकृत्सकृदाज्यं हुत्वा शिवे तत्पुरुषेण, दुर्गायां जातवेदसेत्यादिना, विष्णौ शङ्करनारायणे सुब्रह्मण्ये गणपतौ च स्वस्वगायत्र्या, शास्तरि व्याहृतियुक्तया[2] गायत्र्या पक्वं जुहुयात्। पुनः पूजामन्त्रैः सकृत्सकृदाज्यं जुहुयात् इति होमसामान्यविधिः।

***पूर्णाहुतिमन्त्राः***- शिवे व्योमव्यापिदशाक्षरेण, विष्णौ द्वादशार्णकेन, शास्तरि भूर्भुवःसुवरिति, शङ्करनारायणे दुर्गायां सुब्रह्मण्ये गणपतौ च स्वस्वमूलमन्त्रेण वौषडन्तेन द्रव्यभेदे मन्त्रभेदे अवसाने च पूर्णाहुतिं कुर्यात्। अयमपि होमसामान्यविधिः।

***गायत्र्यः***- नारायणाय विद्महे वासुदेवाय धीमहे। तन्नो विष्णुः प्रचोदयात् इति विष्णौ। शङ्कराय विद्महे नारायणाय धीमहे। तन्नः पुरुषः प्रचोदयात् इति शङ्करनारायणे। शक्तिहस्ताय विद्महे षडाननाय धीमहे। तन्नः स्कन्दः प्रचोदयात् इति गुहे। विनायकाय विद्महे गजवक्त्राय धीमहे। तन्नो विघ्नः प्रचोदयात् इति

---

१ वेत्यादश्यकं पक्षान्तरद्योतनार्थम्। २ अत्रव्याहृतेरनुवाक्यास्थानत्वेनान्यानावश्यकीति भाति। पक्वात् पूर्वं मूलेनावाहनसकलीकरणपूजनमिति लक्षणसंहितायां, अयमेव सम्प्रदायसिद्धः।

विघ्नेशे। भूताधिपाय विद्महे भवपुत्राय धीमहे। तन्नः शास्ता प्रचोदयात् इति शास्तरि गायत्री[1]।

***पक्वमन्त्राः***- शिवे तत्पुरुषायेति। दुर्गायां जातवेदसे इत्यादिश्च पक्वमन्त्रौ अन्यत्र गायत्र्यः। शिवे ओं आं ईं ऊं व्योमव्यापिने ओं वौषट् इति। विष्णौ अं[2] ओं नमो भगवते वासुदेवाय अः[3] वौषट् इति। भूर्भुवस्वः वौषट् इति शास्तरि। शङ्करनारायणे दुर्गायां गणपतौ सुब्रह्मण्ये च वौषडन्तो मूलमन्त्रः इति पूर्णाहुतिमन्त्राः।

***प्रायश्चित्तानि***- शिवे शङ्करनारायणे सुब्रह्मण्ये शास्तरि गणपतौ च प्रासादस्य दक्षिणे भागे अर्धचन्द्राकारं कुण्डं कृत्वा तत्र पूर्वं होमं कुर्यात्॥ अथ शिवे शङ्करनारायणे च स्वकुण्डे मुष्ट्यादिभिश्च संशोध्य शोषणादिकं कृत्वा ओं हुं फट् ओं[4] इति मन्त्रेणोल्लिख्यास्त्रेण प्रोक्ष्य विष्टरं न्यस्य पीठं सम्पूज्य ओं ह्रीं वामदेवेत्यादिना[5] मन्त्रेणावाह्य सकलीकृत्य सम्पूज्य सद्योजातेनाग्निमादाय क्रव्यादभागं सन्त्यज्याग्निमुद्वास्य[6] शोषणं दाहनं च कृत्वा चैतन्यमग्नौ संयोज्य सम्पूज्येशानेन सञ्जप्याघोरेण संपूज्य सद्योजातेनाग्निं निक्षिप्य प्रासादेन[7] सम्पूज्य संस्कारान्ते ईशानवामदेवाघोरतत्पुरुषेशानमन्त्रैः गर्भाधानादिपञ्चक्रियाः कृत्वा अग्निजननं समापयेत्। पुनः कुण्डमुपलिप्य यथाविधिहोमं समारभ्य प्रतिष्ठाभिघारान्ते तद्दक्षिणे कलशं प्रपूर्य परिधिन्यासादिसर्वं विधाय प्रणवव्याहृतिपीठमन्त्रहोमान्ते पञ्चप्रणवपूर्वेण[8] तत्पुरुषेण पक्वं हुत्वा पूजामन्त्रैराज्यं हुत्वा पूर्णां हुत्वा मूलेनाष्टवारमाज्यं हुत्वा पूर्णां हुनेत्। पुनरघोरसद्यवामास्यैः[9] अष्टोत्तरसहस्रकं औदुम्बरोत्थाः समिधः अपामार्गजाश्च, घृतं, हविः, अष्टोत्तरशतं पश्चादेभिरास्येन होमयेत्। तिलसर्षप मुद्गैश्च शालीभिश्च यवैरपि। दूर्वाभिर्वक्त्रमन्त्रेण[10] सहस्रं जुहुयादथ। दधिक्षौद्रघृतैरष्टशतं मृत्युजिता हुनेत्। इति क्रमेण सम्पातसहितं हुत्वा स्विष्टकृदादिहोमशेषं समाप्य

---

१ कात्यायन्यै च विद्महे कन्याकुमार्यै धीमहे तन्नो दुर्गा प्रचोदयात् इति दुर्गायाः, तन्महेशाय विद्महे वाग्विशुद्धाय धीमहे तन्नः शिवः प्रचोदयात् इति महेशस्य गायत्र्यौ। २-३ अं अः इति चिन्त्यम्। ४ वज्रमन्त्रोऽयम्। ५ वामदेवराहितभुवनेश्वर्या आवाहनं भुवनेश्वर्या पूजनमिति मूले। ६ आत्मनि। ७ हृदयेनेति मूले प्रासादहृदयेनेति व्याख्ययोः। ८ अनुवाक्यास्थाने पञ्चप्रणवा इति भाति। ९-१० तत्पुरुषमन्त्रेणेत्यर्थः तिलादिभिरष्टोत्तरशतं दूर्वाभिरष्टोत्तरसहस्रम्।

सम्पातं कलशे समर्प्याग्निमुद्वास्याग्निं विसर्जयेत्। कलशे कि।ञ्चत्सम्पूज्य पूजां समाप्य रक्षेत्। इति शङ्करप्रोक्तशैवप्रायश्चित्तप्रकारः।

***शास्तरि रेवन्तप्रोक्तं प्रायश्चित्तहोमं कुर्यात्***- तद्यथा प्रासादस्य दक्षिणे भागेऽर्धचन्द्रकुण्डं कृत्वा मुष्ट्यादिभिः संशोध्य यथोक्तमग्निजननं कृत्वा पुनः कुण्डमुपलिप्य अग्निः सोमः आज्यभागौ शास्ता अग्निः स्विष्टकृत् इत्यन्वाधानादि कृत्वा प्रतिष्ठाभिघारान्ते तद्दक्षिणे कलशं सम्पूज्य परिधिन्यासादि कृत्वा व्याहृतियुक्तया स्वगायत्र्या पक्वं हुत्वा पूजामन्त्रहोमान्ते भूर्भुवःसुव रिति मन्त्रेण पूर्णां हुत्वा मूलेनाष्टवारमाज्यं हुत्वा पूर्णां हुत्वा षण्मन्त्रैःषड्विंशति-मन्त्रैश्च सकृत्सकृदाज्यं हुत्वा पूर्णां हुत्वा षण्मन्त्रैः बिल्वसमिदाज्यचरुलाजान् सर्षपांश्च यवांस्तिलान्। द्युत्तरशतं[1] प्रतिद्रव्यं पूर्णाहुतिसहितं ससम्पातं हुत्वा भूरादिभिः क्रमेणाज्यं क्षीरं दधि क्षौद्रं चाष्टशतमन्तरान्तरा पूर्णाहुतिसहितं हुत्वा मृत्युञ्जयेन त्रिमधुरोक्षिताः दूर्वास्त्रिसहस्रं जुहुयात्। पुनः पूर्णां हुत्वा स्विष्टकृदादि होमं समाप्य सम्पातं कलशे निषिच्याग्निमुद्वास्य पुष्पादिनाऽऽराध्याग्निं विसर्जयेत्। कलशे किञ्चित्सम्पूज्य रक्षां कुर्यात्। इति रेवन्तप्रोक्तशास्तृप्रायश्चित्तप्रकारः। आर्याय स्वाहा। शास्त्रे। गुहासन्नाय। सेनान्यै। भूतवल्लभाय। रुद्रजाय। रूपवते। कामिने। वरदाय। लोकपूजिताय। नीलाश्वाय। श्वेतमातङ्गाय। श्यामिने। पीतानुलेपनाय। रक्तमालाधराय। शूराय। मायाय। मातृगणप्रियाय। काळवाससे। गणाध्यक्षाय। खड्गहस्ताय। धनुर्धराय। सहजायाय। जनावेशाय। साधवे। संसाररक्षकाय इति षड्विंशतिमन्त्राः।

***स्कन्दे स्कन्दप्रोक्तप्रायश्चित्तप्रकारः***- प्रासादस्य दक्षिणेऽर्धचन्द्रं कुण्डं कृत्वा मुष्ट्यादिभिः कुण्डशुद्धिं कृत्वा यथोक्तमग्निजननं कृत्वा अग्नीषोमावाज्यभागौ सुब्रह्मण्यः अग्निः स्विष्टकृत् इत्यन्वाधानं कृत्वा प्रतिष्ठाभिघारान्ते दक्षिणे कलशं सम्पूज्य परिधिन्यासादि सर्वं विधाय गायत्र्या पक्वं हुत्वा पूजामन्त्रहोमान्ते सम्पातसहितं वौषडन्तेन मूलेन पूर्णां हुत्वा मूलमन्त्रेणाष्टवारमाज्यं हुत्वा पूर्णां हुत्वा षण्मन्त्रैर्मुलद्वयेन गायत्र्या द्वादशमन्त्रैः भूरादिभिः सकृत्सकृदाज्यं हुत्वा पूर्णां हुत्वा नीपस्य समिदाज्यचरुलाजान् सर्षपांश्च यवांस्तिलान् एभिः षण्मन्त्रैः द्युत्तरशातं[2] प्रतिद्रव्यं पूर्णान्वितं हुनेत्। पुनः भूरादिभिः क्रमेणाज्यं क्षीरं दधि क्षौद्रं अष्टोत्तरशतं जुहुयात्। अन्तरान्तरा पूर्णाहुतिं च जुहुयात्। पुनः मृत्युञ्जयेन

१ प्रतिमन्त्रं सप्तदश १७X६ =१०२।     २ प्रतिमन्त्रं सप्तदश १७X६ = १०२।

त्रिमधुरोक्षिताः दूर्वाश्च त्रिसहस्रं जुहुयात्। पुनः पूर्णां हुत्वा स्विष्टकृदादि होमशेषं समाप्य प्रसन्नपूजां कृत्वा सम्पातं कलशे समर्प्याग्निमुद्वास्य गन्धपुष्पैराराध्याग्निं विसर्जयेत्। कलशे किंचित्सम्पूज्य पूजां समाप्य रक्षां कुर्यात् इति स्कन्दप्रोक्तप्रायश्चित्तप्रकारः। स्कन्दाय स्वाहा। बाणाय। हेमचूडाय। भद्रसेनाय। भवाय। भवपुत्राय। अन्नाद्यशीलाय। कुक्कुटध्वजाय। मयूरवाहनाय। गुहाय। सनत्कुमाराय। महासेनाय स्वाहा इति द्वादशनामानि।

***विघ्नप्रोक्तं गणेशाप्रायश्चित्तम्***- प्रासादस्य दक्षिणे भागे अर्धचन्द्राकारं कुण्डं कृत्वा यथोक्तमग्निजननं कृत्वा कुण्डमुपलिप्य अग्नीषोमावाज्यभागौ गणपतिः अग्निः स्विष्टकृत् इत्यन्वाधानादिप्रतिष्ठाभिघारान्ते दक्षिणे कलशं सम्पूज्य परिधिन्यासादि सर्वं कृत्वा गायत्र्या पक्वं हुत्वा पूजामन्त्रहोमान्ते मूलेन वौषडन्तेन पूर्णां हुत्वा मूलमन्त्रेणाष्टवारमाज्यं हुत्वा पूर्णां हुत्वा षण्मन्त्रैः एकशः अष्टशतं वा आज्यं हुत्वा पूर्णां हुत्वा बिल्वस्यसमिदाज्यचरून् लाजान् पृथुकापूपलड्डुकान्। शष्कुलीनाज्यं च षण्मन्त्रैः अष्टशतं प्रतिद्रव्यं[1] पूर्णान्वितं जुहुयात्। पुनः भूरादिभिः क्रमेण दधि क्षीरं मधु घृतं अन्तरान्तरा पूर्णान्वितं अष्टोत्तरशतं हुत्वा गणानान्त्वेत्यष्टशतं गुलं[2] हुत्वा पूर्णां हुत्वा मूलमन्त्रेणाष्टशतं गव्यं[3] हुत्वा पूर्णां हुत्वा स्विष्टकृदादि होमशेषं समाप्य सम्पातं कलशे समर्प्याग्निमुद्वास्य पुष्पाद्याराध्याग्निं विसर्जयेत्। कलशे किञ्चित्सम्पूज्य पूजां समाप्य रक्षां कुर्यात् इति विघ्नप्रोक्तागायश्चित्तप्रकारः। एवं शिवे शङ्करनारायणे त्रयोदशद्रव्यैः, सुब्रह्मण्ये शास्तरि च द्वादशद्रव्यैः, गणपतौ पञ्चदशद्रव्यैः होमं कृत्वा एतेषु पञ्चसु देवेषु प्रासादान्तः प्रविश्य पीठं सम्पूज्य मूलेनावाह्य सकलीकृत्य स्नानकाले अभिषिच्य किञ्चित्सम्पूज्य नीराज्य होममन्त्रैः तत्तत्कलशेन तं तं देवमभिषिच्य मूर्ध्नि पुष्पमाराध्य व्याप्य न्यासादिकं कृत्वा नीराज्य पुनर्वस्त्राद्युपहारान् दत्वा सम्पूज्य निवेद्य बलिं दत्वा प्रसन्नपूजां कृत्वा पूजां समाप्य व्याप्य लयाङ्गं कृत्वा रक्षां कुर्यात्। इति मरणादिगुरुतरदोषशान्त्यर्थं प्रायश्चित्तप्रकारः।

***प्रायश्चित्तहोमं कुर्यात्***- अथाग्रभागे चतुरस्रकुण्डं कृत्वा मुष्ट्यादिभिः संशोध्याग्निं जनयित्वा अन्वाधानादिप्रतिष्ठाऽभिघारान्तं कृत्वा तद्दक्षिणे कलशं

---

१ प्रतिमन्त्रं अष्टादश १८X६ =१०८। २ गुडम्। ३ गव्यं पञ्चगव्यम्। अत्र गव्यशब्देन घृतमेवोच्यते इति केचिदाहुः इति विमर्शिनीकाराः।

सम्पूज्य वस्त्रेण प्रच्छाद्य रक्षेत्। पुनः परिधिन्यासादिकं कृत्वा इध्मात्पूर्वं पीठं सम्पूज्य मूर्तिं सङ्कल्प्य मूलेन देवमावाह्य लिपिन्यासादिभिः सकलीकृत्य सम्पूज्य नैवेद्यकाले इध्मं हुत्वा आघारौ चक्षुषी च कृत्वा प्रणवव्याहृतिपीठमन्त्रैः सकृत्सकृदाज्यं हुत्वा पक्वमन्त्रेण पक्वं हुत्वा पूजामन्त्रैः सकृत्सकृदाज्यं हुत्वा पूर्णां हुत्वा मूलमन्त्रेणाष्टवारमाज्यं हुत्वा पूर्णां जुहुयात्। पुनः पञ्चकपूजायामुक्तैर्मन्त्रैः[1] त्रिसहस्रमाज्यं हुत्वा स्वस्वमूलमन्त्रेण समिदाज्यशालितिललाजान् पृथगष्टसहस्रं हुत्वा भूरादिभिः[2] द्वादशोत्तरशतं पलाशसमिधः हुत्वा पुनः सावित्र्या[3] क्षीरं दधि मध्वाज्यं पृथगष्टशतं जुहुयात्। अन्तरान्तरा पूर्णां च जुहुयात्। पुनः स्विष्टकृदादिहोमशेषं समाप्य कलशे सम्पातं समर्प्य प्रसन्नपूजां विधाय पूजां समाप्याग्निं कलशे उद्वास्य पुष्पादिकमाराध्याग्निं विसर्जयेत्। कलशे किञ्चित्सम्पूज्य पूजां समाप्य तालत्रयादिना रक्षेत्। इत्येकप्रायश्चित्तविधिः। दोषस्य बलाबलमनुसृत्य पञ्च नव त्रयोदश वा प्रायश्चित्तहोमान् कुर्यात्। तत्र मध्ये चतुर्दिक्षु अष्टसु दिक्षु राशिस्थानेषु वा कुण्डानि कारयेत्। स्वस्वमन्त्रेण मध्यकुण्डादग्निं विहृत्य पूर्वोक्तानि द्रव्याणि जुहुयुः। होमं समाप्यान्तःप्रविश्य देवस्य पीठपूजां कृत्वा मूलेनावाह्य सकलीकृत्य स्नानकाले देवमभिषिच्य मध्यादिकलशैर्देवमभिषिच्य सम्पूजयेत्। तत्र होमेषु मध्ये पलाशसमिधः चतुर्दिक्षु तोरणक्रमात्क्षीरवृक्षसमिधः॥ अष्टसु दिक्षु चेत् पलाशखदिराश्वत्थप्लक्षवटबिल्वौदुम्बरकाश्मर्यः समिधः। पालाश्य एव वा समिधः। इति प्रायश्चित्तहोमे नियमः। काश्मर्यादिक्रमादष्टसमिधो वा॥ त्रयोदशपक्षे पालाश्य एव सर्वत्र। पतनादि दोषे विष्णौ शिवे च एवंप्रायश्चित्तविधिः॥

---

१ पञ्चतत्वैः। अयं विष्णौ शिवे च प्रायश्चितप्रकारः सर्वत्र वा समानम्। स्वस्वपञ्चतत्वैरन्येषु, पञ्चब्रह्मभिः शिवे च प्रतिमन्त्रं षट्शतानि आहत्य त्रिसहस्रं ६००X५=३००० । २ प्रतिव्याहृति अष्टाविंशतिः २८X४=११२ । ३ तत्सवितुरित्यनया ऋचा। अत्र लक्षणसंहितायां- विंशत्यूर्ध्वशते तैस्तु हुते षट्छतमेव तत्। द्विशते तु समिद्धोमे सर्वेषां तु सहस्रकम्। ब्रह्मभिः षष्टिवारे तु हुते स्यात्त्रिशतं घृतम्। समिदादि शते होमे कृते पञ्चशतं भवेत्। पालाशीनां समिद्धोमः स्यादष्टाविंशसंख्यया। व्याहृतीभिर्भवेदेतच्छतं तु द्वादशोत्तरम्। अथवा पञ्चभिर्मन्त्रैः प्रत्येकं सर्ववह्निषु। हुते विंशतिकुत्वः स्यादाज्याहुतिशतं भवेत्। आपत्कालेऽयमुद्दिष्टस्ततः स्विष्टकृदादिकमित्युक्तेः प्रथमः पक्षः त्रिसहस्रं घृतं समिदादिकमष्टोत्तरसहस्रकम्, द्वितीयपक्षे षट् शतं घृतं द्विशतं समिदादिकं, तृतीयपक्षे त्रिशतं घृतं, शतं समिदादिकम्। आपत्काले तु शतमाज्याहुतिः (२० X५=१००) समिदादिकं द्वादशोत्तरशतम्। (२८X४=११२इत्यर्थोऽवगम्यते।)

शङ्करनारायणें शैवं वैष्णवं च कुर्यात्। गणपतौ शास्तरि च एवं होमं कुर्याद्वा। दुर्गायां- प्रासादस्योत्तरभागे त्रिकोणं दक्षिणभागेऽर्धचन्द्रं कुण्डं कृत्वा पृथगग्निं जनयित्वा होमं कुर्यात्। गुरुतरे दोषे पूर्वे चतुरस्रकुण्डं पश्चिमे वृत्तं च कृत्वा अग्निं जनयित्वा उत्तरादिक्रमेण[1] कुर्यात्। इतिचतुर्होमपक्षः। सर्वेषु अन्वाधानादिप्रतिष्ठाभिघारान्तं कृत्वा तद्दक्षिणे कलशं सम्पूज्य परिध्यादि कृत्वा इध्मात्पूर्वं पीठं सम्पूज्यावाह्य सकलीकृत्य सम्पूज्य इध्माधानादि चक्षुष्यन्तं कृत्वा प्रणवव्याहृतिपीठमन्त्रैः सकृत्सकृदाज्यं हुत्वा त्रिष्टुभा पक्वं हुत्वा पूजामन्त्रैः सकृत्सकृदाज्यं हुत्वा सम्पातसहितं मूलेन पूर्णां हुत्वा मूलेनाष्टवारमाज्यं हुत्वा पूर्णां जुहुयात्। पुनः पञ्चदुर्गाभिः दशोत्तरशतमाज्यं[2] हुत्वा पूर्णां हुत्वा जातवेदस इति मन्त्रेण खदिरसमिधः तामग्निवर्णामिति मन्त्रेण पलाशसमिधः, अग्ने त्वमिति मन्त्रेणाश्वत्थसमिधः, विश्वानिन इति मन्त्रेण प्लक्षसमिधः, पृतनाजितमिति मन्त्रेण न्यग्रोधसमिधः, मूलेन मयूरसमिधः, पृतनाजितमिति मन्त्रेण बिल्वसमिधः, विश्वानिन इति मन्त्रेण उदुम्बरसमिधः, अग्ने त्वमिति मन्त्रेण अञ्जलिसमिधः, अन्तरान्तरा पूर्णाहुतिसहितं पृथगष्टोत्तरशतं हुत्वा मूलेन तिलसर्षपनीवारान्, मृत्युञ्जयेन दधिमध्वाज्यानि पृथगष्टशतमन्तरान्तरा पूर्णाहुतिसहितं जुहुयुः। पुनः स्विष्टकृदादिहोमशेषं समाप्य कलशेऽग्निमुद्वास्याग्निं विसर्जयेत्। कलशस्य रक्षां कुर्यात्। पुनः प्रासादान्तर्भागे गत्वा तत्रोपविश्य पीठं सम्पूज्य देवीमावाह्य लिपिन्यासादिभिः सकलीकृत्य उपहारान् दत्वा स्नानकाले अभिषिच्य किञ्चित्सम्पूज्य नीराज्य होममन्त्रैरुत्तरादिक्रमेण कलशैरभिषिच्य पृथक्पृथक् निवेदयेत्। अन्ते देवीं सम्पूज्य निवेद्य पूजाहोमादिकं कृत्वा नैवेद्यं विसृज्य प्रसन्नपूजां कृत्वा पूजां समाप्य रक्षेत्। इति दुर्गाप्रायश्चित्तप्रकारः।

***गुहे प्रायश्चित्तम्-*** सुब्रह्मण्ये नवहोमपक्षे, प्रासादस्य अष्टदिक्षु अग्रे च इति नवकुण्डानि कृत्वा पञ्चहोमपक्षे चतुर्दिक्षु अग्रे च पञ्चकुण्डानि कृत्वा अग्रकुण्डेऽग्निं जनयित्वा तस्मादन्यकुण्डेष्वग्निं विहृत्य शान्तिहोमान् कुर्युः॥ अथवा प्रायश्चित्तोक्तवदग्रभागे पञ्च वा नव वा कुण्डानि कृत्वा तत्र द्वादशदिवसं[3] पञ्चदिवसं वा त्रिदिनं वा एकदिने त्रिवारं वा होमान् कुर्युः। तत्र सर्वेऽन्वाधानादि कृत्वा तद्दक्षिणे कलशं सम्पूज्य परिध्यादि कृत्वा इध्मात्पुर्वं पीठं सम्पूज्य

१ उतरपूर्वदक्षिणपश्चिमक्रमेण, उ[illegible]रदक्षिणपूर्वपश्चिमक्रमेण वेत्यर्थः। २ प्रतिमन्त्रं द्वाविंशतिः २२X५=११०। ३ मूले प्रदिदिनं [illegible] त्रिदिनावधि अहरहः होम उक्तः। नवदिनेस वा पा

मूलेनावाह्य सकलीकृत्य उपहारान् दत्वा सम्पूज्य नैवेद्यकाले इध्मं हुत्वा चक्षुष्यन्ते प्रणवव्याहृतिपीठमन्त्रैः सकृत्सकृदाज्यं हुत्वा गायत्र्या पक्वं हुत्वा पूजामन्त्रैः सकृत्सकृदाज्यं हुत्वा मूलेन पूर्णां हुत्वा, मूलेनाष्टवारमाज्यं हुत्वा पूर्णां जुहुयात्। पुनः सकलमन्त्रेण समिधः बीजमन्त्रेण हविः महन्मन्त्रेणाज्यं बीजमन्त्रेणैव सर्षपं तिलं च पृथगष्टोत्तरशतमन्तरान्तरा पूर्णाहुतिसहितं जुहुयुः। मध्ये नीपं पूर्वादिदिक्षु वटं उदुम्बरं अश्वत्थं प्लक्षं च जुहुयुः। अग्न्यादिकोणेषु पलाशमधूकजम्बूकपित्थसमिधः। आं ईं इति सकलमन्त्रः। गृं गुहाय नमः इति महन्मन्त्रः। घृं झृं जं धां म्रं व्यों इति बीजमन्त्रः। पुनर्होमान्ते स्विष्टकृदादि होमं समाप्य प्रसन्नपूजां कृत्वा सम्पातं कलशे समर्प्याग्नौ गन्धं पुष्पं चाराध्य त्र्यावृत्तिपक्षे अग्निं रक्षेत्। पुनः गर्भगृहं गत्वा देवस्य पीठं सम्पूज्य मूलेनावाह्य सकलीकृत्यार्घ्यादि उपहारान् दत्वा स्नानकाले शुद्धजलैरभिषिच्य नीराज्य मध्यादिकलशैरभिषेचयेत्। पृथङ्नैवेद्यं कुर्यात्। अवसाने देवं सम्पूज्य नैवेद्यपूजाहोमबलीन् कृत्वा नैवेद्यं विसृज्य गण्डूषादिकं दत्वा प्रसन्नपूजां विधाय पूजां समाप्य रक्षेत्। इति प्रातः। पुनर्मध्याह्ने रात्रौ च अन्वाधानाद्येवं होमं कृत्वा तदा तदा होममन्त्रैरेव तत्तत्कलशैर्देवमभिषिच्य तदा तदा पूजयेत्। इति सुब्रह्मण्ये होमप्रकारः।

***शान्तिहोमः-*** अथ[1] सर्वेषु देवेषु ईशकोणे चतुरस्रं कुण्डं कृत्वा स्वस्वोक्तवदग्निजननं कृत्वा शान्तिहोमं कुर्यात्। तत्रान्वाधानादि कृत्वा प्रतिष्ठाभिघारान्ते तद्दक्षिणे कलशं सम्पूज्य पुनः परिध्यादि कृत्वा पीठं सम्पूज्य देवमावाह्य सकलीकृत्य सम्पूज्य इध्मादि कृत्वा चक्षुष्यन्ते प्रणवव्याहृतिपीठमन्त्रैः सकृत्सकृदाज्यं हुत्वा स्वस्वोक्तवत्पक्वं हुत्वा पूजामन्त्रैः सकृत्सकृदाज्यं हुत्वा स्वस्वोक्तवत्पूर्णां हुत्वा स्वस्वमूलेनाष्टवारमाज्यं हुत्वा पूर्णां जुहुयात्। इति सर्वत्र समानम्।

***विष्णौ-*** पूजाहोमान्ते षोन्नमः परायेत्यादि पञ्चतत्वमन्त्रैः द्वादशाक्षरेणाष्टाक्षरेण गायत्र्या[2] जितन्तेन सहस्रशीर्षेत्यादिषोडशर्ग्भिरेवं पञ्चविंशतिमन्त्रैः प्रत्येकं चतुर्विंशतिवारमाज्यमन्तरान्तरा पूर्णाहुतिसहितं जुहुयात्। पुनरपि षोन्नम इत्यादिना आज्यं, यं नमः इत्यादिना अपामार्गं, रां नम इत्याज्यं,

---

१ सामान्योत्पातेषु प्रायश्चित्तमुक्तम्। अद्भुतेषु शान्तिहोमो विधीयते इति विवरणकाराभिप्रायः। यद्यपि पूर्वं स्कन्दविषये शान्तिहवनानीत्युक्तम् तथापि दोषशान्त्यभिप्रायेण तथोक्तमिति ज्ञेयमस्मिन् पक्षे। २ स्वस्वगायत्र्या।

वं नमः इत्यमृतं, लां नम इत्याज्यं, द्वादशाक्षरेण सहां, अष्टाक्षरेणाज्यं, गायत्र्या ऐन्द्रीं, जितन्तेनाज्यं, सहस्रशीर्षेति भद्रिकां, पुरुष एवेत्याज्यं, एतावानिति अञ्जलिं, त्रिपादित्याज्यं, तस्माद्विराडिति दूर्वाः, यत्पुरुषेणेत्याज्यं, तं यज्ञमिति सर्षपं, तस्माद्यज्ञात्सर्वहुतः सम्भृतमित्याज्यं, तस्माद्यज्ञात्सर्वहुत ऋच इति शालीन्, तस्मादश्वा इत्याज्यं, यत्पुरुषमिति यवं, ब्राह्मणोस्येत्याज्यं, चन्द्रमा मनस इति तिलं, नाभ्या आसीदित्याज्यं, सप्तास्यासन्निति हविः, यज्ञेन यज्ञमित्याज्यं, इति पृथक् चतुर्विंशतिवारमन्तरान्तरा पूर्णासहितं हुत्वा अवसाने द्वादशाक्षरेण पूर्णां हुत्वा स्विष्टकृदादि होमं समाप्य प्रसन्नपूजां विधाय पूजां समाप्य व्याप्य लयाङ्गं कृत्वा सम्पातं कलशे समर्प्य अग्निमुद्वास्य मुद्राः प्रदर्श्य व्याप्य लयाङ्गं कृत्वा किञ्चित्सम्पूज्य रक्षेत्। परिसमूहनादि कृत्वा अग्निं विसर्जयेत्। पुनर्गर्भगृहं गत्वा पीठं सम्पूज्य मूलेनावाह्य सकलीकृत्योपहारान् दत्वा स्नानकाले निर्माल्यं त्यक्त्वा विसृज्य शुद्धजलैरभिषिच्य नीराज्य कलशमानाय्य पल्लवादीन् समर्प्य प्रणवोपचारमूलानि होममन्त्रांश्चोक्त्वा कलशेनाभिषिच्य पुष्पमाराध्य व्याप्य लयाङ्गं कृत्वा नीराज्य वस्त्राद्युपहारान् दत्वा सम्पूज्य निवेद्य पूजाहोम बलिं च विधाय नैवेद्यं विसृज्य गण्डूषादि दत्वा प्रसन्नपूजां विधाय पूजां समाप्य व्याप्य लयाङ्गं कृत्वा रक्षेत् इति विष्णौ शान्तिहोमप्रकारः।

***शिवे-*** तथैव पूजामन्त्रहोमान्तं विधाय व्योमव्यापिदशाक्षरेण पूर्णां हुत्वा मूलेनाष्टवारमाज्यं हुत्वा पूर्णां हुत्वा तत्पुरुषमन्त्रेण प्लक्षौदुम्बरवटाश्वत्थसमिधः, आज्यं, हविः, मधुक्षीराज्याप्लुताःदूर्वाः,लाजाः, सर्षपाः, तिलाः, यवाः, व्रीहिः, सक्तुः आज्यमिति चतुर्दशद्रव्याणि पृथगष्टोत्तरशतसंख्यं अन्तरान्तरा पूर्णाहुतिसहितं जुहुयात्। पूर्णान्ते स्विष्टकृदादि हुत्वा होमं समाप्य प्रसन्नपूजां विधाय पूजां समाप्य सम्पातं कलशे समर्प्याग्निमुद्वास्य कलशे किञ्चित्सम्पूज्य रक्षेत्। परिसमूहनादि कृत्वा अग्निं विसर्जयेत्। पुनर्गर्भगृहं गत्वा पीठं सम्पूज्य मूलेनावाह्य सकलीकृत्य पाद्याद्युपहारान् दत्वा स्नानकाले पुष्पादिकं त्यक्त्वा शुद्धजलैरभिषिच्य नीराज्य कलशमानाय्य होममन्त्रेण कलशेनाभिषिच्य पुष्पमाराध्य न्यासादिकं कृत्वा नीराज्य पुनर्वस्त्रादि दत्वा सम्पूज्य निवेद्य पूजाहोमादि कृत्वा नैवेद्यं विसृज्य गण्डूषादि दत्वा प्रसन्नपूजां विधाय पूजां समाप्य व्याप्य लयाङ्गं कृत्वा रक्षेत् इति शिवे शान्तिहोमप्रकारः।

***सुब्रह्मण्ये-*** ईशकोणे चतुरस्रकुण्डं कृत्वा स्थलशुद्धिं कृत्वाऽग्निजननं

विधाय कुण्डमुपलिप्यान्वाधानादि विधाय पुनः कुण्डमुपलिप्य प्रतिष्ठाभिघारान्तं कृत्वा तद्दक्षिणे कलशं सम्पूज्य परिधिन्यासादि कृत्वा इध्मात् पूर्वं पीठं सम्पूज्य मूलेनावाह्य सकलीकृत्याऽर्घ्याद्युपहारान् दत्वा देवं सम्पूज्य नैवेद्यकाले इध्मं हुत्वा चक्षुष्यन्ते प्रणवव्याहृतिपीठमन्त्रैः सकृत्सकृत् आज्यं हुत्वा शक्तिहस्तेत्यादिगायत्र्या पक्वं हुत्वा पूजामन्त्रैः सकृत्सकृदाज्यं हुत्वा पूर्णां जुहुयात्। पुनः शक्तिहस्तेत्यादिगायत्र्या प्लक्षस्योदुम्बरस्याश्वत्थस्य वटस्य च समिधः दूर्वा आज्यं हविः लाजाः सर्षपः यवः तिलः व्रीहिः सक्तुः आज्यमिति चतुर्दशद्रव्याणि पृथगष्टोत्तरशतमन्तरान्तरा पूर्णासहितं जुहुयात्। पूर्णान्ते स्विष्टकृदादि कृत्वा होमं समाप्य प्रसन्नपूजां कृत्वा पूजां समाप्य व्याप्य लयाङ्गं कृत्वा सम्पातं कलशे समर्प्याग्निमुद्वास्य व्याप्य लयाङ्गं कृत्वा किञ्चित्सम्पूज्य रक्षेत्। अग्नौ परिसमूहनादि कृत्वाऽग्निं विसर्जयेत्। पुनर्गर्भगृहं गत्वा तत्रोपविश्य पीठं सम्पूज्य मूलेनावाह्य सकलीकृत्यार्घ्याद्युपहारान् दत्वा स्नानकाले पुष्पादिकं त्यक्त्वा शुद्धजलैरभिषिच्य नीराज्य कलशमानाय्य पल्लवादिकं समर्प्य होममन्त्रेण कलशेनाभिषिच्य देवस्य मूर्ध्नि पुष्पं न्यस्य व्याप्य न्यासादि कृत्वा नीराज्य पुनस्तत्स्थलं संशोध्य जलैः संक्षाल्य स्वयं तत्रोपविश्य पुष्पादिकं सम्भृत्य वस्त्राद्युपहारान् दत्वा सम्पूज्य निवेद्य पूजाहोमं विधाय बलिं दत्वाऽन्तः प्रविश्य नैवेद्यं विसृज्य प्रसन्नपूजां विधाय पूजां समाप्य रक्षेत् इति गुहे शान्ति प्रकारः।

***गणपतौ शान्तिः***-ईशकोणे चतुरस्रं कुण्डं कृत्वा स्थलशुद्धिं कृत्वाऽग्निजननं विधाय पुनरन्वाधानादिप्रतिष्ठाभिघारान्तं विधाय तद्दक्षिणे कलशं सम्पूज्य वस्त्रेणाच्छाद्य रक्षेत्। पुनः परिधिन्यासादि कृत्वा इध्मात्पूर्वं पीठं सम्पूज्य मूलेनावाह्य सकलीकृत्य पाद्याद्युपहारान् दत्वा सम्पूज्य नैवेद्यकाले इध्मं हुत्वा चक्षुष्यन्ते प्रणवादिभिः सकृत्सकृदाज्यं हुत्वा विनायकेत्यादिगायत्र्या पक्वं हुत्वा प्लक्षस्योदुम्बरस्याश्वत्थस्य वटस्य च समिधः आज्यं हविः मधुक्षीराज्याप्लुताः[1] दूर्वाः लाजाः पृथुकलड्डुकापूपशष्कुल्याज्यानीति त्रयोदशद्रव्याणि विनायकेत्यादिगायत्र्या पृथगष्टोत्तरशतमन्तरान्तरा पूर्णासहितं हुत्वा पूर्णान्ते स्विष्टकृदादिहोमं समाप्य प्रसन्नपूजां कृत्वा पूजां समाप्य सम्पातं कलशे समर्प्याग्निमुद्वास्य किञ्चित्सम्पूज्य रक्षेत्। अग्नौ परिसमूहनादि कृत्वाऽग्निं विसर्जयेत्। पुनः प्रासादं प्रविश्य गुरुवन्दनादि कृत्वा पीठं सम्पूज्य मूलेनावाह्य

१ मधुक्षीराज्यानि त्रिमधु।

सकलीकृत्य पाद्याद्युपहारान् दत्वा स्नानकाले कलशेन होममन्त्रेणाभिषिच्य संपूज्य रक्षां कुर्यात् इति गणपतिशान्तिः।

***शास्तरि शान्तिः***- ईशकोणे चतुरस्रकुण्डं कृत्वा अग्निं जनयित्वा पुनरन्वाधानादि सर्वं कृत्वा तद्दक्षिणे कलशं सम्पूज्य वस्त्रेणाच्छाद्य रक्षेत्। परिधिन्यासादि सर्वं विधाय ओं भूर्भुवःसुवः भूताधिपायेत्यादिगायत्र्या पक्वं हुत्वा पूजामन्त्रहोमादि सर्वं विधाय भूताधिपायेत्यादिगायत्र्या अष्टोत्तरसहस्रं तिलमाज्यं च पृथक् पूर्णाहुतिसहितं हुत्वा पुनः स्विष्टकृदादि होमं समाप्य सम्पातं कलशे समर्प्य रक्षेत्। पुनः देवस्य पीठपूजादि कृत्वा स्नानकाले कलशेनाभिषिच्य सम्पूज्य नैवेद्यादि कृत्वा प्रसन्नपूजादिकं कृत्वा रक्षेत् ...ो शास्तरि शान्तिहोमप्रकारः।

***दुर्गायां शान्तिहोमप्रकारः***- ईशकोणे चतुरस्रकुण्डं कृत्वा अग्निं जनयित्वा अन्वाधानादि सर्वं विधाय कलशं सम्पूज्य परिध्यादि विधाय जातवेदसे इत्यादिना पक्वं हुत्वा पूर्णान्ते स्विष्टकृदादिहोमं समाप्य सम्पातं कलशे समर्प्य किञ्चित्सम्पूज्य रक्षेत्। परिसमूहनादि कृत्वा अग्निं विसर्जयेत्। पुनर्देव्याः पीठपूजादिकं विधाय स्नानकाले कलशेनाभिषिच्य सम्पूज्य नैवेद्यादिकं विधाय प्रसन्नपूजां कृत्वा पूजां समाप्य रक्षेत् इति दुर्गायां शान्तिहोमप्रकारः।

***यागमन्त्रो लिख्यते***- ओं दुर्गारुपिणि कुमारीरूपिण्यार्यावर्तिनि मायारूपिण्युत्सववासिनि यागभक्तकारिणि सर्वमन्त्रव्यापिनि सर्वकर्मफलदायिनि सर्वक्रियावर्तिनि सर्वदोषमर्दिनि सर्ववरदायिनि भगवति प्रसादमापादयतु इति यागमन्त्रः।

***शङ्करनारायणे शान्तिहोमः***- ईशकोणे चतुरस्रकुण्डद्वयं कृत्वा शैवं वैष्णवं चाग्निं जनयित्वा शैवोक्तं वैष्णवोक्तं च शान्तिहोमं विधाय देवस्य मूलेनावाह्य सकलीकृत्य स्नानकाले कलशद्वयेनाभिषिच्य देवं सम्पूजयेत् इति शङ्करनारायणे शान्तिहोमप्रकारः।

***सर्वेषु देवेषु चण्डालादिस्पर्शे तस्य शान्तिहोमं कुर्यात्***-ईशकोणे चतुरस्रकुण्डं कृत्वा स्वस्वोक्तवदग्निं जनयित्वाऽन्वाधानादि सर्वं विधाय तद्दक्षिणे कलशं सम्पूज्य वस्त्रेणाच्छाद्य रक्षेत्। अग्नौ परिध्यादि सर्वं विधाय पूजामन्त्रहोमान्ते पूर्णां हुत्वा स्वस्वमूलेनाष्टवारमाज्यं हुत्वा पूर्णां जुहुयात्। पुनः सहस्रशीर्षमित्यादिचतुर्दशभिर्मन्त्रैः हिरण्यवर्णामित्यादि पञ्चदशभिर्मन्त्रैः

अतो देवेति षड्भिः, नासदासीदित्यादि[1] किंस्विद्वनमित्यादि ब्रह्मवनमित्यादि प्रातरग्निमित्यादि सदान इत्यन्तैः षोडशभिर्मन्त्रैः प्रथमस्येत्यादि चतुस्त्रिंशन्मन्त्रैः, सं समिद्युवसे इत्यादि चतुर्भिर्मन्त्रैः भद्रं न इति पादमन्त्रेण अरायिकाण इत्यादिपञ्चभिर्मन्त्रैः स्वस्वगायत्र्या स्वस्वपञ्चतत्वैः, एकैकश आज्यं हुत्वा स्वस्वपूर्णाहुतिमन्त्रेण पूर्णां हुत्वा स्वस्वमूलेन पृथगष्टोत्तरशतं अश्वत्थस्य खदिरस्य प्लक्षस्य पलाशस्य पाटलस्य वटस्य च समिधः अन्तरान्तरा पूर्णासहितं जुहुयात्। पूर्णान्ते स्विष्टकृदादि होमं संमाप्य प्रसन्नपूजां विधाय सम्पातं कलशे समर्प्याग्निमुद्वास्य किञ्चित्सम्पूज्य रक्षेत्। अग्नौ परिधिसमूहनादि कृत्वाऽग्निं विसर्जयेत्। पुनः प्रसादं प्रविश्य पीठपूजादिकं विधाय स्नानकाले कलशेनाभिषिच्य सम्पूजयेत् इति स्पर्शनादौ शान्तिः।

***तत्वहोमविधिर्लिख्यते***- देवस्याग्रभागे चतुरस्त्रकुण्डं कृत्वा स्वस्वोक्तवत् स्थलशुद्धिं कृत्वा अग्निजननं च विधाय तत्वहोमं कुर्यात्। गुरुः स्नानादि कृत्वा नववस्त्रेण परिवेष्ट्य उत्तरीयवस्त्रमुपवीतवद्धृत्वा पादौ प्रक्षाळ्याचम्य कुण्डस्याग्रे उपविश्य गुरुवन्दनादिषडध्वन्यासान्तं विधाय मूलमन्त्रं यथाशक्ति सञ्जप्य लयाङ्गं कृत्वा शङ्खपूरणमात्माराधनं च कृत्वा गुरुं गणपतिं चाराध्य पुनरन्वाधानादिप्रतिष्ठाभिघारान्तं विधाय तद्दक्षिणेऽष्टदलपद्मं विधाय तत्र व्रीहितण्डुलवस्त्रादिभिः पीठं विरचय्य त्रिगुणीकृतसूत्रेण यथावत्कुम्भं संवष्ट्याधोमुखं न्यसेत्। गुरुस्तत्र पूर्वं गुरुं गणपतिं च सम्पूज्य गुरवे अर्घ्यं दत्वा गणपतये नैवेद्यादिकं कृत्वा पुनः पीठं सम्पूज्य विष्णौ श्रीं बीजेनान्येषु भुवनेश्वर्या पीठे आवाह्य सकलीकृत्य सम्पूज्यार्घ्यं दत्वा पुष्पाञ्जलिं विधाय पद्ममुद्रां प्रदर्शयेत्। कुम्भं गृहीत्वा अस्त्रेण संक्षाल्य कवचेन त्रिगुणसूत्रेण संवेष्ट्य मूलेनाष्टगन्धेन विलिप्य प्रणवेन सम्पूज्य मूलेन पीठेऽधोमुखं न्यसेत्। पुनः शोषणदाहनप्लावनकाठिन्य सुषरीकरणानि विधाय स्वस्वपञ्चतत्वेषु आद्येन दर्भविन्यासं, द्वितीयेनाष्टगन्धप्रोक्षणं, तृतीयेनाक्षतविकिरणं च विधाय मूलमन्त्रेण कुम्भं सम्पूज्य चतुर्थेनोत्तानीकृत्य उन्नीय पञ्चमं मूलमन्त्रं चोक्त्वा कुम्भं पीठे न्यसेत्। पुनः कुम्भस्य मुखे प्रणवेन प्रोक्ष्य मूलमध्यमुखेषु आग्नेयसौरसोमकलाः ऋक्समष्टिमन्त्रांश्च न्यस्य सम्पूज्य भूयः पुष्पाक्षतैः सम्पूज्य सौरेण चतुरक्षरेण कुम्भमावाह्य ह्रामाद्यङ्गं कृत्वा कुम्भस्य मुखे बिन्दुकला न्यस्य सम्पूज्य कुम्भमुद्रां प्रदर्श्य तञ्जगदण्डं प्रकल्प्य पुनः पञ्चविंशतिदर्भैः[2] ग्रथितं कूर्चं सङ्गृह्य

१ नासदासीदित्यादि षोडशभिः अंहोमुचां चतुस्त्रिंशता इति मूले। २ शिवे षट्त्रिंशद्दर्भैरिति केचित्।

संक्षाल्याष्टगन्धं विलिप्य शोषणदाहनप्लावनानि कृत्वाऽष्टवारं प्रणवं सञ्जप्य कूर्चकुम्भे न्यस्य प्रणवेन सम्पूज्य मूलसहितमात्माष्टाक्षरमुक्त्वा गन्धपुष्पाक्षत-सुवर्णसहितं नवरत्नं निक्षिप्य तन्मन्त्रेण सम्पूजयेत्। पुनः हस्तेन कुम्भमुखमाच्छाद्य मानसपूरणं कृत्वा अन्यस्मिन् पात्रे जलं सम्पूज्य तेन जलेन कुम्भमर्धोत्तरं संपूर्य लिपिपङ्कजं सम्पूज्य मूर्त्यावाहनं विधाय सम्पूज्य पुनः कलावाहनं विधाय सम्पूज्य विद्यामूर्तिमावाह्य सम्पूज्य तत्वमन्त्रैरावाह्य संपूज्य पुनः शेषं सन्पूर्य चक्रिकादिकं न्यस्य प्रणवोपचारमूलेनावाह्य लिपितत्वमन्त्रैः सकलीकृत्य उपहारान् दत्वा परिवारप्रसरणं कृत्वा शेषोपहारान् दत्वा सपरिवारं सम्पूज्य निवेद्य प्रसन्नपूजां विधाय पूजां समाप्य वस्त्रेणाच्छाद्य मन्त्रान् प्रजप्य रक्षां कुर्यात्। पुनरग्नौ परिध्यादि कृत्वा इध्मात्पूर्वं पीठं संपूज्य मूलेनावाह्य लिपितत्वमन्त्रान् न्यस्य सपरिवारं संपूज्य नैवेद्यकाले इध्मं हुत्वा चक्षुष्यन्ते प्रणवव्याहृतिपीठमन्त्रैः सकृत्सकृदाज्यं हुत्वा स्वस्वपक्वमन्त्रेण पक्वं हुत्वा पूजामन्त्रैः सकृत्सकृदाज्यं हुत्वा पूर्णां हुत्वा मूलमन्त्रेणाष्टवारमाज्यं हुत्वा पूर्णां जुहुयात्। पूनरखिलतत्वमन्त्रैः संहारक्रमेण एकैकश आज्यं हुत्वा पूर्णां जुहुयात्[२]। पुनः गर्भगृहं प्रविश्य पीठपूजां कृत्वा मूलेनावाह्य तत्वन्यासादिभिः सकलीकृत्य संपूज्य निवेद्य प्रसन्नपूजां विधाय संहारसंपातं बिंबे समर्प्य प्रणवेन पुष्पाञ्जलिं विधाय सृष्ट्यर्थं अनुज्ञां देहीति संप्रार्थ्य पुनः प्रणवेन पुष्पाञ्जलिं विधाय प्रसादकुंभकुण्डानामैक्यं सङ्कल्प्य पुनः प्रणवेन प्रसूनाञ्जलिं कृत्वा बिंबजलाग्नीनामैक्यं सङ्कल्प्य पुनः प्रणवेन पुष्पाञ्जलिं विधाय त्रिषु स्थितचैतन्यानामैक्यं संभाव्य पुनर्बहिर्गत्वा अन्तरागमनं परिहृत्याग्निसमीपे उपविश्य कुंभे कुण्डे च एवं प्रणवपुष्पाञ्जलिना नाडीसन्धानं विधाय मूलमन्त्रेणाष्टवारमाज्यं जुहुयात्। पुनरखिलतत्वमन्त्रैः सृष्टिक्रमात् पृथक्पृथगष्टविंशतिवारं अष्टवारमष्टोत्तरशतं वा आज्यं जुहुयात्[२]। अन्तराऽन्तरा पूर्णाहुतिं कुर्यात्।

***शिवे-*** शिवादितत्वैः सकृत्सकृदाज्यं हुत्वा पञ्चतत्वैः पञ्चविंशतिसंख्यं पञ्चाशत्संख्यं पञ्चसप्ततिसंख्यं शतसंख्यं पञ्चविंशत्युत्तरशतसंख्यं इत्युद्घातवृत्या जुहुयात् इति विशेषः। अन्तरा पूर्णां हुत्वा पूर्णान्ते मूलेन समिदादि चतुर्द्रव्यं अष्टवारं पृथगष्टविंशतिवारं अष्टोत्तरशतं वा अन्तरान्तरा पूर्णाहुतिसहितं हुत्वा

---

विशेषस्तूतत्र वक्ष्यते। १ पूर्वं बलिपरिवारावरणपीठमन्त्रहोमोऽपि सूचितः। २ अत्रापि पूर्वं पीठावरणपरिवारहोमः सूचितः तथा नाहुत्वा न्यास इष्यते इत्युक्तेरसाम्प्रदायिकः कलाहोमोऽपि युक्तः।

पूर्णान्ते स्विष्टकृदादि होमशेषं समाप्य प्रसन्नपूजां विधाय पूजां समाप्य संपातं कलशे समर्प्याग्निमुद्वास्य कलशे तत्वन्यासादि कृत्वा सकलीकृत्य सम्पूज्य निवेद्य प्रसन्नपूजां कृत्वा पूजां समाप्य व्याप्य लयाङ्गं कृत्वा रक्षां कुर्यात्। अग्नौ परिसमूहनादि कृत्वा अग्निं विसर्जयेत्। पुनः प्रासादान्तः प्रविश्य देवस्य पीठपूजां विधाय मूलेनावाह्य तत्वन्यासादिभिः सकलीकृत्य उपहारान् दत्वा स्नानकाले निर्माल्यं त्यक्त्वा शुद्धजलैरभिषिच्य मूर्धनि पुष्पं न्यस्य सम्पूज्य बहिर्गत्वा ब्राह्मणेभ्यो दानं दत्वा पीठशक्तिमुद्वास्य व्याप्य लयाङ्गं कृत्वा मूर्धनि पादयोः प्रणवेन दूर्वाक्षतं क्षिप्त्वा अस्त्रपूजितेन नीराजनेन स्वस्वास्त्रेण नीराज्य अर्घ्यं दत्वा मूर्तिपेन उत्तिष्ठ इति उद्धारयित्वा आनीय द्वारि अर्घ्यं दत्वा उपरि शिरः अस्पृशन् दक्षिणपादपूर्वमन्तः प्रविश्य देवस्याग्रभागेऽर्घ्यं दत्वा नीराज्य वस्त्रेणापि नीराज्य पल्लवचक्रिकादिकं समर्प्य मूर्तिपात्कलशं गृहीत्वा गुरूपदेशेन यथावत् ध्यायन् प्रणवोपचारमूलादिकं तत्वमन्त्रान् त्रिवारमुक्त्वाऽन्ते गुरूपदेशेन सर्वमुक्त्वा कलशेनाभिषेचयेत्।मूर्ध्नि प्रसूनाञ्जलिं विधाय देवं गुरुभक्त्या प्रसन्नं भावयेत्। पुनर्देवं सपरिवारं सम्पूज्य प्रभूतं नैवेद्यं निवेद्य द्वारं पिधाय बहिर्गत्वा पूजाहोमं बलिं च विधाय नमस्कृत्याचम्यान्तः प्रविश्य नैवेद्यं विसृज्य गण्डूषादि दत्वा प्रसन्नपूजां विधाय पूजां समाप्य रक्षेत्। इति तत्वहोमप्रकारः। पुनः वक्ष्यमाणप्रकारेण यथायोग्यं कलशं प्रपूर्य सम्पूज्याधिवास्य देवमभिषिच्य पूजयेत्। परिवाराणां अवस्रुतप्रोक्षणं कृत्वा श्रीभूतबलिं कुर्यात्। एतत्सर्वं गुरूपदेशेन कुर्यात्। इति द्वितीयः पटलः।

***कलशप्रकारः***- तत्र पूर्वं मण्टपसंस्कारं कुर्यात्। ध्वजयोनौ पश्चिमद्वारि प्रासादे गोयोनिपूर्वद्वारमण्टपं स्यात्। पञ्चयोनौ प्रासादे पूर्वद्वारि प्रासादे एकयोनिपश्चिमद्वारं मण्टपं कुर्यात्[1] इति नियमः। तत्र कलशानां पदक्लृप्तिं निरूप्य तस्याः योग्यं मण्टपं सङ्कल्प्य मण्टपस्य परिणाहं त्रिभिर्वर्धयित्वा अष्टभिः सन्त्यज्य शेषः योनिः एकः करः कोलशिष्टश्चेत् एकयोनिः, पञ्चकरः शिष्टश्चेत् पञ्चयोनिः इति मण्टपस्य नियमः। इति मण्टपं विरचय्य परितः कुड्यं कृत्वा उपरि वितानादिभिरलङ्कृत्य चतुरः स्तम्भान् चत्वारि द्वाराणि चतुस्तोरणान् स्वस्वयोग्यध्वजानलिन्दे स्वस्वयोग्यकुण्डानि च कुर्यात्। एतत्सर्वं मण्टपस्याङ्गम्। इति प्रासादाभिमुखं कलशमण्टपं विधाय संमार्ज्याभ्युक्षणानि कारयेत्। अथाचार्यः स्नात्वा नववस्त्रं परिधाय उपवीतवदुत्तरीयं धृत्वा पादौ

१ एतदन्तं किञ्चिदस्फुटमिव भाति।

प्रक्षाल्याचम्य मण्टपस्य प्रधानद्वारि स्थित्वा प्रासादशुद्धिवत् अस्त्रनिरीक्षणादिकं विधायान्तः प्रविश्य प्रदक्षिणं कृत्वा निर्ऋतिकोणे उपविश्य देहशुद्धिं शङ्खपूरणं आत्माराधनं च विधाय गणपतिं सम्पूज्य प्रासादशुद्धावुक्तक्रमेण त्रिगुणीकृतसूत्र-दर्भमालादीन् संसाद्य संशोध्य सम्पूज्य सञ्जप्य गोदानादि दत्वा गणपतिमुद्वास्य स्वस्वमूलमन्त्रेण सकलीकृत्य संरक्ष्य प्रधानद्वारान्निर्गत्य ईशकोणे स्थित्वा स्वस्वास्त्रेण मण्डपं संप्रोक्ष्य तन्तुदर्भस्रग्भ्यां प्रणवाक्षरप्रणवाभ्यां कवचास्त्राभ्यां वा नीप्रस्योपरिभागे ईशकोणादीशकोणावसानं परितो वेष्टयेत्। पुनः सर्वदेवेषु तोरणान् ध्वजान् क्षालयित्वा दर्भपल्लवादीन् बध्वा ध्वजे पताकाश्च बध्वा पूर्वादि[1] चतुर्दिक्षु तोरणान् स्थापयेत्। विष्णौ सुब्रह्मण्ये गणपतौ शास्तरि शिवे च पूर्वाद्यष्टदिक्षु कुड्यतोरणयोर्मध्ये अष्टौ ध्वजान् स्थापयेत्। शिवे ऊर्ध्वभागं सङ्कल्प्य ईशकोणे च एवं नव ध्वजान् स्थापयेत्। शङ्करनारायणे दुर्गायां च चतुर्द्वारेषु तोरणान्तर्भागे द्वौ द्वौ वा स्थापयेत्। शिवे शास्तरि च प्लक्षोदुम्बरवटाश्वत्थास्तोरणाः सुब्रह्मण्ये गणपतौ च प्लक्षोदुम्बराश्वत्थवटा-स्तोरणाः। शङ्करनारायणे विष्णौ च अश्वत्थोदुम्बरवट प्लक्षास्तोरणाः। दुर्गायामश्वत्थवटोदुम्बरप्लक्षास्तोरणाः। सर्वदेवेषु वैणवा ध्वजाः स्युः। तन्तुमालावेष्टनानन्तरं मण्टपस्य पूर्वद्वारि उपविश्य द्वारस्य पार्श्वद्वये अस्त्रेण खात्वा वायुबीजेन पांसुं त्यक्त्वा गोमयजलैरुपलिप्य प्रणवेन गन्धपुष्पाक्षतदर्भान् अवटे क्षिप्त्वा पद्मान्तं पीठं सम्पूज्य पल्लवादिभूषितं तोरणमस्त्रेण सम्प्रोक्ष्य शोषणादीन् कृत्वा स्वमन्त्रेण प्राणायामं कृत्वा व्याप्य प्रणवेनाङ्गं विधाय सम्पूजयेत्। पुनः योगेयोगेति मन्त्रेण पादद्वयेनोर्ध्वपट्टिं संयोज्य देवस्यत्वेति ऊर्ध्वपट्यां शूलं निधाय संयोज्यास्त्रप्रोक्षणशोषणादि कुर्यात्। उत्तिष्ठ ब्रह्मणस्पतेति प्रमोदमन्त्रं चोक्त्वाऽवटे स्थाप्य गर्तं सम्पूर्य प्रमोदमन्त्रेणावाह्य प्रणवेनाङ्गं कृत्वा उपहारान् दत्वा सम्पूज्यार्घ्यं दत्वा पुष्पाञ्जलिं कृत्वा रक्षेत्। पुनर्दक्षिणाद्यन्यद्वारेषु एवंकुर्यात्। अभयादयस्तोरणमन्त्राः। इति शिवे तोरणस्थापनाक्रमः। सुब्रह्मण्ये-एवं पूर्वादि चतुर्द्वारेषु अस्त्रखननादि स्वमन्त्रपूजान्तं विधाय वरदादिमन्त्रैस्तोरणान् संस्थाप्य तत्तन्मन्त्रैरावाह्य सम्पूज्यार्घ्यं दत्वा पुष्पाञ्जलिं कृत्वा रक्षां कुर्यात्। विष्णौ-अस्त्रखननादि स्वमन्त्रपूजान्तं कृत्वा स्योनापृथिवीति सुशोभनादीनुक्त्वा संस्थाप्य तत्तत्स्थाने तत्तन्मन्त्रेणावाह्य सम्पूज्य रक्षेत्। पुनः दुर्गायां शास्तरि गणपतौ च- अस्त्रखननादि स्वमन्त्रपूजावसानं विधाय पूर्वादिचतुर्दिक्षु अग्निमीळे

१ मण्डपे पूर्वद्वारि पश्चिमद्वारि वा पूर्वत एवारम्भोऽत्र राम्मतः।

इषेत्वा अग्न आयाहि शन्नो देवीति वेदादिमन्त्रैः स्वस्वतोरणदेवतानामभिश्च संस्थाप्य स्वस्वतोरणमन्त्रैरावाह्य प्रणवेन सकलीकृत्य सम्पूज्य अर्घ्यं दत्वा पुष्पाञ्जलिं विधाय रक्षां कुर्यात्। शङ्करनारायणे- एवं कृत्वा प्रणवेन तोरणदेवतानामभिश्च गर्ते संस्थाप्यावाह्य पूजयेच्च रक्षेच्च इति सर्वेषु देवेषु तोरणस्थापनप्रकारः। पुनः पूर्वद्वारस्य समीपे उपविश्य तद्दक्षिणपार्श्वे कुड्यतोरणयोर्मध्ये अस्त्रखननादि सर्वं कृत्वा ध्वजस्य संस्कारं कृत्वा स्वमन्त्रेण सम्पूज्य स्वमन्त्रेण संस्थाप्यावाह्य प्रणवेन सकलीकृत्य सम्पूज्यार्घ्यं दत्वा पुष्पाञ्जलिं विधाय रक्षेत्। एवमग्न्यादिषु ध्वजान् संस्थापयेत्। तत्र दक्षिणद्वारि पश्चिमपार्श्वे पश्चिमद्वारि उत्तरपार्श्वे उत्तरद्वारि पूर्वपार्श्वे इति नियमः। इति विष्णौ शिवे सुब्रह्मण्ये गणपतौ शास्तरि च पूर्वाद्यष्टदिक्षु एवं ध्वजान् संस्थापयेत्। शिवे ईशकोणे पुनरप्येकं ध्वजं स्थापयेत्। शङ्करनारायणे दुर्गायां च पूर्वादि चतुर्द्वारेषु.दक्षिणवामपार्श्वयोः द्वौ द्वौ इत्यष्टौ ध्वजान् स्थापयेत्।

***तोरणमन्त्राः लिख्यन्ते-*** विष्णौ- सुशोभनाय नमः। सुभद्राय। सुकर्मणे। सुहोत्राय इति। शिवे-प्रमोदाय। अभयाय। शान्ताय। महते इति। शङ्करनारायणे- सुमङ्गलाय। सुहोत्राय। कल्याणाय। भद्रकाय इति। दुर्गायां- यज्ञेशाय। प्रभाकराय। मङ्गलाय। सुप्रभाय इति। गुहे- वरदाय। यशोदाय। पुष्टिदाय। श्रीप्रदाय इति। गणपतौ- सुपूर्णाय। पूर्णभद्राय। प्रशान्ताय। विजयाय इति। शास्तरि- आर्याय। शास्त्रे। गुहासनाय। सेनान्यै इति। सर्वदेवेषु चतस्रः पृथक्तोरणदेवताः प्रोक्ताः।

***ध्वजमन्त्राः लिख्यन्ते-*** विष्णौ- कुमुदाय नमः। कुमुदाक्षाय। पुण्डरीकाय। वामनाय। शङ्कुकर्णाय। सर्पनेत्राय[1]। सुमुखाय। सुप्रतिष्ठिताय इति। शिवे- भृङ्गीशाय। कार्तिकेयाय। वृषाय। नन्दीशाय। महाकालाय। कुम्भोदराय। महोदराय। वीरभद्राय। ब्रह्मणे इति। शङ्करनारायणे-नन्दिने कुमुदात्मने। महाकालाय कुमुदाक्षात्मने। भूतनाथाय पुण्डरीकात्मने। महीधराय वामनात्मने। पर्वतेशाय शङ्कुकर्णात्मने। गुहेशाय सर्वनेत्रात्मने[2]। कालपाशाय सुमुखात्मने। कपालिने सुप्रतिष्ठितात्मने इति। अथवा भृङ्गीशाय कुमुदात्मने नमः इत्यादि ब्रह्मणे- नमः इत्यन्तं पूर्वादि नवसु दिक्षु पूर्वोक्तः पक्षः समीचीनः। दुर्गायां- काळ्यै। कराळ्यै। विरजायै। मन्दरायै। विन्ध्यवासिन्यै। सुप्रभायै। सिंहवक्त्रायै। दैत्यमर्दिन्यै इति। शास्तरि-गोप्त्रे। पिङ्गलाक्षाय। वीरसेनाय। शाम्भवाय। त्रिनेत्राय। शूलिने। दक्षाय। भीमरूपाय इति। सुब्रह्मण्ये गणपतौ च

- इन्द्राद्यष्टलोकपालाः। इति

१ सर्वनेत्रेति पा २ सर्पनेत्रात्मने पा

सर्वेषु ध्वजदेवताः प्रोक्ताः। इति प्रदक्षिणत्रयेण तन्तुवेष्टनादिध्वजस्थापनान्तं विधाय पुनः स्वस्वमन्त्रैः तोरणान् सम्पूज्य बलिं दद्यात्। पूनः ध्वजान् स्वनामभिः सम्पूज्य बलिं दद्यात्। एतत्सर्वं वाद्यघोषैः सह कुर्यात्। पुनः पादौ प्रक्षाल्याचम्य मण्टपस्यान्तः प्रविश्य द्वारकलशपूजादिकं कुर्यात्। विष्णौ सुब्रह्मण्ये गणपतौ शास्तरि शिवे च मण्टपस्य पूर्वादि द्वारपार्श्वयोश्च दक्षिणवामक्रमेण पूर्णघटेषु द्वौ द्वौ द्वाःस्थान् सम्पूजयेत्। अयमत्रानुष्ठानक्रमः। मण्टपस्य पूर्वद्वारे दक्षिणोत्तरक्रमेण, दक्षिणद्वारे पश्चिमपूर्वक्रमेण, पश्चिमद्वारे उत्तरदक्षिणक्रमेण, उत्तरद्वारे पुर्वपश्चिमक्रमेण इत्यष्टौ स्वस्तिकान् कृत्वा पुनरपि तोरणकलशार्थमर्गळस्थस्वस्तिकानां पश्चिमोत्तरपूर्वदक्षिणभागेषु एकमेकं स्वस्तिकं कृत्वा एवं द्वादशस्वस्तिकेषु व्रीहिभिः स्वस्तिकानि[1] कृत्वा दर्भान् निक्षिप्य द्वादशकुम्भान् क्षालयित्वा सूत्रैःसवेष्ट्य अधोमुखान् न्यसेत्। पुनरस्तत्रोपविश्य सकलीकरणादि कृत्वा पद्मान्तं पीठं सम्पूज्य शोषणादीन् दर्भविन्यासादींश्च विधाय उत्तानीकृत्य न्यस्य कूर्चं विन्यस्य स्वस्वमन्त्रेण जलैः सम्पूर्य पल्लवादिकांश्च विन्यस्य स्वस्वमन्त्रेणावाह्य प्रणवेन सकलीकृत्य समर्च्य निवेद्य प्रसन्नपूजां विधाय पूजां समाप्य वस्त्रेणाच्छाद्य रक्षेत् इति विष्णौ द्वारकलशान् तोरणकलशांश्च पूजयेत्। शिवे एवं द्वारकलशांश्च तोरणकलशांश्च सम्पूज्य पूर्वादि द्वारेषु मध्ये मण्डलं कृत्वा दर्भान् निक्षिप्य तत्र देवताः पूजयेत्। गुहे एवमष्टौ द्वारकलशान् सम्पूज्य द्वारमध्ये द्वारदेवताः पूजयेद्वा। गणपतौ शास्तरि च एवमष्टौ द्वारकलशानेव पूजयेत्। शङ्करनारायणे पूर्वादिद्वारशाखयोः एवमष्टौ द्वाःस्थान् पूजयेत्। पुनः पूर्वाद्यष्टदिक्षु स्वस्तिकादिकं विधाय कलशान् सादयित्वा पीठं सम्पूज्य कुम्भसंस्कारं कृत्वा कूर्चं न्यस्य इन्द्रादिमन्त्रैर्जलैः सम्पूर्य पल्लवादिकं न्यस्य इन्द्रादि लोकपालान मन्त्रैरावाह्य प्रणवेन सकलीकृत्य सम्पूज्य निवेद्य प्रसन्नपूजां विधाय पूजां समाप्य वस्त्रेणाच्छाद्य रक्षेत्। तत्र दिक्षु अर्गलस्थाने कलशस्थानं, द्वारमध्ये द्वारदेवताः पूजयेत्। दुर्गायामेवं पूर्वाद्यष्टदिक्षु कलशेषु इन्द्राद्यष्टलोकपालानेव पूजयेत्।

***मन्त्राः लिख्यन्ते-*** पूर्णाय। पुष्कराय इति पूर्वद्वारि दक्षिणोत्तरक्रमेण, आनन्दाय। नन्दनाय इति दक्षिणद्वारि पश्चिमपूर्वक्रमेण, वीरसेनाय। सुषेणाय इति पश्चिमद्वारि उत्तरदक्षिणक्रमेण, सम्भवाय। प्रभवाय इत्युत्तरद्वारि

---

१ पीठानि इति पा।

पूर्वपश्चिमक्रमेण इति विष्णौ द्वारपालाः। महोदराय। महाकालाय इति पूर्वद्वारि दक्षिणोत्तरयोः, महाकण्ठाय। महोरस्काय इति दक्षिणद्वारि पश्चिमपूर्वयोः, अग्निजिह्वाय। अग्निनेत्राय इति पश्चिमद्वारि उत्तरदक्षिणयोः, विरूपाक्षाय। विशालाक्षाय इति उत्तरद्वारि पूर्वपश्चिमयोः इति शिवे द्वारपालाः। वीरसेनाय। महासेनाय १। सुसेनाय। भद्रसेनाय २। चारुसेनाय। सुषेणाय ३। पूर्णसेनाय। चित्रसेनाय ४। इति गुहे द्वारपालाः। वज्रदन्ताय। गजास्याय १। भीमाय। महिषास्याय २। मेघनादाय। विरूपाक्षाय ३। वरदाय। सर्वभक्षकाय ४। इति गणपतौ द्वारदेवताः। वीरबाहवे। महावीराय १। विद्युद्दन्ताय। विलासिने २। तीक्ष्णाय। तीक्ष्णदन्ताय ३। ताराक्षाय। भवोद्भवाय ४। इति शास्तरि द्वारपालाः। महोदराय पूर्णात्मने। महाकायाय[1] पुष्करात्मने १। महाकण्ठायानन्दात्मने। महोरस्काय नन्दात्मने २। अग्निजिह्वाय वीरसेनात्मने। अग्निनेत्राय सुषेणात्मने ३। विरूपाक्षाय सम्भवात्मने। विशालाक्षाय प्रभवात्मने ४। इति शङ्करनारायणे द्वारपालाः।

***तोरणकलशमन्त्राः***- शिवे सहस्रवीच्यै। विमलायै। शतधारायै। प्रमोदिन्यै इति। इन्द्राय सुराधिपतये सायुधसवाहनसपरिवाराय[2] नमः। यमाय प्रेताधिपतये सायुधसवाहनसपरिवाराय नमः। वरुणाय जलाधिपतये सायुधसवाहनसपरिवाराय नमः। सोमाय नक्षत्राधिपतये सायुधसवाहनसपरिवाराय नमः। इति विष्णौ तोरणकलशमन्त्राः। कुम्भकर्णाय। भद्रकर्णाय। श्वेतकर्णाय। गोकर्णाय इति शङ्करनारायणे तोरणकलशमन्त्राः[3]। सुब्रह्मण्ये विकल्पः।

***मण्टपसंस्कारः***- मण्टपस्य वेद्यां जनैरितस्ततश्चङ्क्रमादिकं परित्यज्य दर्भादिकं सर्वं परित्यज्य किञ्चित्संमार्ज्य सामान्यशुद्ध्यर्थं किञ्चित्सम्प्रोक्ष्य पुनः प्रासादशुद्धौ उक्तक्रमेण सादितैर्मुष्ट्यादिभिः सर्षपादिभिर्वा शोधनद्रव्यैः सर्वां वेदिमग्निकोणादीशकोणावसानं[4] तत्तदवसरे अधिवासकुण्डानि कुम्भस्थलं च शोधयेत्। तत्र स्थलशुद्धिकाले सर्षपान् पात्रे किञ्चित्सङ्गृह्य शेषान् यथोक्तं विकीर्य विकीर्णान् सर्षपान् संमार्ज्य गृहीत्वा तत्पात्रे संयोज्य ईशकोणे न्यसेत्। पुनर्विकिरैः शोधनकाले मण्टपं शक्त्यात्मकं सङ्कल्प्य पूर्वाभिमुखस्तिष्ठन् उत्तानेन

---

१ महाकाळायेति युक्तम्। २ रामरत्तपदत्वे सद्वयं व्यर्थमिति भाति। इन्द्राय सुराधिपतये सायुधवाहनाय सपरिवाराय नमः इति विवरणसम्मतः पाठः। ३ शङ्करनारायणे द्वाःस्थान् पूजयेदित्युक्तेः तोरणकलशाभावप्रतीतेः कथं तत्कलशमन्त्रा उक्ताः। द्वारदेवता इति मूलपाठो युक्त इति भाति। ४ पुनरग्न्यादीशान्तं च।

पाणिना विकिरान् त्रिधा पूर्वभागे विकीर्य पुनर्यथोक्तं सर्षपवत्कुर्यात्। एवं धूपदीपान्तं विधाय सप्राकारं चतुर्द्वारं सौवर्णं मण्टपं स्मरेत्। अनन्तरं चतुर्द्वारं हेमप्राकारवेष्टितम्। रत्नसिंहासनं दिव्यं सौवर्णं मण्टपं स्मरेत्।

उत्तप्तोज्वलकाञ्चनेन रचितं तुङ्गाङ्गरङ्गस्थलं
शुद्धस्फाटिकभित्तिकाविरचितैस्तम्भैश्च हैमैः शुभैः।
द्वारैश्चामरराजरत्नखचितैः शोभावहैर्मण्टपैर्माणिक्यो-
ज्वलदीपदीप्ति (पि)तकरैर्लक्ष्मीविलासास्पदम्।। इति

मण्टपं ध्यात्वा वेदिमध्ये पीठं सम्पूज्य स्वस्वबीजमन्त्रेण शक्तिमावाह्य सम्पूज्य पुनः स्वस्वमूलेन सकलीकृत्य सम्पूज्य यत्किञ्चिन्निवेद्य प्रसन्नपूजां विधाय व्याप्य लयाङ्गं कृत्वा मण्टपं तच्चैतन्येन व्याप्तं सङ्कल्प्य स्वस्वदिक्षु इन्द्रादिलोकपालान्सम्पूज्य स्वस्वास्त्रमन्त्रेण सर्वदिक्षु पुष्पमाराध्य[1] गुर्वादिपीठमन्त्रान् भूमौ न्यस्य धर्मादिमन्त्रान् अग्न्यादिस्तम्भेषु न्यस्याधर्मादीन् प्रागादिवंशेषु न्यस्य सत्वादीन् सूत्रेषु न्यस्य वस्त्रे मायां विद्यां च न्यस्य पद्मादिशेषं भूमौ न्यसेत्। विष्णौ अनन्तादिशेषं भूमौ न्यसेत्। पुनः समष्ट्या व्याप्याङ्गं कृत्वा तालत्रयादिना रक्षां कृत्वा मण्टपं विराड्रूपं स्मरेत्। दुर्गायां पीठमन्त्रन्यासे तद्योग्यमूहयेत्। पुन र्धूपदीपैश्चालङ्कुर्यात्।

***कुम्भेशपूजा-*** तत्रेशकोणे अष्टदलपद्मं कृत्वा वस्त्रान्तर्हि तैर्व्रीहितण्डुलतिलसर्षपैः पीठं विरचय्य तस्योपरि कूर्चं न्यस्य तत्र क्षालितं यथावत् सूत्रवेष्टितं सौवर्णादिकुम्भमधोमुखं न्यसेत्। तद्दक्षिणे स्वस्तिकं कृत्वा धान्यानि निक्षिप्य दर्भाग्रे न्यस्य पीठं सङ्कल्प्य तत्र क्षालितं सूत्रवेष्टितं करकमधोमुखं न्यस्य गुरुः कुम्भसमीपे उपविश्य देहशुद्धिं स्वस्वषडध्वन्यासादिकं शङ्खपूरणमात्माराधनं च विधाय गुरून् गणपतिं च सम्पूज्य गुरवे अर्घ्यं दत्वा पुष्पाञ्जलिं कृत्वा गणपतये निवेद्य पुष्पाञ्जलिं कुर्यात्। पुनराधारशक्त्यादि पीठं सम्पूज्य स्वबीजेन प्रकृतिमावाह्य बीजाङ्गैस्सकलीकृत्य सम्पूज्यार्घ्यं दत्वा पूष्पाञ्जलिं कृत्वा पद्ममुद्रां प्रदर्शयेत्। पुनः कुम्भं सङ्गृह्य स्वस्वास्त्रेण कुम्भं सम्प्रोक्ष्य कवचेन सूत्रवेष्टितं कृत्वा स्वस्वमूलेनाष्टगन्धं लेपयित्वा प्रणवेन धूपयित्वा मूलेन पीठेऽधोमुखं न्यस्य स्वस्वबीजैः शोषणदाहनप्लावनकाठिन्यसुषरीकरणानि कृत्वा स्वस्वपञ्चतत्वेषु प्रथमेन

---

१ पूष्पैर्विकीर्येत्यर्थः।

दर्भविन्यासं, द्वितीयेनाष्टगन्धप्रोक्षणं, तृतीयेनाक्षतविकिरणं च विधाय मूलेन कुम्भं सम्पूज्य चतुर्थेनोत्तानीकृत्य उद्धृत्य मूलावसानेन पञ्चमतत्वेन पीठे न्यसेत्। प्रणवेन कुम्भमुखं सम्प्रोक्ष्य कुम्भस्य मूले दशदलं, मध्ये द्वादशदलं, ऊर्ध्वे षोडशदलं पद्मं सङ्कल्प्य वाह्निसूर्यसोमकलाः तत्तदृक्समष्टिमन्त्रांश्च न्यस्य सम्पूज्य पुनः पुष्पाक्षतैः पूजयेत्। पुनः ओं ह्रीं हं सः इति मन्त्रेण कुम्भावाहनं विधाय ह्रामाद्यङ्गं कृत्वा कुम्भमुखे बिन्दुकलाः न्यस्य तन्मन्त्रेण संपूज्य कुम्भमुद्रां प्रदर्श्य पुनः पञ्चविंशतिदर्भैः कूर्चं बध्वा क्षालयित्वा अष्टगन्धं विलिप्य शोषणदाहनप्लावनानि कृत्वा अष्टवारं प्रणवं सञ्जप्य कूर्चं कुम्भे (ऽधोग्रं) न्यसेत्। प्रणवेन संपूज्य सुवर्णरत्नगन्धाक्षतयुतं न्यस्य आत्माष्टाक्षरं[१] स्वस्वमूलं चोक्त्वा कुम्भस्य तन्मन्त्रेण सम्पूज्य पुनः हस्ते अमृतबीजं विलिख्य तत्करेण कुम्भमुखं पिधाय प्रणवत्रयं लिपिप्रतिलोमं शिरोमन्त्रं चोक्त्वा जप्त्वा मानसपूरणं विधाय पुनः पत्रेण कुम्भमुखमाच्छाद्यान्यस्मिन् पात्रे गालितं जलं सम्पाद्य तत्र पीठं सम्पूज्य वरुणं तीर्थं चावाह्य संपूज्य मूलेनावाह्य संपूज्य पञ्चवारुणादिकं सञ्जप्य रक्षां कुर्यात्। पुनस्तज्जलं शङ्खे आदायाष्टगन्धं विलोड्य पद्मं मूर्तिं च सङ्कल्प्य मूलेनावाह्य किञ्चित्सम्पूज्य तज्जलं कुम्भे निषिच्य शेषजलैः कुम्भमर्धोत्तरं सम्पूर्य लिपिपङ्कजं सम्पूज्य स्वस्वमूर्तिमन्त्रेण मूर्तिमावाह्य तेन मन्त्रेण व्याप्य मूलाक्षराङ्गैः सकलीकृत्य सम्पूज्य पुष्पाञ्जलिं कुर्यात्। पुनः शङ्खे पूर्ववज्जलं सङ्गृह्याष्टगन्धं विलोड्य प्रणवाक्षरैः प्रणवेन च सम्पूज्य चतुर्नवतिकलाः तत्तदृक्समष्टिमन्त्रांश्चावाह्य तत्तत्प्राणप्रतिष्ठां च कृत्वा स्वस्वमूलेन किञ्चित्सम्पूज्य तज्जलं कुम्भे निषिच्य कलाः न्यस्य स्वस्वमूलाक्षराङ्गैः सकलीकृत्य सम्पूज्यार्घ्यं दत्वा पुष्पाञ्जलिं कुर्यात्। पुनः पूर्ववत् शङ्खे जलमादायाष्टगन्धं विलोड्य प्रणवेन सम्पूज्याखिलतत्वान्यावाह्यान्ते मूलेनावाह्य किञ्चित्सम्पूज्य तज्जलं कुम्भे निषिच्य तत्वन्यासादिभिः सकलीकृत्य सम्पूज्यार्घ्यं दत्वा पुष्पाञ्जलिं कुर्यात्। पुनः मूलाधारहृदयद्वादशान्तेषु[२] पद्मं सङ्कल्प्य मूलाधारपद्मे अं नमः परायात्मतत्वात्मने नमः इत्यावाह्य प्रणवेनाङ्गं कृत्वा सम्पूज्य हृदयपद्मे उं नमः पराय विद्यातत्वात्मने नमः, इत्यावाह्य प्रणवेन सकलीकृत्य सम्पूज्य पुनः द्वादशान्तपद्मे मं नमः पराय परतत्वात्मने नमः, इत्यावाह्य सकलीकृत्य सम्पूजयेत्। शिवे- अं नमः शिवाय आत्मतत्वात्मने नमः। उं नमः शिवाय

---

१ ओं ह्रीं हंसः सोऽहं स्वाहा इत्यात्माष्टाक्षरम्। २ कलशस्येत्यर्थः।

विद्यातत्वात्मने नमः। मं नमः शिवाय शिवतत्वात्मने नमः। इति मन्त्रैः पृथगावाह्य सम्पूजयेत्। पुनः सर्वेषु देवेषु शेषजलैः यथावत् सम्पूर्य पल्लव चक्रिकादिकं न्यस्य उपरि दर्भान् विन्यस्य प्रणवोपचारसहितेन स्वस्वमूलेन देवं कलशे आवाह्य मुद्राः प्रदर्श्य व्याप्य लिपितत्वन्यासं मूलाक्षराङ्गं च कृत्वा स्वस्वोक्तक्रमेण उपहारान् दत्वा यथावत्सम्पूज्य निवेद्य प्रसन्नपूजां विधाय पूजां समाप्य व्याप्य लयाङ्गं कृत्वा रक्षेत्।

***कर्करीपूजा***- पुनः कर्कर्याः पीठं सम्पूज्य करकस्यास्त्रक्षालनादि सर्वं विधायोद्धृत्य उत्तानीकृत्य न्यस्योपरि कूर्चं न्यस्य पूर्वं शङ्खेन किंचित्परिपूर्य गालितजलैर्यथावत्सम्पूर्य पल्लवचक्रिकादिकं न्यस्य स्वस्वास्त्रेणावाह्य स्वस्वाङ्गैः[1] सकलीकृत्य सम्पूज्य निवेद्य प्रसन्नपूजां विधाय पूजां समाप्य व्याप्य लयाङ्गं कृत्वा रक्षेत्। पुनः करकं कुम्भेशं चोद्धृत्य कुम्भेशं पृष्ठतः कृत्वा अस्त्रेण तस्मादारभ्य करकधारया कुड्यमूले सेचयित्वा कुम्भेशेन सह प्रदक्षिणीकृत्य तत्रैवागत्य कर्कर्याः पीठे पूर्वं गृहीतं सर्षपं न्यस्य तदुपरि कर्करीं न्यसेत्। कुम्भेशपीठे पूर्वं सङ्गृहीतं विकिरं न्यस्य तत्र कुम्भेशं न्यसेत्। पुनः पूर्ववत् आधारत्रये तत्वत्रयं सम्पूज्य मूलमन्त्रेण देवमावाह्य सकलीकृत्य सम्पूज्य निवेद्य प्रसन्नपूजां समाप्य व्याप्य लयाङ्गं कृत्वा वस्त्राभ्यां परिवेष्ट्य रक्षेत्। पुनः कर्करीं जलैः सम्पूर्यास्त्रमन्त्रेणावाह्य सकलीकृत्य सम्पूज्य निवेद्य प्रसन्नपूजां विधाय पूजां समाप्य व्याप्य लयाङ्गं कृत्वा वस्त्रेणाच्छाद्य रक्षेत् इति कुम्भेशकर्करीपूजाप्रकारः। इति मण्टपसंस्कारविधिः। अथाचार्यकुण्डे स्वस्वोक्तक्रमेणाग्निजननं कुर्यात्। अथ स्थलशुद्ध्यनन्तरं विप्रेभ्यो दानं कृत्वा सूत्रपातं कुर्यात्।

***कलशपदक्लृप्तिः***- तत्र कलशाननुसृत्य सूत्राणि द्रव्याण्यनुसृत्य खण्डानि कुर्यात्। तत्र पञ्चविंशतिद्रव्यप्रकारो लिख्यते। तत्रादौ कलशाः- पञ्चविंशतिः[2] २५ प्रथमः। द्वितीयः एकोनपञ्चाशत् ४१। तृतीयः एकाशीतिः ८१। चतुर्थः अष्टोत्तरशतं १०८। पञ्चमः षट्पञ्चाशदुत्तरशतं१५६। षष्ठः सप्तदशसहितद्विशतं २१७। सप्तमः त्रिपञ्चाशत्सहितद्विशतं२५३। अष्टमः एकोत्तरं त्रिशतं ३०१। नवमः एकोत्तरं पञ्चशतं ५०१। दशमः एकोत्तरसहस्रम् १००१। इति दशधा कलशसंख्या। एतत्प्रायेण वैष्णवप्रकारः।

१ स्वस्वास्त्राङ्गैः २ पञ्चभिर्नवभिर्हीनं पञ्चविंशतिकुम्भकैः। मध्यमेकोनपञ्चाशदेकाशीतिशतं तथा इति पञ्च नव कलशा अप्युक्ताः।

तत्र पञ्चविंशतिकलशे प्रागग्राण्युदगग्राणि षट् सूत्राणि कृत्वा पञ्चपुटक्षेत्रे शुद्धजलवर्जितं ब्राह्मदैविकमानुषक्रमेण पञ्चविंशतिघटान् कुर्यात् इति प्रथमः पञ्चविंशतिकलशप्रकारः। अथ द्वितीये एकोनपञ्चाशत्कलशे प्रगग्राण्युदगग्राणि च पृथक् द्वादशसूत्राणि कृत्वा एकादशपुटक्षेत्रं कुर्यात्। तृतीये एकाशीतिकलशे प्रागग्राण्युदगग्राणि चतुर्दशसूत्राणि कृत्वा त्रयोदशपुटक्षेत्रं कुर्यात्। चतुर्थे अष्टोत्तरशतकलशे षोडशसूत्राणि पूर्ववत्कृत्वा पञ्चदशपुटक्षेत्रं कुर्यात्। पञ्चमे षट्पञ्चाशदुत्तरशते अष्टादशसूत्राणि कृत्वा सप्तदशपुटक्षेत्रं कुर्यात्। षष्ठे सप्तदशोत्तरद्विशते विंशतिसूत्राणि कृत्वा एकोनविंशतिपुटक्षेत्रं कुर्यात्। सप्तमे त्रिपञ्चाशदुत्तरद्विशते द्वाविंशतिसूत्राणि कृत्वा एकविंशतिपुटक्षेत्रं कुर्यात्। अष्टमे एकोत्तरत्रिशते चतुर्विंशतिसूत्राणि कृत्वा त्रयोविंशतिपुटक्षेत्रं कुर्यात्। नवमे एकोत्तरपञ्चशते त्रिंशत्सूत्राणि कृत्वा एकोनत्रिंशत्पुटं क्षेत्रं कुर्यात्। दशमे एकोत्तरसहस्रकलशे चत्वारिंशत्सूत्राणि कृत्वा एकोनचत्वारिंशत्पुटं क्षेत्रं कुर्यात् इति दशविधकलशक्लृप्तिः। तेष्वथ क्षेत्रेषु पञ्चविंशतिरेव खण्डानि स्युः। पञ्चविंशतिकलशे एकखण्डं[१] शुद्धजलवर्जितं कुर्यात्। एकोनपञ्चाशत्कलशे एकादशपुटक्षेत्रे चतुर्दिक्षु पुटद्वयं बहिःकृत्वा तृतीयपुटं मार्जयित्वा परितः वीथीः प्रकल्प्य मध्ये पञ्चविंशतिखण्डैः अष्टदलं कृत्वा तन्मध्ये ब्राह्मं, तद्बहिर्दलेषु दैविकावरणं ८ प्रकल्पयेत्। तद्बहिः दिक्षु द्विकं ८ कोणेषु चतुष्कं १६ अन्तरालेषु द्विकं १६ प्रकल्प्यान्यकोष्ठानि मार्जयेत् इति एकोनपञ्चाशत्कलशे पद्मप्रकारः। एकाशीतिकलशे त्रयोदशपुटक्षेत्रे पुटत्रयं बहिः कृत्वा चतुर्दिक्षु चतुर्थं सम्मार्ज्य परितः वीथीः प्रकल्प्य मध्ये पूर्ववदष्टदलं कृत्वा ब्राह्मं १ दिक्षु दैविकं ८ प्रकल्प्य तद्बहिः मानुषे दिक्षु त्रिकं १२ कोणेषु नवकं ३६ अन्तरालेषु त्रिकं २४ प्रकल्प्यान्यकोष्ठानि मार्जयेत् इत्येकाशीतिकलशे पद्मप्रकारः। अष्टोत्तरशते पञ्चदशपुटक्षेत्रे ब्राह्मे नवपदैरष्टदलं कृत्वा १ दैविके दिक्षु त्रिकं १२ विदिक्षु एकैकं ४ मानुषे दिक्षु नवकं ३६ विदिक्षु अष्टकं ३२ अन्तरालेषु त्रिकं २४ च प्रकल्प्यान्यकोष्ठानि मार्जयेत्। षट्पञ्चाशत्सहितशते सप्तदशपुटक्षेत्रे ब्राह्मे नवपदैरष्टदलं कृत्वा दैविके दिक्षु षट्कं २४ विदिक्षु चतुष्कं १६ च कृत्वा मानुषे दिक्षु नवकं ३६ विदिक्ष्वष्टकं ३२ अन्तरालेषु षट्कं च ४८ प्रकल्प्यान्यकोष्ठानि मार्जयेत्। सप्तदशोत्तरद्विशते २१७ एकोनविंशतिपुटे ब्राह्मे नवपदैरष्टदलं कृत्वा

---

१ एकैकं खण्डम्।

दैविके मानुषे च दिक्षु विदिक्षु अन्तरालेषु च चतुर्विंशतिनवकानि २४ x ९ =२१६ प्रकल्प्यान्यकोष्ठानि मार्जयेत्। त्रिपञ्चाशदुत्तरद्विशते २५३ एकविंशतिपुटक्षेत्रे ब्राह्मे नवपदैरष्टदलपद्मं कृत्वा दैविके दिक्षु विदिक्षु च नवकं ७२ मानुषे दिक्षु द्वादशकं ४८ विदिक्षु नवकं ३६ अन्तरालेषु द्वादशकं ९६ प्रकल्प्य शिष्टकोष्ठानि मार्जयेत्। एकोत्तरत्रिशते ३०१ त्रयोविंशतिपुटक्षेत्रे ब्राह्मे पञ्चविंशतिपदैरष्टदलपद्मं कृत्वा दैविके दिक्षु दशकं ४० विदिक्षु त्रिकं १२ मानुषे दिक्षु पञ्चविंशतिं १०० विदिक्षु सप्तदशकं ६८ अन्तरालेषु दशकं ८० प्रकल्प्यान्यकोष्ठानि मार्जयेत्। एकोत्तरपञ्चशते ५०१ एकोनत्रिंशत्पुटक्षेत्रे ब्राह्मे पञ्चविंशतिपदैः अष्टदलं कृत्वा दैविके दिक्षु विदिक्षु च सप्तदशकं १३६ मानुषे दिक्षु पञ्चविंशतिं १०० विदिक्षु षोडशकं ६४ अन्तरालेषु पञ्चविंशतिं २०० प्रकल्प्यान्यकोष्ठानि मार्जयेत्। एकोत्तरसहस्रकलशे १००१ एकोनचत्वारिंशत्पुटे क्षेत्रे एकोनपञ्चाशत्पदसहितानि पञ्चविंशतिखण्डानि कृत्वा मध्यस्थैकोनपञ्चाशत्पदेषु मध्ये पञ्चविंशतिपदैरष्टदलं कृत्वा शिष्टानि पदानि वीथ्यां योजयेत्। दैविके मानुषे च एकोनपञ्चाशत्पदेषु मध्ये नवकेनाष्टदलं कृत्वा ब्राह्मे एकघटं कल्पयेत्। दैविके मानुषे च पृथगेकचत्वारिंशद्घटान् न्यसेत्। ४१ x २४ =९८४ पुनर्मानुषे चतुर्दिक्षु अष्टदलस्थितचतुर्दलेषु च षोडश १६ घटान् न्यसेत् इत्येकोत्तरसहस्रपदक्लृप्तिः इति वैष्णवे।

***शिवे विशेषः-*** पञ्चशते मानुषे कोणेषु सप्तदशकं[1] द्विशते एकोनविंशतिपुटे क्षेत्रे ब्राह्मे नवपदैरष्टदलं १ कृत्वा दैविके दिक्षु विदिक्षु च द्वादशकं ९६ मानुषे दिक्षु षट्कं २४ विदिक्षु चतुष्कं १६ अन्तरालेष्वष्टकं ६४ इति। सप्तदशोत्तरद्विशते पूर्ववत्क्षेत्रं कृत्वा ब्राह्मे नवकेनाष्टदलं कृत्वा १ दैविके दिक्षु षट्कं २४ विदिक्षु चतुष्कं १६ मानुषे दिक्षु द्वादशकं ४८ विदिक्षु षोडशकं ६४ अन्तरालेषु अष्टकं ६४ इति। पञ्चविंशत्युत्तरद्विशते पूर्ववत् क्षेत्रं कृत्वा ब्राह्मे नवकेनाष्टदलं कृत्वा ब्रह्मकलशस्याष्टदिक्षु अष्टौ कलशान् न्यसेत् ९ दैविके मानुषे (अन्तराले) च नवकानीति २१६। पुनः एकोनपञ्चाशदुत्तरशते सप्तदश पुटक्षेत्रे ब्राह्मे नवकेनाष्टदलं कृत्वा कर्णिकायां दलेषु च नवकलशान् न्यस्य ९। दैविके दिक्षु त्रिकं १२। विदिक्ष्वेकैकं ४। मानुषे दिक्षु नवकं ३६ । विदिक्षु षोडशकं ६४। अन्तरालेषु त्रिकमिति२४ शिवे विशेषः[2]।

१ अवशिष्टं क्षेत्रात्रिकं पूर्वोक्तवत्, विशेषमात्रमुक्तम्। २ राङ्ग्रहे शिवेऽपि राहस्रकलशाभिषेक उक्तः।

***शिवे सप्तदशद्रव्यप्रकारः***- पञ्चविंशतिः। एकोनपञ्चाशत्। एकाशीतिः। अष्टोत्तरशतं नवोत्तरद्विशतं इति तत्र कलशसंख्या। तत्र पञ्चविंशतौ सप्तपुटं क्षेत्रं, एकोनपञ्चाशत्कलशे नवपुटं क्षेत्रं, एकाशीतिकलशे एकादशपुटं क्षेत्रं, अष्टोत्तरशते त्रयोदशपुटं क्षेत्रं, नवोत्तरद्विशते सप्तदशपुटं क्षेत्रं कुर्यात्। तत्र पञ्चविंशतौ सप्तपुटक्षेत्रे मध्ये नवकेनाष्टदलं कृत्वा कर्णिकायां दलेषु च नवकं ९ पुनः परितः वीथीः कृत्वा तद्बहिर्दिक्षु त्रिकं १२ विदिक्ष्वेकैकं ४ इति। पुनरेकोनपञ्चाशत्कलशे नवपुटे क्षेत्रे मध्ये पूर्ववत् ९ दिक्षु षट्कं २४ विदिक्षु चतुष्कमिति १६। एकाशीतौ एकादशपुटक्षेत्रे मध्ये पूर्ववत् ९ दिक्षु नवकं ३६। विदिक्षु नवकं ३६ एवं नव नवकानि। अष्टो (नवो) त्तरशते त्रयोदशपुटक्षेत्रे मध्ये पूर्ववत् ९ दिक्षु नवकं ३६ विदिक्षु षोडशकं ६४ इति। नवोत्तरद्विशते सप्तदशपुटक्षेत्रे मध्ये पञ्चविंशतिभिरष्टदलं कृत्वा तत्र नव ९, बहिरष्टदिक्षु पञ्चविंशतिः २०० इति शिवे विशेषः। अथ विष्णौ अष्टोत्तरशते बहिर्दिक्षु दशकं विदिक्षु पञ्चदशकमिति विशेषः। अन्यत्सर्वं समानं इति पद्मप्रकारः।

अथैतेषु कलशक्षेत्रेषु यथायोग्यमेककलशक्षेत्रं कृत्वा ब्रह्मकलशार्थं मध्ये अष्टदलं कृत्वा परिखण्डेषु ब्रह्मकलशार्थं स्वस्तिकादिकं कृत्वा सर्वत्रापि तण्डुलादिरजोभिः पद्मं यथाशोभं प्रपूर्य मध्ये षोडशप्रस्थपरिमितान् शालीन् निक्षिप्य पुनस्तण्डुलं तदर्धं, तिलं तदर्धं, सर्षपं तदर्धं इति वस्त्रान्तरितैर्द्रव्यैर्ब्रह्मणः पीठं विरचय्य तस्मिन् कूर्चं न्यस्यान्यत्र व्रीहिनिचयं निक्षिप्य द्वे द्वे दर्भाग्रे न्यस्य पीठानि कुर्यात्। पुनः ब्राह्मे सौवर्णादिकुम्भमन्यत्र मार्त्तादिकुम्भान् स्वस्वास्त्रेण जलैः क्षालयित्वा कवचेन सूत्रेणावेष्ट्य[1] पद्मपदेषु सर्वत्राधोमुखान् न्यसेत्। पुनः बीजाङ्कुरपालिकाः परितो न्यस्य घटिकाः शरावाश्च सन्ति चेत् तद्द्वितयमपि परितो न्यस्य दक्षिणभागे पुष्पचन्दनाक्षतादीन् न्यस्य दीपादिकमपि न्यस्य गालितं जलं वामे न्यस्य, गुरुः स्नानादि कृत्वा नववस्त्रं संवेष्ट्याचम्य उपवीतवदुत्तरीयं वस्त्रं धृत्वा प्रासादस्थं देवं संवन्द्य मण्टपस्य प्रधानद्वारि प्रविश्य ब्रह्मकुम्भस्य समीपे अव्यग्रः स्वासने उपविश्य पवित्रपाणिः गुरून् गणपतिं च संवन्द्य स्वस्वास्त्रेण करशोधनं तालत्रयदिग्बन्धनाग्निप्राकारांश्च[2] विधाय पुनः द्वादशवारं प्रणवं सञ्जप्य प्राणायामान् कृत्वा स्वस्य विराड्रूपं सङ्कल्प्य अमिति त्रिवारमुच्चार्य पिङ्गलया वायुं विमुच्य षड्वारेण पिङ्गलया

१ कलशान् वेष्टयेत् सर्वान् सूत्रेणैकेन बुद्धिमान्। वर्धनीं सूत्रयुग्मेन शिवकुम्भान् त्रिसूत्रकैः इति। २ सूक्ष्ममध्यमहाशब्दा दक्षराव्योभयोद्भवाः। बोधारोचनिकोद्दीप्तिकरा वह्नेस्त्रितालकाः

प्रपूर्य द्वादशवारेण परिकुम्भ्य इडया तं वायुं विमुञ्चेत्। पुनः उमिति त्रिवारमुच्चार्य इडया वायुं विमुच्य षड्वारेण वायुमिडया प्रपूर्य द्वादशवारेण इडां प्रकुम्भ्य तं वायुं पिङ्गलया मूञ्चेत्। पुनः अं उमिति षड्वारं प्रजप्य पिङ्गलया इडया च प्रपूर्य पुनस्तद्वायुं सुषुम्नामुखे आकृष्य मं इति षड्वारं प्रजप्य सुषुम्नामापूर्य द्वादशवारं प्रजप्य सुषुम्नां परिकुम्भ्य तद्वायुं व्यत्यस्य बहिस्त्यजेत् इति नाडीशुद्धिप्रकारः।

***रेचकादिकं कुर्यात्***- प्रणवेन षोडशवारं प्राणायामं कृत्वा पिङ्गलया वायुं विमुच्य द्वात्रिंशद्वारं प्राणायामं कृत्वा इडया वायुं प्रपूर्य चतुःषष्टिवारेण सुषुम्नानाड्यां कुम्भकं कुर्यात् इति रेचकपूरककुम्भकप्रकारः। अनेनात्यन्तदुरितनिवृत्तिः स्यात्। एवं रेचकादिना जीवपरमात्मनोरैक्यं मनसा ध्यात्वा पुनः ओंह्रीं हंसः इत्यनेन मूलाधारस्थं जीवं सुषुम्नामार्गेण द्वदशान्त-स्थपरमात्मनि संयोज्य लं वं रं यं हं इति बीजैः पादाग्रनाभिहृदयकण्ठतालुदेशेषु संस्पृश्य क्रमात् पृथिव्यप्तेजोवाय्वाकाशानां मण्डलानि सङ्कल्प्य ह्लां इति पञ्चविंशतिसंख्यं पञ्चप्राणायामं कृत्वा ह्लां हुं फट् इति पादाग्रादि नाभ्यन्तं व्याप्य पृथिवीमप्सु संहरेत्[1]। पुनः ह्वीमिति पञ्चविंशतिसंख्यं चतुर्वारं प्राणायामं कृत्वा ह्वीं हुं फट् इति नाभ्यादि हृदयान्तं व्याप्य अपः अग्नौ संहरेत्। पुनः ह्रू मिति पञ्चविंशतिसंख्यं त्रिवारं प्राणायामं कृत्वा ह्रूं हुं फट् इति हृदयादि कण्ठान्तं व्याप्य अग्निं वायौ संहरेत्। पूनः ह्यैमिति पञ्चविंशतिसंख्यं द्विवारं प्राणायामं कृत्वा ह्यैं हुं फट् इति कण्ठादि ताल्वन्तं व्याप्य वायुं आकाशे संहरेत्। पुनः हौमिति पञ्चविंशतिसंख्यं सकृत्प्राणायामं कृत्वा हौं हुं फट् इति ताल्वादि द्वादशान्तं व्याप्य आकाशं परमात्मनि संहरेत् इति भूतसंहारः[2]। पुनः शोषणादिकं कुर्यात्।

---

इति दिग्बन्धनमस्त्रेण,वैष्णवे नारसिंहेन वा। अग्निबीजेनाग्निप्राकारः। १ ह्लां नमः शिवाय पृथिव्यात्मने हुं फट् इति [शिवे] प्राणायामं कृत्वा तत्तन्मात्रासु विलाप्य संहारक्रमस्थपञ्चतत्वमनुभिः व्याप्य तन्मात्राः स्वजनके विलापयेत् इति व्याख्यात्रभिप्रायः। पञ्चतत्वबीजानि पञ्चभूतबीजानि वा ग्राह्याणि। २ पञ्चभूतसंहारानन्तरं ओं हुं फट् इति सकृत् प्राणायामं कुर्वन् शब्दतन्मात्राः मनसि, मनः अहङ्कारे, अहङ्कारं बुद्धौ, बुद्धिं प्राणतत्वे, तत् जीवतत्वे, प्रणवप्राणायामत्रयेण क्रियात्रयं च संहरेत्। शिवे तु बुद्ध्यन्तं संहृत्य प्रणवप्राणायामेन बुद्धिं गुणप्रकृतौ तां पुरुषे पुरुषं वाग्तत्वे तमशुद्धविद्यायां तां कलायां तां नियतितत्वे तत् काले तं मायायां तं शुद्धविद्यायां तामीश्वरे तं सदाशिवे तं शक्तौ तां शिवे च संहृत्य प्रणवप्राणायामत्रयेण क्रियादित्रयं संहृत्य शिवमानन्दरूपं भावयेत्।। फडन्तः प्राणायामे नमोन्तः व्यापके इति व्याख्यात्रभिप्रायः।

**शोषणम्**- यं इति वायुबीजेन षोडशवारं प्राणायामं कृत्वा वायुं इडया विमुच्य इडामुखे नाभिपद्मे च षड्बिन्दुसहितं धूम्रं वायुमण्डलं तस्मिन् धूम्रं यं बीजं च ध्यात्वा तद्बीजेन द्वात्रिंशद्वारं प्राणायामं विधाय इडया **तद्वायुमण्डलेन** सह वायुमापूर्य मण्डलद्वयमेकीकृतं ध्यात्वा चतुष्षष्टिवारं प्राणायामं कृत्वा परिकुम्भ्य एकीकृतवायुमण्डलात् सञ्जातेन वायुना देहं संशोषितं ध्यात्वा तद्वायुं पिङ्गलया मुञ्चेत् इति शोषणप्रकारः। एवमेव दाहने प्लावने च प्रतिपत्तिः। दाहनम्- पुनरग्निबीजेन षोडशवारं प्राणायामं विधाय पिङ्गलया वायुं विमुच्य पिङ्गलामुखे हृदयपद्मे च स्वस्तिकसहितं त्रिकोणं रक्तं अग्निमण्डलं तन्मध्ये रक्तं रं इति च ध्यात्वा द्वात्रिंशद्वारेण पिङ्गलया वायुमापूर्य मण्डलद्वयं संयोज्य चतुःषष्टिवारेण परिकुम्भ्य तन्मण्डलद्वयसंयोगात् सञ्जातेनाग्निना दग्धं देहं ध्यात्वा इडया वायुं विमुञ्चेत्। प्लावनम्- पुनः वं बीजेन पूर्ववदिडया वायुं विमुच्य इडामुखे द्वादशान्तपद्मे च पद्मसहितमर्धचन्द्रात्मकं सितमाप्यं मण्डलं तन्मध्ये शुभ्रं वं इति च ध्यात्वा द्वात्रिंशद्वारेण इडया वायुमापूर्य मण्डलद्वयमेकीकृतं ध्यात्वा चतुःषष्टिवारेण परिकुम्भ्य द्वादशान्तपद्माद्गलितैः परचैतन्यामृतजलैः प्रपञ्चैकीकृतं देहमाप्लावितं ध्यायेत् इति प्लावनम्।

**भूतसृष्टिः**- पृथिवीबीजेन बुद्बुदाभं ब्रह्माण्डं सङ्कल्प्य हं इति सुषरीकरणं कृत्वा सोऽहं इति द्वादशान्तपद्मात् जीवं स्वहृदये संयोज्य हौमिति पञ्चविंशतिसंख्यं सकृत्प्राणायामं कृत्वा हौं नमः इति द्वादशान्तादि ताल्वन्तं व्याप्य आत्मन आकाशं सृजेत्[1]। पुनः ह्यैमिति पञ्चविंशातिसंख्यं द्विवारं प्राणायामं कृत्वा ह्यैं नमः इति ताल्वादिकण्ठान्तं व्याप्य आकाशाद्वायुं सृजेत्। पुनः हूं नमः इति पञ्चविंशतिसंख्यं त्रिवारं प्राणायामं कृत्वा हूं नमः इति कण्ठादिहृदयान्तं व्याप्य वायोरग्निं सृजेत्। पुनः ह्वीमिति पञ्चविंशतिसंख्यं चतुर्वारं प्राणायामं कृत्वा ह्वींनमः इति हृदयादिनाभ्यन्तं व्याप्य अग्नेरपः सृजेत्। पुनः ह्लामिति पञ्चविंशतिसंख्यं पञ्चप्राणायामं कृत्वा ह्लां नमः इति नाभ्यादिपादान्तं व्याप्य अद्भ्यः पृथिवीं सृजेत्। पुनः षष्ट्युत्तरत्रिशतं प्रणवप्राणायामं कृत्वा संवत्सरोषितं सङ्कल्प्य फडन्तप्रणवेनाण्डभेदं कृत्वा तच्छकले द्यावापृथिव्यौ ध्यात्वा तदन्तर्वर्तिनं जीवं विराड्रूपं ध्यात्वा पुनः लिपिप्राणायामं विधाय पीठन्यासं कृत्वा स्वहृदये लिपिमावाह्य तत्रैव सकलीकृत्य मानसपूजां विधाय पुनः प्राणायामं[2] कृत्वा

---

1 येन क्रमेण संहारः कृतः, तद्विपरीतक्रमेण तत्तद्बीजेन भूतसृष्टिं कुर्यात्। 2 मूलस्य यथाश्रुतव्याख्यानसम्पादितमेतत् न तद्व्याख्यानुसारि। अत एवावगम्यते

लिप्या करन्यासं कृत्वा देहे व्याप्य लिपिन्यासं कृत्वा अङ्गं कृत्वा ऋषिच्छन्दोदेवताः न्यस्य यथाशक्ति लिपिं सञ्जप्य व्याप्य लयाङ्गं कृत्वा गणानांत्वेति गणपतिमन्त्रं दुर्गामन्त्रं च जप्त्वा पुनः मन्त्रोदयं कुर्यात्। पुनः ह ह ह इति प्रजप्य मूलाधारस्थजीवं परमात्मनि विलाप्य तन्मन्त्रात्मकं ध्यात्वा पुनः प्रणवसहितं स्वस्वमूलमन्त्रमुक्त्वा हृदयपद्मे सुयोज्य स्वस्वमूलमन्त्रेण पञ्चविंशतिसंख्यं पृथक् प्राणायामत्रयं कृत्वा क्रमेण परसूक्ष्मस्थूलात्मकं ध्यात्वा तस्य विग्रहरूपस्याधारार्थं पीठन्यासं कृत्वा स्वहृदये मूर्तिं सङ्कल्प्यावाह्य सकलीकृत्य मानसपूजां विधाय पूज्यपूजकयोरैक्यं सम्भाव्य स्वस्वमूलेन पञ्चविंशतिसंख्यं प्राणायामं विधाय तेजःकणं पिङ्गलया अञ्जलौ निपात्य पूजायामुक्तप्रकारेण करन्यासं कृत्वा पुनस्ताभ्यां हस्ताभ्यां देहे स्वस्वमूलमन्त्रेण त्रिवारं व्याप्य स्वस्वषडध्वन्यासं कुर्यात्।

**शिवे षडध्वानः**- ओं हौं नमः शिवाय शान्त्यतीतकलात्मने नमः। ह्यैं नमः शिवाय शान्तिकलात्मने नमः। ह्रूं नमः शिवाय विद्याकलात्मने नमः। ह्वीं नमः शिवाय प्रतिष्ठाकलात्मने नमः। ह्लां नमः शिवाय निवृत्तिकलात्मने नमः इति मूर्धास्यहृदयगुह्यपादेषु न्यसेत् इति शिवे कलाध्वा।

**तत्वन्यासः**- ओं हौं नमः शिवाय शिवात्मने नमः। ओं क्षं नमः शिवाय शक्त्यात्मने। ळं नमः शिवाय सदाशिवात्मने। हं नमः शिवाय ईश्वरात्मने। सं नमः शिवाय शुद्धविद्यात्मने। षं नमः शिवाय मायात्मने। शं नमः शिवाय कालात्मने। वं नमः शिवाय नियत्यात्मने। लं नमः शिवाय कलात्मने। रं नमः शिवाय विद्यात्मने (१०)। यं नमः शिवाय रागात्मने। मं नमः शिवाय पुरुषात्मने। ओं भां भीं भूं भं[1] नमः शिवाय गुणप्रकृत्यात्मने। बं नमः शिवाय बुध्यात्मने। फं नमः शिवायाहङ्कारात्मने। पं नमः शिवाय मन आत्मने। नं नमः शिवाय शब्दतन्मात्रात्मने। धं नमः शिवाय स्पर्शतन्मात्रात्मने। दं नमः शिवाय रूपतन्मात्रात्मने। थं नमः शिवाय रसतन्मात्रात्मने। तं नमः शिवाय गन्धतन्मात्रात्मने। णं नमः शिवाय श्रोत्रात्मने। ढं नमः शिवाय त्वगात्मने। डं नमः शिवाय चक्षुरात्मने। ठं नमः शिवाय जिह्वात्मने। टं नमः शिवाय घ्राणात्मने। ञं नमः शिवाय वागात्मने। झं नमः शिवाय पाण्यात्मने। जं नमः शिवाय पादात्मने। छं नमः शिवाय पाय्वात्मने। चं नमः शिवाय उपस्थात्मने। ङं नमः शिवायाकाशात्मने। घं नमः शिवाय वाय्वात्मने।

**दुर्बोधमूलस्यानुष्ठानसौकर्यार्थं अनुष्ठानपद्धतिराचरितेति।** 1 दीर्घत्रयपक्षे भं इत्यधिकमिति भाति,

गं नमः शिवाय तेज आत्मने। खं नमः शिवायाबात्मने। कं नमः शिवाय पृथिव्यात्मने। शं नमः शिवाय हृत्पुण्डरीकात्मने[1] हं नमः शिवाय सूर्यमण्डलाय द्वादशकलात्मने। सं नमः शिवाय सोममण्डलाय षोडशकलात्मने। रं नमः शिवाय वह्निमण्डलाय दशकलात्मने। हौं नमः शिवाय शान्त्यतीतात्मने। ह्यैं नमः शिवाय शान्त्यात्मने। ह्रूं नमः शिवाय विद्यात्मने। ह्वीं नमः शिवाय प्रतिष्ठात्मने। ह्लां नमः शिवाय निवृत्त्यात्मने इति शिवे षट्त्रिंशत्तत्वानि। तत्र प्रकृत्यन्तं व्यापयेत्। बुद्ध्यादित्रयं हृदये न्यसेत्। तन्मात्राःमूर्धादि पञ्चस्थानेषु न्यसेत्। श्रोत्रादीन् वागादींश्च स्वे स्वे स्थाने आकाशादीन् मूर्धादि पञ्चस्थानेषु हृत्पुण्टरीकादीन् हृदये पञ्चतत्वानि मूर्धादि पञ्चस्थानेषु न्यसेत् इति शिवे तत्वन्यासः।

**भुवनन्यासः**- अं नमः शिवाय भूर्लोकात्मने नमः इति पादाग्रादि कट्यन्तं व्यापयेत्। उं नमः शिवाय भुवर्लोकात्मने इति कट्यादि कण्ठान्तं व्यापयेत्। मं नमः शिवाय स्वर्लोकात्मने इति कण्ठादि मूर्धान्तं व्यापयेत् इति भुवनन्यासः।

**वर्णाध्वा**- मूलपुटितैर्लिप्यक्षरैः लिपिन्यासस्थानेषु वर्णन्यासः।

**पदाध्वा**-ओं ओं ओं ओं ओंहौं ओं आं ईं ऊं व्योमव्यापिने व्योमरूपाय सर्वव्यापिने शिवायानन्तायानाथायाश्रिताय ध्रुवाय शाश्वताय योगपीठसंस्थिताय नित्ययोगिने ध्यानाहाराय ओं नमः शिवाय सर्वप्रभवे शिवायेशानमूर्धाय तत्पुरुषवक्त्रायाघोरहृदयाय वामदेवगुह्याय सद्योजातमूर्तये ओं नमोगुह्यातिगुह्याय गोप्त्रे अनिधनाय सर्वविद्याधिपाय सर्वयोगाधिपतये ज्योतीरूपाय परमेश्वराय परमात्मन् अचेतनाचेतन व्योमिन् व्योमिन् व्यापिन् व्यापिन् अरूपिन्नरूपिन् प्रथम प्रथम तेजस्तेजो ज्योतिर्ज्योतिः अरूप अनग्ने अधूम अभस्म अनादे ना ना ना धू धू धू ओं भूः ओं भुवः ओं सुवः अनिधन निधन निधनोद्भव शिवशर्व महेश्वर महादेव सद्भावेश्वर महातेजः योगाधिपते मुञ्च मूञ्च प्रथम प्रथम शर्व शर्व भव भव भवोद्भव सर्वभूतसुखप्रद सर्वसान्निध्यकर ब्रह्मविष्णुरुद्रपर अनर्चितानर्चित असंस्कृतासंस्कृत पूर्वस्थित पूर्वस्थित साक्षिन् साक्षिन् तुरु तुरु पतङ्ग पतङ्ग पिङ्ग पिङ्ग ज्ञान ज्ञान शब्द शब्द सूक्ष्म सूक्ष्म शिव शर्व सर्वद ओं नमः शिवाय ओं ह्रीं नमः शिवाय ओं ह्रीं हौं नमः शिवाय ओं नमो नमः

---

**1 तत्वाध्वनि पञ्चकृत्या इत्याद्युक्तेः हृत्पूण्डरीकादीनामथोन्निवृत्तिरिति विवरणे। वर्णाध्वनि अङ्गऋष्यादीनामपि निवृत्तिरित्यप्याह। कलाध्वा तत्वाध्वा भुवनाध्वा वर्णाध्वा पदाध्वा मन्त्राध्वा- इति षडध्वानः अयं सृष्टिक्रमः।**

शिवाय ओं नमो नमः[1]। अस्य मन्त्रस्य पदैः-के प्राच्यादिदिशासु फालचिबुदृक्छ्रुन्नःकपोलास्यके कास्यात्मान्धु पदद्वयेषु करपत्सन्ध्यग्रशाखासु च । वामे कश्रवणांसपार्श्वकटिषु व्युत्क्रामतोऽन्यत्रदोष्यत्सूर्वोर्नसिके च (प) दोर्युजि पदैर्व्योमाणुजैर्विन्यसेत् इत्युक्तक्रमेण पदाध्वा।

**मन्त्राध्वा**-पञ्चब्रह्मभिः मन्त्रन्यासं कुर्यात्। तद्यथा-मूर्धास्यहृदयगुह्यपादेषु ऊर्ध्वप्राग्याम्यसौम्यपश्चिमेषु च पञ्चब्रह्माणि न्यस्य ओं ओं ओं ओं ओं सर्वज्ञाय हृदयाय नमः। अमृततेजोमालिनि तृप्तायै ब्रह्मशिरसे स्वाहा। ज्वलितशिखिशिखे

---

1 मूर्धनि- ओं ओं ओं ओं ओं हौं आं ईं ऊं नमः १। शिरसः प्राग्दिशि- ओं व्योमव्यापिने नमः २ । दक्षिणदिशि- ओं व्योमरूपाय नमः ३। पश्चिमदिशि ओं सर्वव्यापिने ४।। उत्तरदिशि- शिवाव ५। फाले- अनन्ताय ६। चिबुके- अनाथाय ७। दक्षिणचक्षुषि- अनाश्रिताय ८। वामचक्षुषि- ध्रुवाय ६। दक्षिणश्रवणे- शाश्वताय १०। वामश्रवणे- योगपीठसंस्थिताय ११। दक्षिणनासिकायां- नित्ययोगिने १२। वामनासिकायां- ध्यानाहाराय १३। दक्षिणकपोले- ओं नमः शिवाय १४। वामकपोले- सर्वप्रभवे १५। वक्त्रे- शिवाय १६। मूर्धनि- ईशानमूर्धाय १७। वक्त्रे- तत्पुरुषवक्त्राय १८। हृदये- अघोरहृदयाय १६।। गुह्ये- वामदेवगुह्याय २०। पादद्वये- सद्योजातमूर्तये २१। दक्षिणकरसन्ध्यग्रेषु- ओं नमो नमः २२। गुह्यातिगुह्याय २३। गोप्त्रे २४। अनिधनाय २५। सर्वविद्याधिपाय २६।। दक्षिणकराङ्गुलिषु- सर्वयोगाधिपतये २७। ज्योतीरूपाय २८। परमेश्वरपराय २६। परमात्मन् ३० १। अचेतनाचेतन ३१। वामकरसन्ध्यग्रेषु- व्योमिन् व्योमिन् ३२। व्यापिन् व्यापिन् ३३। अरूपिन् अरूपिन् ३४। प्रथम प्रथम ३५। तेजस्तेजः ३६। वामकराङ्गुलीषु- ज्योतिर्ज्योतिः ३७।। अरूप ३८। अनग्ने ३६। अधूम ४०। अभस्म ४१। दक्षिणपादसन्ध्यग्रेषु- अनादे ४२।। नाना ना ४३। धू धू धू ४४। ओं भूर्नमः ४५। ओं भुवर्नमः ४६। दक्षिणपादाङ्गुलिषु- ओं सुवर्नमः ४७। अनिधन ४८। निधन ४६। निधनोद्भव ५०। शिव ५१। वामपादसन्ध्यग्रेषु- शर्व ५२। महेश्वर ५३। महादेव ५४। सद्भावेश्वर ५५। महातेजः ५६। वामपादाङ्गुलिषु- योगाधिपते ५७। मुञ्च मुञ्च ५८। प्रथम प्रथम ५६। शर्व शर्व ६०। भव भव ६१। वामभागे क्रमेण शिरसि- भवोद्भव ६२। श्रवणे- सर्वभूतसुखप्रद ६३। अंसे- सर्वसान्निध्यकर ६४। पार्श्वे- ब्रह्मविष्णुरुद्रपर ६५। कट्यां- अनर्चितानर्चित ६६। दक्षिणभागे (व्युत्क्रमेण) कट्यां- असंस्कृतासंस्कृत ६७। पार्श्वे-पूर्वस्थित पूर्वस्थित ६८। अंसे साक्षिन् साक्षिन् ६६। श्रवणे- तुरु तुरु ७०। शिरसि- पतङ्ग पतङ्ग ७१। दक्षिणदोःषि-पिङ्ग पिङ्ग ७२। वामदोःषि- ज्ञान ज्ञान ७३। दक्षिणपादे- शब्द शब्द ७४। वामपादे -सूक्ष्म सूक्ष्म ७५। दक्षिणोरौ- शिव ७६। वामोरौ-शर्व ७७। नासिकायां सर्वद ७८। शिरसि- ओं नमः शिवाय ७८। दक्षिणहस्ते [पादे]- ओं ह्रीं (ओं) नमः शिवाय ८०। वामहस्ते [पादे] - ओं ह्रीं हौं (ओं) नमः शिवाय नमः ८१ इति न्यासक्रमः। अन्तिमपदत्रये - ओं नमो नमः, शिवाय , ओं नमो नमः इति विकल्पितः।

अनादिबोधनायै शिखायै वषट्। वज्रिणे वज्रधराय स्वाहा स्वतन्त्राय कवचाय हुं। सौं चौं हौं अलुप्तशक्तये नेत्रत्रयाय वौषट्। ओं श्लीं पशु हुं फट् अनन्तशक्तये अस्त्राय फट् इत्यङ्गानि न्यस्य; ईशानः सर्वविद्यानां शशिन्यै नमः। ईश्वरः सर्वभूतानां अङ्गदायै नमः। ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा हृदयायै नमः। शिवो मे अस्तु मरीच्यै नमः। सदाशिवों ज्वालिन्यै नमः इति तर्जनीसहिताङ्गुष्ठेन शिरसि पूर्वदक्षिणपश्चिमोत्तरोर्ध्वदिक्षु न्यसेत्। पुनः तत्पुरुषाय विद्महे निवृत्त्यै। महादेवाय धीमहि प्रतिष्ठायै। तन्नो रूद्रो विद्यायै। प्रचोदयात् शान्त्यै इत्यङ्गुष्ठ-सहिततर्जन्या पूर्वपश्चिमदक्षिणोत्तरदिक्षु न्यसेत् पुनःअघोरेभ्यस्तमस्यै। अथ घोरेभ्यो मोहायै। घोर क्षयायै। घोरतरेभ्यो निद्रायै। सर्वेभ्यः सर्व व्याध्यै। शर्वेभ्यो मृत्युरूपिण्यै। नमस्ते अस्तु क्षुधायै। रुद्ररूपेभ्यः तृषायै इत्यङ्गुष्ठसहितमध्यमया हृदयकण्ठांसद्वयनाभ्युदरपृष्ठहृदयेषु न्यसेत्। पुनः वामदेवाय नमो रजोरूपायै। ज्येष्ठाय नमो रक्षायै। श्रेष्ठाय नमो रुद्राय नमो रत्यै। कालाय नमः कामायै। कल क्षमायै। विकरणाय नमः संयमनिकायै। बल क्रियायै। विकरणाय नमः स्थिरायै।बलाय नमः सन्ध्यायै। बलप्रमथनाय नमः काळरात्र्यै। सर्वभूतदमनाय नमः भ्रामण्यै। मन मोहन्यै। उन्मनाय नमः श्रियै इत्यङ्गुष्ठसहितानामिकया गुह्याण्डोरुद्वयजानुद्वयजङ्घाद्वयस्फिग्द्वयसहितकटिपार्श्वद्वयेषु न्यसेत्। पुनः सद्योजातं प्रपद्यामि सिद्ध्यै। सद्योजाताय वै नमो नमः ऋद्ध्यै। भवे द्युत्यै। अभवे मेधायै। अनातिभवे कान्त्यै। भवस्वमां प्रज्ञायै। भव प्रभायै। उद्भवाय नमः सुधायै इत्यङ्गुष्ठसहितकनिष्ठिकया पादद्वयतले करद्वयतले नासिकायां मूर्ध्नि करद्वये च न्यसेत् इत्यष्टत्रिंशत्कलान्यासः। पुनः ओं नं ईशानाय मूर्ध्ने नमः इत्यादि मूत्रवक्त्राणि न्यस्य गोलकन्यासं कुर्यात्। तद्यथा- ओं नमः। नं नमः। मं नमः। शिं नमः। वां नमः। यं नमः इति मूलाक्षराणि हृदयमुखांसद्वयोरुद्वयेषु प्रथमावृत्तिः। पुनः कण्ठनाभिपार्श्वहृदयपृष्ठहृदयेषु द्वितीयावृत्तिः। पुनः मूर्धास्यनेत्रद्वयनासिकाद्वयेषु तृतीयावृत्तिः। करपादसन्ध्यग्रेषु प्रत्येकं आवृत्तयः। मूर्धास्यहृदयकुक्ष्यूरुपादेष्वष्टमावृत्तिः। हृदये मुखे च । मं पशवे। शिं हरिणाय। वां अभयाय। यं वरदाय इति नवमावृत्तिः। मुखांसहृदयपादोरूदरेषु दशमावृत्तिः। एतत् हस्तद्वयेन न्यसेत् इति मूलाक्षराणि न्यस्य पुनर्मूलमन्त्रेण ऊर्ध्वाधः गोलकवत् व्यापकं कृत्वा ललाटांसद्वयोदरहृदयेषु (पर्वमध्ये?) तत्पुरुषाघोरवामदेवसद्योजातेशानमन्त्रान् न्यसेत्। पुनरेतन्मन्त्रस्य

प्रतिपत्तये त्रिवारं स्थाणुमन्त्रं जपेत्। पुनः भस्मस्नानं कृत्वा वा मूत्रवक्त्राङ्गानि न्यस्य ऋषिदेवताछन्दो न्यस्य यथाशक्ति मूलमन्त्रं जपेत् इति शिवे षडध्वन्यासः।

**वैष्णवे षडध्वन्यासप्रकारः**- न्यासान्ते देहे मूलमन्त्रेण त्रिवारं व्याप्य ओं हौं नमः पराय शान्त्यतीतकलात्मने नादात्मने वासुदेवाय नमः। ओं ह्रौं नमः पराय शान्तिकलात्मने विन्द्वात्मने सङ्कर्षणाय। ओं ह्रूं नमः पराय विद्याकलात्मने मकारात्मने प्रद्युम्नाय। ओं ह्रीं नमः पराय प्रतिष्ठाकलात्मने उकारात्मने अनिरुद्धाय। ओं ह्लां नमः पराय निवृत्तिकलात्मने अकारात्मने नारायणाय नमः इति मूर्धादि पञ्चस्थानेषु न्यसेत् इति कलाध्वा।

**तत्वाध्वा**- मं नमः पराय जीवात्मने नमः।। भं नमः पराय प्राणात्मने। बं नमः पराय बुध्यात्मने। फं नमः पराय अहङ्कारात्मने। पं नमः पराय मन आत्मने। नं नमः पराय शव्दतन्मात्रात्मने। धं नमः पराय स्पर्शतन्मात्रात्मने। दं नमः पराय रूपतन्मात्रात्मने। थं नमः पराय रसतन्मात्रात्मने। तं नमः पराय गन्धतन्मात्रात्मने। णं नमः पराय श्रोत्रात्मने। ढं नमः पराय त्वगात्मने। डं नमः पराय चक्षुरात्मने। ठं नमः पराय जिह्वात्मने। टं नमः पराय घ्राणात्मने। ञं नमः पराय वागात्मने। झं नमः पराय पाण्यात्मने। जं नमः पराय पादात्मने। छं नमः पराय पाय्वात्मने। चं नमः पराय उपस्थात्मने। ङं नमः परायाकाशात्मने। घं नमःपराय वाय्वात्मने। गं नमः पराय तेज आत्मने। खं नमः पराय अवात्मने। गं नमः पराय पृथिव्यात्मने, शं नमः पराय हृत्पुण्डरीकात्मने। हं नमः पराय सूर्यमण्डलाय द्वादशकलात्मने। सं नमः पराय सोममण्डलाय षोडशकलात्मने। रं नमः पराय वह्निमण्डलाय दशकलात्मने। ओं षों नमः पराय परमेष्ठ्यात्मने वासुदेवाय नमः। यं नमः पराय पुरुषात्मने सङ्कर्षणाय। रं नमः पराय विश्वात्मने प्रद्युम्नाय। वं नमः पराय निवृत्त्यात्मने अनिरुद्धाय। लां नमः पराय सर्वात्मने नारायणाय। क्षौं नमः पराय कोपतत्वात्मने नृसिंहाय नमः इति[1] पञ्चविंशतितत्वानि। तत्र जीवप्राणौ सर्वाङ्गे बुद्ध्यादित्रयं हृदये न्यसेत्। शब्दादितन्मात्रापञ्चकं मूर्धादिपञ्चस्थानेषु न्यस्य श्रोत्रादिपञ्चकं वागादिपञ्चकं च स्वस्वस्थानेषु न्यसेत्। आकाशादिपञ्चभूतानि मूर्धादिपञ्चसु

---

1मूले कुहचित् इत्युक्तेः एतद्व्याख्यावसरे अजितादावित्युक्तेश्च वैष्णवागम समानागमवतामेव कोपतत्वमित्यवगम्यते तच्च सादृश्यं प्रायशः दुर्गाहरीशयोरेव दृश्यते। नारायणभट्ट शिष्यप्रणीत विवरणेऽपि कण्ठतः हरिहरे दुर्गायां च इत्युक्तेश्च

स्थानेषु न्यसेत्। हृत्पुण्डरीकादिचतुष्कं हृदये न्यसेत्। पञ्चतत्त्वानि पञ्चगु ुस्थानेषु न्यस्य कोपतत्वेन सर्वाङ्गे व्यापयेत् इति तत्त्वाध्वा। **भुवनाध्वा**- ओं अं[1] अतलाय नमः। अं वितलाय। अं सुतलाय। अं नितलाय। अं महातलाय। अं रसातलाय। अं पातालाय इति कट्यूरुजानुजङ्घागुल्फाङ्गुलिपादतलद्वयेषु न्यसेत्। पुनः ओं उं[2] भूर्लोकाय। उं स्वर्लोकाय। मं[3] महर्लोकाय। मं जनलोकाय। मं तपोलोकाय। मं सत्यलोकाय इति मूलाधारनाभिहृदयकण्ठमुख भ्रूमध्यमूर्धसु क्रमात् न्यसेत् इति भुवनाध्वा।

पुनः मूलपुटितैर्मातृकाक्षरैः लिपिन्यासस्थानेषु न्यसेत् इति वर्णाध्वा। पदाध्वा- ओं[4] ह्रीं जागृत्पदात्मने अनिरुद्धाय इति पादाग्रादि कट्यन्तं व्यापयेत्। हं सः स्वप्नपदात्मने प्रद्युम्नाय इति कट्यादिहृदयान्तं व्यापयेत्। सोऽहं सुषुप्तिपदात्मने सङ्कर्षणाय नमः इति हृदायादि कण्ठान्तं व्यापयेत्। स्वाहा तुरीयपदात्मने वासुदेवाय नमः इति कण्ठादिमूर्धान्तं व्यापयेत् इति संहारन्यासः। सृष्टौ तुरीयपदादि, मूर्धादि, न्यसेत् इति पदाध्वा।

**मन्त्राध्वा**-पुरुषसूक्तस्य षोडशर्ग्भिर्वामाङ्गाद्यं करचरणजानूरुयुग्म-नाभिहृदयकण्ठांसद्वयमुखनेत्रमूर्धसु क्रमात् न्यसेत् अयं संहारन्यासः। मूर्धादि-वामकरतलान्तं सृष्टिन्यासः नाभ्यादि हृदयान्तं स्थितिन्यासः[5] इति मन्त्राध्वा।

**मूलाङ्गन्यासः**- प्रणवपुटितमूलाक्षराणि मूर्धाद्यष्टस्थानेषु न्यसेत्। तद्यथा- मूर्ध्नि मध्यमया, नेत्रद्वये तर्जनीमध्यमाभ्यां, मुखे अङ्गुष्ठोपकनिष्ठिकाभ्यां, हृदये अङ्गुष्ठतर्जनीभ्यां, नाभौ अङ्गुष्ठकनिष्ठिकाभ्यां, लिङ्गे अङ्गुष्ठेन कनिष्ठिकया वा, जानुद्वये अङ्गुष्ठसहिताभिः कनिष्ठिकासहिताभिर्वा चतसृभिरङ्गुलीभिः, पादद्वये सर्वाभिर्न्यसेत्। पुनः दशाङ्गन्यासं कुर्यात् तद्यथा प्रणवपुटितमूलाक्षराणि[6] आधारे हृद्वदनदोःपादमूलद्वयेषु नाभौ न्यसेत्। तत्प्रथमावृत्तिः। कण्ठे स्तनाभिहृदयस्तनद्वयपार्श्वद्वयपृष्ठेषु द्वितीयावृत्तिः। मूर्धास्यनेत्रद्वयश्रोत्रद्वयनासिकाद्वयेषु तृतीयावृत्तिः। दोःपत्सन्ध्यङ्गुलीषु[7] पृथक् चतस्रः आवृत्तयः। ओं त्वगात्मने नमः[8]।

---

**विष्णुदुर्गाशङ्करनारायणेष्वेव कोपतत्वं,सम्प्रदायोऽप्येवमेव। 1 अकारयोजनमावश्यकम्? 2 उकार योजने; 3 मकार योजने च प्रमाणं चिन्त्यम्। 4 ओं ह्रीं हंसः सोऽहं स्वाहा इत्यात्माष्टाक्षरस्य विनियोगः कृतः। 5 अत्र सर्वत्र सहस्रशीर्षेत्यादि क्रमेणैव न्यासः ऋग्विधानानुसारादिति विमर्शिनी। संहारे यज्ञेन यज्ञमित्यादि क्रम इति विवरणे। 6 नत्यन्ता नीत्यर्थः 7 सन्धित्रयं अङ्गुलिपञ्चकमित्यर्थः। 8 सर्वत्र मूलाक्षरेषु प्रणवपुटितत्वमावश्यकम्।**

ओं नं असृगात्मने नमः। मों मांसात्मने नमः। नां मेद आत्मने। गं अस्थ्यात्मने। यं मज्ज्ञात्मने। णां शुक्लात्मने इति तत्तत्स्थानेषु, यं प्राणात्मने नमः इति हृदये च न्यसेत् इत्यष्टमावृत्तिः। मूर्धेक्षणास्यहृदयोदरसोरुजङ् घापादद्वयेषु नवमावृत्तिः। गण्डांसकोरुचरणेषु हस्तद्वयेन चतुरक्षराणि न्यस्य रां चक्राय। यं शङ्खाय। णां गदायै। यं पद्माय इति मुद्राभिः सह स्वे स्वे स्थाने न्यसेत् इति दशमावृत्तिः इति दशाङ्गन्यासं कृत्वा द्वादशमन्त्रन्यासं बीजाक्षरैः सह कुर्यात्। तद्यथा- ओं केशवाय। नं नारायणाय। मों माधवाय। भं गोविन्दाय। गं विष्णवे। वं मधुसूदनाय। तें त्रिविक्रमाय। वां वामनाय। सुं श्रीधराय। दें हृषीकेशाय। वां पद्मनाभाय। यं दामोदराय इति मन्त्रान् ललाटकुक्षिहृदयकण्ठेषु पुनः दक्षिणपार्श्वांसकण्ठेषु वामपार्श्वांसकण्ठेषु पृष्ठे पश्चाद्गलेषु च न्यसेत्। पुनः द्वादशाक्षरं मूर्ध्नि न्यसेत्। धयानस्य स्थिरीकरणाय किरिटं जपेत्। किरीटमन्त्रः- किरीटकेयूरहारमकरकुण्डलालङ्कृत[1] चाक्र शाङ्खगदाब्जाहस्तपीताम्बारधारश्रीवात्साङ्कित - वक्षस्थलश्रीभूमिसहितस्वात्मऽज्योतिर्ज्योति[2]र्दीप्तिकराय सहस्रादित्य तेजसे नमःइति किरीटमन्त्रं जप्त्वा पुनः मूलाक्षराङ्गानि न्यस्य ऋषिच्छन्दोदेवता न्यस्य यथाशक्ति मूलमन्त्रं जपेत् इति वैष्णवषडध्वन्यासप्रकारः।

**दुर्गाषडध्वन्यासः**- करन्यासान्ते मूलेन देहे त्रिवारं व्याप्य ओं ह्रौं नमः पराय शान्त्यतीतकलात्मने नमः। ह्रैं नमः पराय शान्तिकलात्मने। ह्रूं नमः पराय विद्याकलात्मने। ह्रीं नमः पराय प्रतिष्ठाकलात्मने। ह्रां नमः पराय निवृत्तिकलात्मने इति दुर्गायां कलाध्वा। पञ्चविंशतितत्वैः तत्वाध्वा[3]। . अं नमः पराय भूर्लोकात्मने ।उं नमः पराय भुवर्लोकात्मने। मं नमः पराय स्वर्लोकात्मने इति पादाग्रादिकट्यन्तं, कट्यादिकण्ठान्तं, कण्ठादिमूर्धान्तं व्यापकत्वेन न्यसेत् इति त्रिभुवनपक्षः। तथैव विष्णूक्तचतुर्दशभुवनपक्षश्च इति भुवनाध्वा। मूलपुटितमातृकया लिपिन्यासस्थानेषु वर्णाध्वा।

**पदाध्वा**- जातवेदसे नमः। सुनवाम नमः। सोमं नमः। अरातीयतो नमः। नि नमः। दहाति नमः। वेदो नमः। सः नमः। नो नमः। पर्षन्नमः। अति नमः। दुर्गाणि नमः। विश्वा नमः। नावेव नमः। सिन्धुं नमः। दुरिता

---

**ओं ओं ओं नमः, ओं नं ओं नमः इत्यादि। 1 अलङ्कृतेति विमर्शिनीपाठः, मूले लक्षणसंहितायां च न दृश्यते। कुण्डलइत्येवास्ति। 2 ज्योतिर्द्वयेति मूले, एकमेव ज्योतिःपदं लक्षणसंहितायाम्। 3 वैष्णवैरित्यर्थः। हृत्पुण्डरीकादीनामन्ते स्वीयपञ्चतत्वानि योज्यानि।**

नमः। अति नमः। अग्निर्नमः इति पदानि मूर्ध्नि ललाटे नेत्रयोः कर्णयोः आष्ठे जिह्वायां गले कक्षे हृदये उदरे कटितटे लिङ्गे ऊरौ जानुनि जङ्घायां पादे च न्यसेत् इति पदाध्वा।

**मन्त्राध्वा**- जातवेदसे इत्यादि पञ्चदुर्गामन्त्रैः मूर्धादि पञ्चस्थानेषु न्यसेत्। पुनः कात्यायिन्यै नमः। विद्महे नमः। कन्याकुमार्यै नमः। धीमहे नमः। तं नमः। नो नमः। दुर्गा नमः। प्रचोदयान्नमः इत्यष्टपदानि मूर्धललाटास्यगलनाभ्यूरुजानुपादेषु न्यसेत्। पुनः सें दुर्गायै इत्यदि पञ्चमन्त्रैः मूर्धादि पञ्चस्थानेषु न्यसेत्। पुनः मूलाक्षराङ्गानि न्यस्य ऋष्यादीन् न्यस्य यथाशक्ति मूलमन्त्रं जपेत् इति दुर्गायां षडध्वन्यासप्रकारः।

**शङ्करनारायणे षडध्वन्यासप्रकारः**- हौं नमः पराय शान्त्यतीतकलात्मने नमः इत्यादि कलाध्वा। पञ्चविंशतितत्वैः तत्वाध्वा। त्रिभिश्चतुर्दशभिर्वा भुवनैर्भुवनाध्वा। मूलपुटितमातृकया वर्णाध्वा। पदाध्वा- शङ्कराय नमः। विद्महे नमः। नारायणाय नमः। धीमहे नमः। तं नमः। नो नमः। पुरुषो नमः। प्रचोदयात् नमः इत्यष्टपदानि पूर्ववत् मूर्धाद्यष्टस्थानेषु स्यसेत् इति पदाध्वा। मन्त्राध्वा- पञ्चब्रह्माणि तदङ्गानि अष्टत्रिंशत्कलाश्च न्यस्य ओं नमो भगवते वासुदेवाय नमः। ओं नमो भगवते सङ्कर्षणाय नमः। ओं नमो भगवते प्रद्युम्नाय नमः। ओं नमो भगवते अनिरुद्धाय नमः। ओं नमो भगवते नारायणाय नमः इति मूर्धादिस्थानेषु न्यस्य पुनरपि गायत्र्या[1] पादादिमूलाधारहृदयभ्रूमध्येषु मूर्ध्नि वाऽथवा वासुदेवाय नमः इत्यादि पञ्चस्थानेषु न्यसेत् इति मन्त्राध्वा। पुनः मूलाक्षराङ्गानि न्यस्य ऋष्यादींश्च न्यस्य यथाशक्ति मूलमन्त्रं जपेत् इति शङ्करनारायणे षडध्वन्यासप्रकारः।

**सुब्रह्मण्ये षडध्वन्यासविधिः**- ओं हौं नमः पराय शान्त्यतीतकलात्मने नमः इत्यादि कलाध्वा। पञ्चविंशतितत्वैः तत्वाध्वा[2], वां भूर्लोकात्मने। वीं भुवर्लोकात्मने। वूं स्वर्लोकात्मने इति त्रिभिर्भुवनाध्वा। मूलपुटितमातृकया वर्णाध्वा।

**पदाध्वा**- शक्तिहस्ताय नमः। विद्महे। षडाननाय। धीमहे। तं। नो। स्कन्दो। प्रचोदयात् नमः इत्यष्टपदानि मूर्धाद्यष्टस्थानेषु न्यसेत् इति पदाध्वा। नमर्वन्नमिति ऋक्पञ्चकं मूर्धादिस्थानेषु न्यसेत्। गायत्रीं षण्मत्रांश्च न्यसेत् इति मन्त्राध्वा। पुनः मूलाक्षराङ्गानि न्यस्य ऋष्यादीन् न्यस्य मूलमन्त्रं

---

**1 एतदाद्यधिकमस्पष्टं च। 2 पञ्चतत्ववचनावसरे उक्तक्षेत्रज्ञतत्वसहितपञ्चतत्वानि योज्यानि।**

यथाशक्ति जपेत् इति गुहे षडध्वन्यासप्रकारः।

**शास्तरि षडध्वन्यासप्रकारः**- ह्रौं नमः इत्यादि कलाध्वा। जीवादिपञ्चविंशतितत्वैः तत्वाध्वा। घ्रां भूर्लोकात्मने। घ्रीं भुवर्लोकात्मने। घ्रूं स्वर्लोकात्मने इति त्रिभिर्भुवनैर्भुवानाध्वा। मूलपुटितमातृकया वर्णाध्वा। भूताधिपाय नमः। विद्महे। भवपुत्राय। धीमहे। तं। नो। शास्ता। प्रचोदयान्नमः इत्यष्टपदैः पदाध्वा। यात ऊतिरित्यादि ऋक्पञ्चकं मूर्धादिपञ्चस्थानेषु न्यसेत्। गायत्रीं षण्मन्त्रांश्च न्यसेत् इति मन्त्राध्वा। पुनः मूलाक्षराङ्गानि न्यस्य ऋष्यादीन् न्यसेत्। पुनः यथाशाक्ति मूलमन्त्रं जपेत् इति शास्तरि षडध्वन्यासप्रकारः।

**गणपतौ षडध्वन्यासप्रकारः**- ओं ह्रौं नमः पराय शान्त्यतीतकलात्मने नमः इत्यादिभिः कलाध्वा। ओं मं नमः पराय जीवात्मने नमः इत्यादि पञ्चविंशतितत्वैः तत्वाध्वा। गां भूर्लोकात्मने। गीं भुवर्लोकात्मने। गूं स्वर्लोकात्मने नमः इति त्रिभिर्भुवनैर्भुवनाध्वा। मूलपुटितमातृकया वर्णाध्वा। गणानां नमः। त्वा। गणपतिं। हवामहे। कविं। कवीनां। उपमश्रवस्तमम्। ज्येष्ठराजं। ब्रह्मणां। ब्रह्मणो। पते। आ। नो। शृण्वन्। उतिभिः। सीद। सादनं नमः इति पदैः मूर्धललाटपुष्करेषु श्रोत्रयोर्मुखे कण्ठे अंसयोर्हृदये नाभौ गुह्ये जानुनोः पादयोः पृष्ठे पश्चाद्गले च न्यसेत्। पुनः समस्तेन व्यापयेत्। पञ्चस्थानेषु न्यसेद्वा। विनायकाय नमः। विद्महे। गजाननाय। धीमहे। तं। नो। विघ्नो। प्रचोदयान्नमः इत्यष्टपदानि मूर्धललाटास्यकण्ठनाभ्यूरुद्वयजानुद्वयपादद्वयेषु न्यसेत्। एकदन्ताय। द्विर्दन्ताय[1]। चतुर्दन्ताय। वज्रतुण्डाय। हेरम्बाय नमः इति मूर्धादिपञ्चस्थानेषु न्यसेत्। पुनः श्रीं एकदन्ताय[2]। ह्रीं द्विर्दन्ताय। क्लीं चतुर्दन्ताय। ग्लौं वज्रतुण्डाय। गं हेरम्बाय इति। पुनः ओं श्रीं ह्रीं क्लीं ग्लौं गं एकदन्ताय। ओं श्रीं ह्रीं क्लीं ग्लौं गं द्विर्दन्ताय। ओं श्रीं ह्रीं क्लीं ग्लौं गं चतुर्दन्ताय। ओं श्रीं ह्रीं क्लीं ग्लौं गं वज्रतुण्डाय। ओं श्रीं ह्रीं क्लीं ग्लौं गं हेरम्बाय इति। पुनः ओं श्रीं ह्रीं क्लीं ग्लौं गं एकदन्तगणपतये वरवरद सर्वजनं मे वशमानय स्वाहा। ओं . . . . गं द्विर्दन्तगणपतये वरवरद . . . मानय स्वाहा। ओं . . . . गं चतुर्दन्तगणपतये वरवरद् . . . . मानय स्वाहा। ओं . . . . गं वज्रतुण्डगणपतये वर वर . . . . मानय स्वाहा। ओं . . . . गं

---

**1 अत्र रेफ अनावश्यक इति भाति। एवमुत्तरत्रापि। 2 अत्र पक्षद्वये एकपक्षः स्वीकर्तव्यत्वेनोक्तो व्याख्याने; परन्त्वत्र सर्वे पक्षा उक्ताः कथं सङ्गच्छन्ते।**

हेरम्बगणपतये वर वरद . . . . स्वाहा इति च मूर्धादिपञ्चस्थानेषु न्यसेत्। पुनः षण्मन्त्रान् न्यस्य अङ्गानि कृत्वा ऋष्यादीन् न्यस्य यथाशक्ति मूलमन्त्रं जपेत् इति गणपतिषडङ्गन्यासप्रकारः[1]। पुनः सर्वत्र लयाङ्गादिकं विधाय शङ्खपूरणं कुर्यात्।

**शङ्खपूरणम्** - अग्रतः गोमयजलेन मण्डलं चतुरस्रं कृत्वा प्रणवेन तत्र गन्धपुष्पाक्षतान्न्यस्य स्वस्वास्त्रेण शङ्खपादमपि प्रक्षाल्य वह्निमण्डलेन शङ्खपादं सूर्यमण्डलेन शङ्खं च न्यस्य हृदयमन्त्रेण शङ्खे गन्धपुष्पाक्षतान् न्यस्य लिपिप्रतिलोमं[2] शिरोमन्त्रं चोक्त्वा शुद्धजलैः शङ्खमापूर्य गन्धपुष्पं निक्षिप्य वह्निमण्डलेन शङ्खपादं, सूर्यमण्डलेन शङ्खं सोममण्डलेन जलं च सम्पूज्य शिखामन्त्रेण गालिनीमुद्रया जलस्योत्पवनं कृत्वा आलोड्यापूर्य गरुडमुद्रया निर्विषीकृत्य[3] सुरभिमुद्रया अमृतीकृत्य नेत्रमन्त्रेण जलं निरीक्ष्य कवचमन्त्रेण हस्ताभ्यां आच्छाद्यास्त्रमन्त्रेण संरक्ष्य गङ्गे च इत्यदिना तीर्थमावाह्य[4] किञ्चित्पीठं सम्पूज्य मूर्तिं सङ्कल्प्य मूलेन स्वहृदयाद्देवमावाह्य सकलीकृत्य सम्पूज्य नैवेद्यमुद्रां प्रदर्श्य पुनरपि किञ्चित्सम्पूज्य व्याप्य लयाङ्गं कृत्वा अष्टवारं मूलमन्त्रं प्रजप्य आप्लाव्य वर्धन्यां प्रतिषिच्य शिष्टजलेन प्रणवेन पूजाद्रव्याणि आत्मानं च त्रिः प्रोक्षेदिति शङ्खपूरणप्रकारः। **पुनः स्वशरीरे**- पीठं सम्पूज्य हृदये प्रणवेन सम्पूज्य प्रणवाक्षरैर्मूलाधारहृदयद्वादशान्तस्थिततेजांसि सम्पूज्य प्रणवेन तानि हृदयपद्मे नियोज्य मूलेन प्राणायामं कृत्वा व्याप्य लयाङ्गं कृत्वा आसनमिदं स्वागतमिदं इत्याद्युपहारान् दत्वा प्रणवादिविग्रहपूजामन्त्रैः[5]जलगन्धाभ्यां सम्पूज्य मूलमन्त्रेण शरीरे अष्टगन्धेन विलिप्य पुनः विष्णौ पूर्वोक्तैः केशवादिद्वादशमन्त्रैः ललाटोदरादिद्वादशस्थानेषु ऊर्ध्वपुण्ड्रं विलिप्य किरीटमन्त्रेण मूर्ध्नि पञ्चवारं पुष्पाञ्जलिं विधाय अं[6] तुलसीद्वयं कल्पयामीति पादाग्रादि नाभ्यन्तं सङ्कल्प्य पुष्पाञ्जलिं कुर्यात्। पुनः उं करवीरद्वयं कल्पयामीति नाभ्यादिहृदयान्तं सङ्कल्प्य पुष्पाञ्जलिं कुर्यात्। पुनः मं पद्मद्वयं कल्पयामीति हृदयादि भ्रूमध्यान्तं सङ्कल्प्य पुष्पाञ्जलिं कुर्यात्। ओं पट्कुसुमानि कल्पयामीति शिरसि। ओं शेषकुसुमानि कल्पयामीति सर्वाङ्गे च पुष्पाञ्जलिं कुर्यात्। तथा शङ्करनारायणे दुर्गायां सुब्रह्मण्ये गणपतौ शास्तरि च मूलमन्त्रेण ललाटकण्ठांसद्वयहृदयेषु अष्टगन्धेन विलिप्य[7]

---

1अयं सृष्टिक्रमः- मन्त्रपदवर्णभुवनतत्वकलाध्वक्रमात् संहारः। 2 क्षकारादि। 3 क्षौइति गरुडबीजन। 4 रवेर्मण्डलात्। 5 तारोपचारनिजमूलतदक्षरन्यासादिभिः। 6 अकारादियोजनं किं मूलकम? 7 तिर्यक् पुण्ड्राणि।

मूलेन मूर्ध्नि पञ्चवारं पुष्पाञ्जलिं कृत्वा पूर्वोक्ततुलस्यादि पुष्पाञ्जलिं कुर्यात्। शिवे तु पञ्चब्रह्मभिः ललाटादिपञ्चस्थानेषु अष्टगन्धेन विलिप्य[1] स्थाणुमन्त्रेण मूर्ध्नि पञ्चवारं पुष्पाञ्जलिं विधाय अं अर्कद्वयं कल्पयामीति पादाग्रादिनाभ्यन्तं पुष्पाञ्जलिं विधाय करवीरादि सर्वं पूर्ववत्कुर्यात्। पुनः सर्वेषु धूपमुद्रां दीपमुद्रांच प्रदर्श्य नैवेद्यकालेऽर्घ्यं दत्वा प्रसन्नपूजां विधाय पूजां समाप्य व्याप्य लयाङ्गं कृत्वा पूजां समापयेत् इत्यात्मपूजाप्रकारः।पुनः तत्स्थलात् निर्माल्यपुष्पादिकं त्यक्त्वा तत्र विलिप्य शङ्खादिकं प्रक्षाल्य तत्र न्यसेत्। पुनरर्घ्यादिकं सादयेद्वा।

**कलशसादनम्**- अथ गुरून् गणपतिं सम्पूज्य गुरवेऽर्घ्यं दत्वा गणपतये निवेद्य दीपं पुष्पेणाराध्य पुनराधारशक्त्यादिपीठपूजां विधाय विष्णौ श्रींवीजेनान्येषु भुवनेश्वर्या आवाह्य सकलीकृत्य उपहारान् दत्वा सम्पूज्याऽर्घ्यं दत्वा पुष्पाञ्जलिं कृत्वा पद्ममुद्रां[2] प्रदर्शयेत्। पुनः कुम्भं सङ्गृह्य स्वस्वास्त्रेण संक्षाल्य कवचमन्त्रेण त्रिगुणीकृतसूत्रेण वेष्टयित्वा मूलमन्त्रेणाष्टगन्धेन लेपयित्वा प्रणवेन धूपयित्वा मूलेन पीठे अधोमुखं न्यसेत्। शोषणदाहनप्लावनकाठिन्यसुषरीकरणानि कृत्वा पञ्चतत्वेषु प्रथमेन दर्भविन्यासं द्वितीयेनाष्टगन्धप्रोक्षणं तृतीयेनाक्षतविकिरणं च विधाय मूलेन कुम्भं सम्पूज्य चतुर्थेनोत्तानीकृत्य उद्धृत्य पञ्चमेन मूलावसानं पीठे न्यसेत्। शिवे एवं पञ्चब्रह्मभिर्वा कुर्यात्। पुनः प्रणवेन घटमुखं प्रोक्ष्य कुम्भस्य मूले दश वह्निकलाः न्यस्य ऋचा समष्ट्या व्यापयेत्। पुनः कुम्भस्य मध्यभागे द्वादशदलं पद्मं सङ्कल्प्य प्रागादिदलेषु सूर्यकलाः न्यस्य तदृचा समष्ट्या च व्याप्य पुनः कुम्भस्य मुखे षोडशदलं पद्मं सङ्कल्प्य प्रागादिदलेषु षोडश सोमकलाः न्यस्य तदृचा समष्ट्या च व्यापयेत्। तत्सर्वं जलगन्धादिभिः सम्पूज्य पुनः पुष्पाक्षतैः सम्पूजयेत्। ओं ह्रीं हंसः इति मन्त्रेण कुम्भावाहनं कृत्वा ह्रामाद्यङ्गैः[3] सकलीकृत्य कुम्भस्य मुखे पूर्वादि चतुर्दिक्षु मध्ये च बिन्दुकला न्यस्य तन्मन्त्रेण सम्पूज्य अग्निजननावसाने गायत्र्या आज्यं हुत्वा तत्सम्पातं कुम्भे समर्प्य कुम्भमुद्रां प्रदर्श्य कुम्भं जगदण्डं ध्यात्वा पुनः पञ्चविंशतिदर्भैः[4]

---

1 तिर्यक् पुण्ड्राणि। 2 कराभ्यामञ्जलिं कुर्यात् विश्लिष्टसकलाङ्गुलिम्। कर्णिकाङ्गुष्ठयुक्श्लिष्टा पद्ममुद्रेयमीरिता। 3 विष्णौ श्रामित्यादिभिः। 4 शिवे षट्त्रिंशद्दर्भैरिति केचन। वस्तुतस्तु अत्र शिवादावपि पञ्चविंशतिदर्भैरेव कूर्चमिति भाति विशेषानुक्तेः सम्प्रदायाच्च। तत्वपदमपि शास्त्रान्तरे पञ्चविंशतिसंख्यायामेव प्रसिद्धम्। एतेन शिवे षट्त्रिंशद्दर्भैः कूर्चमिति परास्तम्। अत एव विवरणेऽपि स्पष्टतया पञ्चविंशतिपदमेवोपात्तम्। " पञ्चविंशतिभिदर्भैर्ग्रथितं कूर्चमुत्तमम्। मध्यं षोडशभिर्युवतमष्टभिश्चाधमं भवेत्। चतुर्भिश्च त्रिभिर्द्वाभ्यां ग्रथितं क्वचिदिष्यते"

कूर्चं बध्वा तस्य[1]शोषणदाहनप्लावनानि कृत्वा अष्टगन्धं विलिप्याष्टवारं प्रणवं प्रजप्य कूर्चं[2] कुम्भे न्यस्य प्रणवेन सम्पूज्य तत्तद्ब्रह्मकलशस्य तत्र तत्रोक्तं द्रव्यं नवरत्नस्वर्णसहितं आत्माष्टाक्षरं[3] तत्तत्पूरणमन्त्रं चोक्त्वा कुम्भे न्यस्य सम्पूज्य मानसपूरणं कुर्यात्। करे अमृतबीजं लिखित्वा तेन करेण कुम्भमुखमाच्छाद्य प्रणवेन कूर्चमूलस्थितं चैतन्यं द्वादशान्त पद्मस्थितपरमात्मनि विलाप्य पुनः प्रणवं लिपिप्रतिलोमं शिरोमन्त्रं चोक्त्वा द्वादशान्तपद्मस्थितपरमात्मनःपरचैतन्यरूपं अमृतजलं कुम्भे पातयेत् इति मानसपूरणप्रकारः।

पुनः यत्किञ्चित्पत्रेण कुम्भमुखमाच्छाद्य पुनरन्यस्मिन्पात्रे गालितजलं उत्तरभागे न्यस्य जलस्य शोषणदाहनप्लावनानि कृत्वा पीठं सम्पूज्य तत्र वरुणमावाह्य सम्पूज्य पुनः मूलेनावाह्य सकलीकृत्य सम्पूज्य नैवेद्यकाले अर्घ्यं दत्वा पुष्पाञ्जलिं कृत्वा निष्कलीकृत्य पञ्चवारुणादिकं प्रजप्य[4] रक्षेत्। तज्जलं शङ्खे आदायाष्टगन्धं विलोड्य पद्मं मूर्तिं च सङ्कल्प्य मूलेन स्वहृदयादावाह्य किञ्चित्सम्पूज्य तज्जलं कुम्भे निषिच्य शेषजलैः कुम्भमर्धोत्तरं परिपूर्य लिपिपङ्कजं पूजयेत्।

**लिपिपङ्कजं** - शिवे लिपिकलाः- ओं क्षं नमः शिवाय मूर्त्यात्मने नमः। ओं ळं नमः शिवाय शिफात्मने। हं. . . .नाळात्मने। सं. . . .सर आत्मने। षं. . . .कण्टकात्मने। शं. . . .रन्ध्रात्मने। वं. . . .धर्मायाग्नेयग्रन्थ्यात्मने। लं. . . .ज्ञानाय नैर्ऋत्यग्रन्थ्यात्मने। रं. . . .वैराग्याय वायव्यग्रन्थ्यात्मने। यं. . . .ऐश्वर्यायैशग्रन्थ्यात्मने। ॠं. . . .अधर्माय पूर्वग्रन्थ्यात्मने। ऋं. . . .अज्ञानाय दक्षिणग्रन्थ्यात्मने। ॡं. . . .अवैराग्याय पश्चिमग्रन्थ्यात्मने। लृं. . . .अनैश्वर्यायोत्तरग्रन्थ्यात्मने। कं खं गं . . . .पूर्व पत्रात्मने। घं ङं चं . . . .आग्नेयपत्रात्मने। छं जं झं. . . .याम्यपत्रात्मने। ञं टं ठं. . . .नैर्ऋत्यपत्रात्मने। डं ढं णं. . . .वारुणपत्रात्मने। तं थं

---

वचचिदिष्यते" इति। तथा " ग्रन्थिरङ्गुलविस्तारः कुण्डलप्रतिकुण्डलः। चतुरङ्गुलमग्रं स्यात् द्विसप्ताङ्गुलनालकम्।। " द्वयावृत्ताः सप्तेत्यर्थः। तथा च उत्तमकूर्चे चतुर्दशाङ्गुलं नालं, मध्यमे द्वादशाङ्गुलं, अधमे दशाङ्गुलमित्यर्थः। लक्षणसंहितायां शिवेऽपिपञ्चविंशतिभिर्दर्भैः ग्रथितं कूर्चमुत्तमम् इति स्पष्टमुक्तम्। तथा उत्कूर्चं पौष्टिके प्रोक्तमधः कूर्चं तु शान्तिके। 1 यं रं वं इति बीजैरित्यर्थः। 2 कूर्चमूलेरत्नखचितं सुवर्णाङ्गुलीयकं न्यस्य। 3 ओं ह्रीं हंसः सोऽहं स्वाहा इति। 4 इमा आपः शिवाः सन्तु शुभाः शुद्धाश्च निर्मलाः। पावनाः शीतलाश्चैव पूताः सूर्यस्य रश्मिभिः इति च।

दं. . . . वायव्यपत्रात्मने। धं नं पं. . . . सौम्यपत्रात्मने। फं वं भं. . . . ऐशपत्रात्मने। मं. . . . कर्णिकात्मने। अः आं. . . . पूर्व केसरात्मने। इः ई. . . . आग्नेयकेसरात्मने। उः ऊं. . . . याम्यकेसरात्मने। ऋः ॠं. . . . नैॠत्यकेसरात्मने। लृः लॄं. . . . वारुणकेसरात्मने। एः ऐं. . . . वायव्यकेसरात्मने। ओः औं. . . . सौम्यकेसरात्मने। अः अं. . . . ऐशकेसरात्मने। अं नमः शिवायात्मतत्वात्मने। उं. . . . विद्यातत्वात्मने। मं. . . . शिवतत्वात्मने। सं. . . . विन्द्वात्मने। हं. . . . नादात्मने। ह्रीं. . . . शक्त्यात्मने। ओं. . . . शान्तात्मने इति शिवे लिपिपङ्कजम्।

**अन्येषु देवेषु लिपिपङ्कजम्**- ओं क्षं नमः पराय मूर्त्यात्मने। ओं ळं नमः पराय शिफात्मने। हं. . . . नाळात्मने। सं. . . . सर आत्मने। षं. . . . कण्टकात्मने। शं. . . . रत्नात्मने। वं. . . . धर्माय आग्नेयग्रन्थ्यात्मने। लं. . . . ज्ञानाय नैॠत्यग्रन्थ्यात्मने। रं. . . . वैराग्याय वायव्यग्रन्थ्यात्मने। यं. . . . ऐश्वर्यायैशग्रन्थ्यात्मने। ॠं. . . . अधर्माय पूर्वग्रन्थ्यात्मने। ॠं. . . . अज्ञानाय दक्षिणग्रन्थ्यात्मने। लृं. . . . अवैराग्याय वारुणग्रन्थ्यात्मने। लॄं. . . . अनैश्वर्याय सौम्यग्रन्थ्यात्मने। कं खं, गं . . . . पूर्वपत्रात्मने। घं ङं चं. . . . आग्नेयपत्रात्मने। छं जं झं. . . . याम्यपत्रात्मने। ञं टं ठं. . . **नैॠत्य**पत्रात्मने। डं ढं णं . . . . वारुणपत्रात्मने। तं थं दं. . . . वायव्यपत्रात्मने। धं नं पं. . . . सौम्यपत्रात्मने। फं वं भं. . . . ऐशपत्रात्मने। मं. . . . कर्णिकात्मने। अः आं. . . . पूर्व केसरात्मने। इः ईं. . . . आग्नेयकेसरात्मने। उः ऊं. . . . याम्यकेसरात्मने। ॠः ॠं. . . . नैॠत्यकेसरात्मने। लृः लॄं. . . . वारुणकेसरात्मने। एः ऐं. . . . वायव्यकेसरात्मने। ओः औं. . . . सौम्यकेसरात्मने। अः अं . . . . ऐशकेसरात्मने। अं आत्मतत्वात्मने। उं. . . . विद्यातत्वात्मने। मं. . . . परतत्वात्मने। सं. . . . बिन्द्वात्मने। हं. . . . नादात्मने। ह्रीं[1] . . . . शक्त्यात्मने। ओं नमः पराय शान्तात्मने नमः इति विष्ण्वादिषु लि. . . ङ्कजम्।- इति लिपिपङ्कजं सम्पूज्य प्रणवोपचारान्ते ओं नमो नारायणाय[2]। श्रीविष्णुमूर्तये नमः इति विष्णौ। अन्येषु स्वस्वमूलान्ते स्वस्वनामान्ते मूर्तये

1 विष्णौ- श्रीमिति वक्तव्यमन्यत्र ह्रीमिति। तथा सति विष्ण्वादिषु सर्वत्र ह्रीमिति कथं प्रयुक्तम्? 2 मूले विमर्शिन्यां च मूलमन्त्रयोगाभावेऽपि विवरणे मूलमन्त्रयोगः कृतः

नमः इति मूर्त्यावाहनं कृत्वा मुद्राः प्रदर्श्य तेन मन्त्रेण व्याप्य मूलाक्षराङ्गानि न्यस्य उपहारान् दत्वा सम्पूज्याऽर्घ्यं दत्वा पुष्पाञ्जलिं कुर्यात्।

**कलावाहनम्**- तद्यथा- शङ्खं प्रक्षाल्य तस्मिन् पूर्ववज्जलं आदाय हृदयमन्त्रेणाष्टगन्धं विलोड्य प्रणवाक्षरैः प्रणवेन च सम्पूज्य तत्र कलाः पृथगावाहयेत्। विष्णौ कलावाहनम्- ओं श्रीं यं धूम्रार्चिषे नमः। ओं श्रीं रं ऊष्मायै। लं[1] ज्वलिन्यै। वं ज्वालिन्यै,। शं विष्फुलिङ्गिन्यै। षं सुश्रियै। सं सुरूपायै। हं कपिलायै। ळं हव्यवाहायै। क्षं कव्यवाहायै इति पृथगावाह्य जातवेदसे इत्याद्यृचाऽऽवाह्य मं वह्निमण्डलाय दशधर्मप्रदकलात्मने नमः इति समष्ट्याआवाह्य हस्तेन जलं शङ्खं च स्पृष्ट्वा प्राणप्रतिष्ठां कुर्यात्। ओं आं ह्रीं क्रों य र ल व श ष स हों सं हं सः वह्निकलानां प्राणा इह प्राणाः। ओं आं ह्री क्रों यरलवशषसहों सं हं सः वह्निकलानां जीव इह स्थितः। ओं आं ह्रीं क्रों यरलवशषसहों सं हं सः वह्निकलानां सर्वेन्द्रियाणि वाङ्मनश्चक्षुः- श्रोत्रघ्रांणप्राणा इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति प्राणप्रतिष्ठामन्त्रः। ओं श्रीं कं भं तपिन्यै नमः। खं बं तापिन्यै। गं फं धूम्रायै। घं पं मरीच्यै। ङं नं ज्वालिन्यै। चं धं रुच्यै। छं दं सुषुम्नायै। जं थं भोगदायै। झं तं विश्वायै। ञं णं बोधिन्यै। टं ढं धारिण्यै। ठं डं क्षमायैं इत्यावाह्य तत्सवितुरित्याद्यृचाऽऽवाह्य अं सूर्यमण्डलाय द्वादशवसुप्रदकलात्मने नमः इति समष्ट्यावाह्य हस्तेन शङ्खजलं स्पृष्ट्वा आं ह्रीं इत्यादि सूर्यकलानां प्राणा इत्यादिक्रमेण प्राणप्रतिष्ठामूहेन कुर्यात्। पुनःओं श्रीं अं अमृतायै। आं मानदायै। इं पूषायै। ईं तुष्ट्यै। उं पुष्ट्यै। ऊं रत्यै। ऋं धृत्यै। ॠं शशिन्यै। लृं चन्द्रिकायै। ॡं कान्त्यै। एं ज्योत्स्नायै। ऐं श्रियै। ओं प्रीत्यै। औं अङ्गदायै। अं पूर्णायै। अः पूर्णामृतायै- इति। त्र्यम्बकमृक्। उं सोममण्डलाय षोडशकामप्रदकलात्मने नमः इति समष्टिः। आंह्रीमित्यादि सोमकलानां प्राणा इत्याद्यूह्यम्। पुनः ओं श्रीं कं , सृष्ट्यै। खं ऋध्यै । गं स्मृत्यै। घं मेधायै। ङं कान्त्यै। चं लक्ष्म्यै। छं द्युत्यै । जं स्थिरायै। झं स्थित्यै। ञं सिद्ध्यै इत्यकारकलाः। हंसः शुचिषदिति ऋक्। ब्रह्मणे नमः। पृथिव्यात्मने नमः। गन्धतन्मात्रात्मने। घ्राणात्मने। उपस्थानन्दात्मने। सृष्ट्यात्मने। निवृत्त्यात्मने इति समष्टिसप्तकम्। आं ह्रीमित्यादि अकार-कलानां इत्याद्यूह्यम्। ओं श्रीं टं जरायै। ठं पालिन्यै । डं

---

**तस्मात् क्वचित् मूलानुक्तस्य कथनेऽपि सत्याचारे, न विरोध शङ्का कार्या। 1 सर्वत्र ओं श्रीं इति योज्यम्।**

शान्त्यै[1]। ढं ऐश्वर्यै। णं रत्यै। तं कामिकायै। थं वरदायै। दं ह्लादिन्यै। धं प्रीत्यै। नं दीर्घायै इत्युकारकलाः। प्रतद्विष्णुरिति ऋक्। विष्णवे नमः। अवात्मने। रसतन्मात्रात्मने। जिह्वात्मने। पायुविसर्गात्मने। स्थित्यात्मने। प्रतिष्ठात्मने इति समष्टिसप्तकम्। ओं आं ह्रीं इत्यादि उकारकलानामित्यादि सर्वं वदेत्। पुनः पं तीक्ष्णायै। फं रौद्र्यै। बं भयायै। भं निद्रायै। मं तन्द्र्यै। यं क्षुधायै[2]। रं क्रोधिन्यै। लं क्रियायै। वं उत्कार्यै। शं मृत्युरूपायै[3] इति मकारकलाः। त्र्यम्बकमितिऋक्। रुद्राय नमः। अग्न्यात्मने। रूपतन्मात्रात्मने। चक्षुरात्मने। पादगमनात्मने। संहारात्मने। विद्यात्मने इति समष्टिः। आं ह्रीमित्यादिमकारकलानामित्याद्यूह्यम्। पुनः षं पीतायै। सं श्वेतायै। हं अरुणायै। ळं असितायै। क्षं अनन्तायै इति बिन्दुकलाः। तत्सवितुरिति ऋक्। महाविष्णवे। वाय्वात्मने। स्पर्शतन्मात्रात्मने। त्वगात्मने। पाण्यादानात्मने। तिरोभवात्मने। शान्त्यात्मने इति समष्टिसप्तकम्। आं ह्रीमित्यादि हं स इत्यन्ते बिन्दुकलानामित्यादि वदेत्। पुनः अं निवृत्त्यै। आं प्रतिष्ठायै। इं विद्यायै। ईं शान्त्यै। उं इन्धिकायै। ऊं दीपिकायै। ऋं रेचिकायै। ॠं मोचिकायै। ऌं परायै। ॡं सूक्ष्मायै। एं सूक्ष्मामृतायै। ऐं ज्ञानामृतायै। ओं आप्यायिन्यै। औं व्यापिन्यै। अं व्योमरूपायै। अः अनन्तायै इति नादकलाः। विष्णुर्योनिमिति ऋक्। सदाविष्णवे। आकाशात्मने। शब्दतन्मात्रात्मने। श्रोत्रात्मने। वाग्वचनात्मने। अनुग्रहात्मने। शान्त्यतीतात्मने इति। सर्वत्र नतिः इति समष्टिसप्तकम्। आं ह्रीमित्यादि हं स इत्यन्ते नादकलानां प्राणाः इत्याद्यूह्यम्। इच्छायै। ज्ञानायै। क्रियायै इति शक्तिकलाः। ओं शक्त्यात्मने इति समष्टिः। ओं चिदात्मने। सदात्मने[4]। आनन्दात्मने इति शान्तिकलाः। ओं शान्त्यात्मने इति समष्टिः। इति विष्णौ कलान्यासः। अन्येषु देवेषु ओं ह्रीं यं धूम्रार्चिषे नमः इत्यादि। श्रींबीजस्थाने ह्रीं इति भुवनेश्वरीमूहयेत्[5]। अन्येषु बिन्दुकलासमष्ट्यां ईश्वराय नमः इत्यादि। अन्यत्समानम्। नादकलासमष्ट्यां सदाशिवाय नमः इत्यादि। अन्यत्समानम्। शान्तिकलायां चिदात्मने। आनन्दात्मनेइत्यादि समानम्। दुर्गायां बिन्दुसमष्ट्यां महाविष्णवे। नादकलासमष्ट्यां सदाविष्णवे नमः इति विशेषः। शङ्करनारायणे शास्तरि च

---

**1 कान्त्यै इ. पा. 2 क्षुधे इ. पा. 3 मृत्यवे इ. पा. 4 सदात्मने इत्यधिकमित्याभाति। 5 अयमेव विशेष अन्यत्रामजातं समानमित्यर्थः।**

एवं कुर्यात्। सुब्रह्मण्ये गणपतौ च शिववदेव कुर्यात्[1]। म ... एवं कलाः पृथगावाह्य वर्गान्ते वर्गान्ते प्राणप्रतिष्ठां कृत्वा अन्ते स्वस्वमूलेनावाह्य किञ्चित्सम्पूज्य स्वस्वमूलमन्त्रं उच्चार्य तज्जलं कुम्भे निषिच्य पुष्पाञ्जलिं विधाय व्याप्य कलान्यासं कुर्यात्।

**कलान्यासः**-- मूलाधारे दशदलपद्मं सङ्कल्प्य अ..यादिदलेषु आग्नेयकला न्यस्य तत्स्थाने जातवेदस इत्यृचा मं वह्निमण्डलाय नमः इति समष्टिमन्त्रेण ओं आं ह्रीमिति प्राणप्रतिष्ठामन्त्रेण च व्याप्य ऊर्वोः संस्पृश्य त्रिवारं प्रणवं सञ्जप्य हृदि संस्पृश्य अजपां त्रिवारं जप्त्वा हृदिस्था देवताः सर्वाः हृदये नित्यसंश्रिताः। हृदि सर्वं समर्पयामि हृदि प्राणे प्रतिष्ठिताः इति जपेत्। पुनः हृदये द्वादशदलपद्मं सङ्कल्प्य पूर्ववत् सूर्यकलाः न्यस्य तत्स्थाने पूर्ववदृगादिमन्त्रैः व्याप्य पूर्ववत् प्रणवादि मन्त्रान् जपेत्। पुनः द्वादशान्ते षोडशदलपद्मं सङ्कल्प्य सोमकला. न्यस्य त्र्यम्बकऋचा तत्स्थाने व्याप्य पूर्ववत्प्रणवादि जपं कुर्यात्। पादयोः सन्ध्यग्रेषु अकारकला न्यस्य तत्स्थाने हंसः शुचिषदित्यादि मन्त्रैर्व्याप्य पूर्ववत्कुर्यात्। हस्तयोः सन्ध्यग्रेषु उकारकलाः न्यस्य तत्स्थाने प्रतद्विष्णु-रित्यादिभिर्व्याप्य प्रणवादि जपं कुर्यात्। पायुवृषणान्धुनाभिकुक्षि-हृदयपार्श्वद्वयपृष्ठककुत्सु मकारकलाः न्यस्य तत्स्थाने त्र्यम्बकादि-मन्त्रैर्व्याप्य प्रणवादि जपं कुर्यात्। कण्ठास्यभ्रूद्वयमूर्धसु[2] बिन्दुकला न्यस्य तत्स्थाने तत्सवितुरित्यादिभिर्व्याप्य प्रणवादि जपं कुर्यात्। प्रतिलोमस्वरस्थानेषु[3] ...कलाः न्यस्य तत्स्थाने विष्णुर्योनिमित्यादिभिः व्याप्य प्रणवादिजपं कुर्यात्। मूलाधारहृदयमूर्धसु शक्तिकलाः न्यस्य समष्ट्या सर्वाङ्गे व्यापयेत्। हृदये शान्तकलाःन्यस्य समष्ट्या सर्वाङ्गे व्यापयेत् । पुनः लिपिन्यासं

---

**1 अयं संहारक्रमः सोमसूर्यवह्निनादबिन्दुमकारोकाराकारकलाक्रमात् सृष्टिः। सूर्यसोमवह्नि बिन्दुनादमकाराकारोकारकलाक्रमात् स्थितिः। चतुर्नवतित्वसिद्ध्यर्थं बिन्दुकलासु अनन्तकला स्वीकृता तदग्रहणे लिपिभिर्मूलेन वा संख्यापूरणं स्यात्। अत्र कलावाहने अन्येषु ह्रीं बीजयोजनमुक्तं परं विवरणसमालोचने- विष्णौ दुर्गायां श्रीं बीजं, शङ्करनारायणे विकल्पः। इतरत्र ह्रीं बीज मित्यवगम्यते। अत्र पण्डिताः प्रमाणम्। एवं शिवे कलावाहने- प्रणवशक्तिभ्यां सह प्रासादेन च कला उक्त्वाऽन्ते कलाशक्त्यै नमः इति वदेत् तथा चायं क्रमः- ओं ह्रीं हौं यं धूम्रार्चिषे कलाशक्त्यै नमः इत्यादि विशषोऽपि ज्ञेयः 2 बिन्दुचतुष्के भुवि बिन्दुपञ्चके भ्रूद्वये इत्यर्थः। 3 आस्यादि मूर्धान्तेषु।**

कुर्यात् इति कलावाहनानुष्ठानप्रकारः[1]। स्वस्वमूलाक्षराङ्गैस्सकलीकृत्य उपहारान् दत्वा सम्पूज्याऽर्घ्यं दत्वा पुष्पाञ्जलिं कुर्यात्। स्वस्वमूलान्ते विद्यामूर्तये नमः इति विद्यामूर्तिमावाह्य तेन व्याप्य मूलाक्षराङ्गं कृत्वा उपहारान् दत्वा सम्पूज्याऽर्घ्यं दत्वा पुष्पाञ्जलिं कुर्यात्। पुनः शङ्खं प्रक्षाल्य पुनः पूर्ववत्पूजितं जलं शङ्खे आदायाष्टगन्धं विलोड्य किञ्चित्सम्पूज्याखिलतत्वमन्त्रैः सृष्टिक्रमेणावाह्यान्ते स्वस्वमूलेनावाह्य किञ्चित्सम्पूज्य तज्जलं मूलेन कुम्भे निषिच्य पुष्पमाराध्य आवाहनमुद्राः प्रदर्श्य व्याप्य तत्वन्यासं कृत्वा मूलाक्षराङ्गानि न्यस्य उपहारान् दत्वा सम्पूज्य पुष्पाञ्जलिं कुर्यात्। पुनः परावाहनं जीवावाहनं स्थूलावाहनं च विधाय सम्पूज्य पुनः शेषं सम्पूर्यास्त्रेण पल्लवचक्रिकादिकं[2] न्यस्य सम्भूष्य वस्त्राभ्यां कवचेन संवेष्ट्य प्रणवोपचारमूलेनावाह्य मुद्राः प्रदर्श्य व्याप्य षडध्वन्यासं विधाय यथावत् ध्यात्वा स्नानकाले परिवारप्रसरणं कृत्वा पुष्पावृतिपुष्पपूरणसहितं सपरिवारं सम्पूज्य निवेद्य प्रसन्नपूजां विधाय पुष्पाञ्जलिं कृत्वा पूजां समाप्य रक्षेत्। पुनः परिकलशपूजां कुर्यात्। सर्वत्र खण्डं प्रति पीठपूजां विधाय कुम्भसंस्कारान् विधाय उत्तानीकृत्य न्यस्य कूर्चान् विन्यस्य यथाक्रमं पूरयेत् इति सर्वत्र समानम्। विष्ण्वादिसर्वदेवेषु विशेषद्रव्याणि पूरयेत्। तत्क्रमं अभिषेकक्रमं च वक्ष्यामः-

**तत्र विष्णौ पञ्चविंशतिद्रव्ये** - मध्ये ब्रह्मकलशं यथाविधिस्नानोदकं[3] प्रपूर्य मानुषे पूर्वादि दिक्षु अग्न्यादिकोणेषु भृशाद्यन्तराळेषु च खण्डेषु, दैविके पूर्वादिदिक्षु अग्न्यादिकोणेषु च खण्डेषु पीठपूजादिकं विधाय प्रकृत्यादि पृथिव्यन्ततत्वात्मके ( कैः ) पाद्यादिद्रव्यैः पूरयेत्। पाद्यमर्घ्यमाचमनं पञ्चगव्याज्य दधिक्षीरमधूनि द्वादशाक्षरेण पूरयेत्। उष्णोदककषायमार्जनफल-यवरत्नोदकलोहोदककुशजलानि **गायत्र्या पूरयेत्** गन्धपुष्पौपमानधात्र्यक्षत[4] नाळिकेरजलेक्षुजलतण्डुलजलानि अष्टाक्षरेण पूरयेत्। द्वादशाक्षरादिपूरणमन्त्रान्ते तत्तद्द्रव्यदेवताश्चोक्त्वा पूरयेत्। तत्र ब्रह्मकलशे षडक्षरान्ते परपुरुषाय नमः

---

**1 अत्र मूले संहारक्रमेण कलावाहनोक्तावपि विवरणदर्शनेनैवं ज्ञायते। चतुर्थदिनस्नपने संहारक्रमेण कलावाहनं, अभिषेके कृते सृष्टिक्रमेण न्यासः, कलशे न्यासः संहारक्रमेण सर्गक्रमेण वा। दोषसंहारप्राधान्ये देवे न्यासोऽपि संहारक्रमेणैव। गुणाधानप्राधान्ये आवाहनमपि सर्गक्रमेण। उत्सवादिषु स्नपनविधौ कलावाहनं न्यासश्चेत्युभयं स्थितिक्रमेणेति। 2 चूतबोधीति मूले पल्लवमुक्तम्। चूतैस्तथाश्वत्थबैल्वैर्दलैः पानसैश्चेति विवरणे पल्लवान्युक्तानि। बोधिवृक्षः- अश्वत्थः। 3 षडक्षरेण। 4 घनद्रव्ये सर्वत्राभिषेकसिद्ध्यर्थं जलयोगः कार्यः।**

इति मन्त्रः। पाद्ये द्वादशाक्षरं पितृभ्यो नमः। अर्घ्ये द्वादशाक्षरं श्रियै। आचमनद्रव्ये द्वादशाक्षरं सरस्वत्यै। पञ्चगव्ये द्वादशाक्षरं दक्षाय। आज्ये द्वादशाक्षरं विष्णवे। दध्नि द्वादशाक्षरं शुक्राय। क्षीरे द्वादशाक्षरं सोमाय। मधुनि द्वादशाक्षरं इन्द्राय। उष्णोदके गायत्री अर्काय। कषाये गायत्री यमाय। मार्जने गायत्री विश्वस्मै। इति; विश्वेभ्यो देवेभ्यो नमः इति वा। फले गायत्री वैश्रवणाय। यवे गायत्री वायवे। रत्नोदके गायत्री ब्रह्मणे। लोहोदके गायत्री वसुभ्यो। कुशजले गायत्री सावित्र्यै। अष्टगन्धजले अष्टाक्षरं गन्धर्वाय। पुष्पजले अष्टाक्षरं वरुणाय। औपमानद्रव्ये अष्टाक्षरं गरुडाय। धात्रीजले अष्टाक्षरं पृथिव्यै। अक्षतजले अष्टाक्षरं निऋतये। नारिकेळजले अष्टाक्षरं श्रीधराय। इक्षुजले अष्टाक्षरं नृसिंहाय। तण्डुलोदके अष्टाक्षरं अश्वमुखाय इति पूरणमन्त्राः। तैर्मन्त्रैः पूजयेच्च।

**द्रव्याणि**[1]- शालिपिष्टं सुवर्णं नवरत्नं रजनीचूर्णं अक्षतं एतत्सर्वं स्नानोदकद्रव्यम्। श्यामाकं अम्बुजं विष्णुक्रान्ती दूर्वा एतत्सर्वं पाद्यद्रव्यम्। अश्वत्थोदुम्बरवटखदिरशमीविल्वपलाशग्रन्थिलं एतेषां त्वग्भिः कषायम्। निशाचूर्णं सहापूर्वा शिरीषं (नीवारः) कुशः भद्रा सूर्यवर्तिनी[2] एतत्षट्कं मार्जन द्रव्यम्। कदलीविल्वाम्रधात्रीदाडिममातुलङ्गकेरभव्यपनसानि एतत्सर्वं फलोदकद्रव्यम्। मूक्ताविद्रुमपद्मरागपविवैडूर्याणि एतत्पञ्चकं रत्नद्र०ययम्। काञ्चनं रूप्यं ताम्रं अयः त्रपु एतत्सर्वं लोहद्रव्यम्। चन्दनजलागरुकुङ्कुम-मुरसेव्यमांसीकुष्ठी इत्यष्टगन्धम्। मल्लिकाचम्पकजातीनन्द्यावर्तवकुलस्त्रीकुन्दयूथि-काम्वुजानि इति पुष्पोदकम्। हेम्ना रचितानि गरुडशङ्खकमठचक्राणि औपमद्रव्यम्। राजिकटुकजम्बीराक्षतयवगन्धतिलकुशैः अर्घ्यद्रव्यम्। तक्कोलकर्पूरलवङ्गजाती फलैः आचमनद्रव्यम्। मुरामलकमांसीफलं पेषयित्वा धात्रीद्रव्यम्। यवतण्डुलमाषनीवारशालीवैणवैरक्षतद्रव्यम् इति वैष्णवकलशद्रव्याणि।

अभिषेकमन्त्राः- प्रणवोपचारमूलमन्त्राः सर्वत्र १ पाद्ये-इदं विष्णुः, द्वादशाक्षरं, पितृभ्यो नमः मूलं प्रणवश्च इति मन्त्राः। शुद्धजले देवतारहिता एते मन्त्राः। २ अर्घ्ये- हिरण्यवर्णाः शुचयः. . . . द्वादशाक्षरं श्रियै नमः। ३ आचामे- आपोहिष्ठा द्वादशाक्षरं सरस्वत्यै। ४ पञ्चगव्ये-प्रजापतेनत्व . . . . द्वादशाक्षरं दक्षाय। ५ आज्ये- तेजोऽसि

---

1 द्रव्यालाभे तु सर्वाणि गन्धपुष्पाक्षतोदकैः पूरयेन्मतिमान् मन्त्री तत्तत्सङ्कल्पसंयुतम्।
2 अत्र पल्लवानि गृह्यन्ते।

तेजोऽनुप्रेहि. . . . द्वादशाक्षरं विष्णवे। ६ दध्नि-दधिक्राव्ण . . . . द्वादशाक्षरं शुक्राय। ७क्षीरे- आप्यायस्व . . . . द्वादशाक्षरं सोमाय। ८ मधुनि- मधु वाता . . . . द्वादशाक्षरं इन्द्राय। ९ उष्णोदके- आकृष्णेन . . . . गायत्री अर्काय। १० कषाये- अश्वत्थेवो . . . . गायत्री यमाय। ११ मार्जने- भद्रं कर्णेभिः . . . . गायत्री विश्वस्मै। विश्वेभ्यो देवेभ्यो इति वा। १२ फले- गणानां त्वा- . . . . गायत्री वैश्रवणाय। १३ यवे-वायवायाहि . . . . गायत्री वायवे। १४ रत्ने ब्रह्मजज्ञानं . . . . गायत्री ब्रह्मणे। १५ लौहे- उपत्वाग्ने . . . . गायत्री वसुभ्यो। १६कौशे-देवस्यत्वा . . . . गायत्री सावित्र्यै इति मानुषे मन्त्राः। १७ गन्धे- विष्णोरराटमसि . . . . अष्टाक्षरं गन्धर्वाय। १८ पुष्पे- तत्त्वायामि . . . . अष्टाक्षरं वरुणाय। उपमानद्र०ये- सुवर्ण घर्ममिति, सुपर्ण वस्ते . . . . इति वा अष्टाक्षरं गरुडाय। २० धात्रीजले- स्योनापृथिवी . . . . अष्टाक्षरं पृथिव्यै। २१ अक्षते- शन्नोदेवी . . . . अष्टाक्षरं निर्ऋतये। २२ नाळिकेरे यादिव्या आपः . . . . अष्टाक्षरं श्रीधराय। २३ इक्षुजले यासां राजा . . . . अष्टाक्षरं नृसिंहाय। २४ तण्डुले- परो मात्रया . . . . अष्टाक्षरं अश्वमुखाय इति दैविके मन्त्राः। २५ अथ ब्रह्मकलशे- अभिषेके अतो देवाः . . . . षडक्षरं परपुरुषाय इति पुनः उक्तमन्त्राश्च ब्रह्मकलशे मन्त्राः इति विष्णौ पञ्चविंशतिद्रव्यस्नानक्रमः तन्मन्त्राश्चोक्ताः।

**विष्णौ सप्तदशद्रव्याण्याह**- तत्र कलशपदक्लृप्तिः पूर्वमेवोक्ता। द्रव्यादिकं वक्ष्ये। तत्र ब्रह्मकलशे आज्यं पूरयेत्। दैविके पूर्वादिक्रमेण उष्णोदक- रत्नोदकफलोदकलोहोदकमार्जनगन्धाक्षतयवान् स्वस्वदेवताभिः पूरयेत्। मानुषे दिक्षु पाद्यार्घ्याचमनीयगव्यानि। कोणेषु-दधिदुग्धमाक्षिकक्वाथकानि स्वस्वदेवताभिः पूरयेत्। शेषकलशेषु प्रणवेन शुद्धजलं पूरयेत्। विष्णवे। सूर्याय। ब्रह्मणे। वैश्रवणाय। वसुभ्यो। विश्वेभ्यो देवेभ्यो। गन्धर्वेभ्यो। निर्ऋतये। दुर्गायै। पितृभ्यो। श्रियै। सरस्वत्यै। दक्षाय। शुक्राय। सोमाय। इन्द्राय । यमाय। इति आज्यादि द्रव्यदेवताः उक्ताः।

**स्नानमन्त्राः**- पाद्ये-सहस्रशीर्षा . . . . पितृभ्यो। अर्घ्ये- पुरुष एवेदं . . . . श्रियै। आचमने-एतावानस्य . . . . सरस्वत्यै। पञ्चगव्ये- त्रिपादूर्ध्व . . . . दक्षाय। आज्ये-तस्माद्विराट् . . . . विष्णवे। दध्नि- यत्पुरुषेण . . . . शुक्राय। क्षीरे - तं यज्ञंबर्हिषि. . . सोमाय। मधुनि-

तस्माद्यज्ञात्सर्व . . . . इन्द्राय। कषाये- तस्माद्यज्ञात्सर्वहुत ऋचः . . . . यमाय। उष्णोदके- तस्मादश्वा . . . . सूर्याय। फले- यत्पुरुषं . . . . वैश्रवणाय। मार्जने- ब्राह्मणोऽस्य . . . . विश्वेभ्यो देवेभ्यो। अक्षते- चन्द्रमामनस . . . . निर्ऋतये। रत्नोदके- नाभ्या आसीद . . . . ब्रह्मणे। लोहे- सप्तास्यासन् . . . . वसुभ्यो। गन्धके यज्ञेन यज्ञं . . . . गन्धर्वेभ्यो। यवे- इदं विष्णुः . . . . दुर्गायै इत्यभिषेकमन्त्राः। मानुषदिक्खण्डघटैरिति क्रमः[1] इति सप्तदशद्रव्यकलशप्रकारः।

**शङ्करनारायणे कलशप्रकारः**- तत्र अधमाधमं अधममध्यमं अधमोत्तमं, मध्यमाधमं मध्यममध्यमं मध्यमोत्तमं, उत्तमाधमं उत्तममध्यमं उत्तमोत्तममिति नवविधं स्नानप्रकारमाहुः। तत्र पञ्चविंशतिकलशैरधमाधमं, एकोनपञ्चाशत्कलशैरधममध्यमं। एकाशीतिकलशैरधमाधमं, सप्तसहितनवतिकलशैर्मध्यमाधमं, नवविंशतिसहितशतकलशैर्मध्यममध्यमं, पञ्चविंशतिसहितद्विशतकलशैर्मध्यमोत्तमं, त्रयोदशसहितद्विशतकलशैरुत्तमाधमं, सप्तसप्ततिसहितद्विशतकलशैरुत्तममध्यमं, एकोनपञ्चाशत्सहित-त्रिशतकलशैरुत्तमोत्तममिति कलशप्रकाराः।

वैष्णवोक्तप्रकारेणाज्यादिकषायान्तसप्तदशद्रव्यैः सप्तपुटे नवपुटे एकादशपुटे च क्षेत्रे क्रमेण पञ्चविंशत्येकोनपञ्चाशदेकाशीतिकलशैरधमत्रयं कुर्यात्।

**कलशद्रव्याण्याह**- मुक्ताफलकुलिशविद्रूमाम्बुजपुष्यब्रह्मरागचन्द्रकान्तसूर्य-कान्तवैडूर्यगारुत्मतेन्द्रनीलायस्कान्तस्फटिकानि इति त्रयोदशरत्नानि[2]।

---

1 तन्त्रसमुच्चयस्थश्लोकप्रतीकग्रहणं कृतम्। अस्यायमर्थः- मानुषदिग्घटैः ब्रह्मघटेन मानुषविदिग्घटैः दैविकदिग्घटैः दैविकविदिग्घटैः क्रमेणाभिषेचयेदित्यर्थः। 2 अनुक्तानि द्रव्याण्युच्यन्ते हरिहरे- क्रान्तिश्यामाकपद्मकुशतुलसीबिल्व ( फलं पुष्पं वा) गन्धाक्षतयुतं पाद्यम्। क्षीरराजितिलकुशगन्धाक्षतोदकदधियवफलयववचाभिरर्घ्यं (सर्वदेवार्घ्यं वचासहितमुक्तम्) बिल्वपलाशग्रन्थिलखदिरशमीरजम्बूनीपाम्रकारग्वधपनसमधूकानां त्वग्भिः कषायम। रात्रिसहाशिरीषकुशभद्रासूर्यवर्तिभूरतृण गन्धतुलसीद्वयपनसयुक्तं मार्जनम्। (अत्र पल्लवानि ग्राह्याणि) तिलराजियववैणवनीवारतुलसीपलाशपद्मदलैः शान्तिजलम्। ब्रह्माशोककुशार्जुनेन्द्रलताश्वत्थाङ्कुरपद्मैकपद्मैर्मङ्गलजलम्। तक्कोलजातीलवङ्गकर्पूरगन्धपुष्पैराचमनम्। धात्र्याम्रबिल्वनारिकेलपनरादाडिमीभव्यरम्भाकुटजबदरीमातुलङ्गकपित्थानि फलानि। सुवर्णरजतताम्रायस्त्रपुसीसकांस्यपित्तलारयुतं लोहद्रव्यम्। चन्दनजलागरुकुङ्कुममुरासोव्यमांसीकङ्कुष्ठसुरद्रुशशिनागाब्दैर्गन्धद्रव्यम्। मल्लिकाचम्पकजातीनन्द्यावर्तद्वयबकुलपद्मसौगन्धिककुन्दफलिनीकुसुमानि पुष्पोदकद्रव्यम्।

**स्नानमन्त्राः**- पाद्ये[1]– सहस्रशीर्षा . . . . सद्योजातं . . . . पितृभ्यो नमः। अर्घ्ये- पुरुष एवेदं . . . . वामदेवाय नमो . . . . श्रियै। आचमनीये- एतावानस्य . . . . तत्पुरुषाय विद्महे . . . . सरस्वत्यै। पञ्चगव्ये- त्रिपादूर्ध्व . . . . अघोरेभ्यो . . . . दक्षाय। ब्रह्मकलशेतस्माद्विराट् . . . . ईशानः सर्व . . . . विष्णवे। दध्नि- यत्पुरुषेण . . . . पञ्चाक्षरं शुक्राय। क्षीरे- तं यज्ञं बर्हिषि . . . आप्यायस्व . . . . सोमाय। मधुद्रव्ये- तस्माद्यज्ञात्सर्व . . . . मधुवाता . . . . पञ्चप्रणवं सर्वज्ञाय हृदयाय नमः, इन्द्राय। कषाये- तस्माद्यज्ञात्सर्वहुत ऋचः . . . . अश्वत्थेवो . . . . अमृततेजोमालिनि तृप्तायै ब्रह्मशिरसे स्वाहा, यमाय। उष्णोदके- तस्मादश्वा . . . . स्वगायत्री ज्वलितशिखिशिखे अनादिबोधायै शिखायै वषट्, सूर्याय। फलोदके-- यत्पुरुषं . . . . पुष्पावतीः प्रसूवतीः फलिनीरफला उत। अश्वा इव सजित्वरी वीरुधः पारयिष्णवः। सौं चौं हौं अलुप्तशक्तये नेत्रत्रयाय वौषट्, वैश्रवणाय। मार्जने- ब्राह्मणोऽस्य . . . . आपोहिष्ठा . . . . ओं श्लीं पशु हुं फट् अनन्तशक्तये अस्त्राय फट्, विश्वेभ्यो देवेभ्यो। अक्षतोदके- चन्द्रमामनसो . . . . तत्पुरुषाय विद्महे . . . व्योमव्यापि दशाक्षरं निर्ऋतये। रत्नोदके-नाभ्याआसी . . . . तन्महे शाय विद्महे वाग्विशुद्धाय धीमहे। तन्नः शिवः प्रचोदयात्। व्योमव्यापि दशाक्षरं, ब्रह्मणे। लोहोदके- सप्तास्यासन् . . . . व्योम व्योमाय विद्महे व्योमेश्वराय धीमहे। तन्नो व्योमः प्रचोदयात्। व्योमव्यापिदशाक्षरं वसुभ्यो। गन्धोदके- यज्ञेन यज्ञं . . . . त्र्यम्बकेत्याद्यनुष्टुप्। वज्रिणे वज्रधराय स्वाहा स्वतन्त्राय कवचाय हुं, गन्धर्वेभ्यो। यवोदके- इदं विष्णुः . . . . मानस्तोके . . . . नारायणायेत्यादि विष्णुगायत्री, दुर्गायै। इत्यभिषेकमन्त्रप्रकारः। अथ **मध्यमाधमं** वक्ष्ये- पञ्चदशपुटक्षेत्रे मध्ये सप्तपुटेन पञ्चविंशतिकलशान् कुर्यात्। तद्बहिर्दिक्षु विदिक्षु अष्टौ नवकानि कुर्यात्। आज्यादिकषायान्तद्रव्यैर्मध्ये अधमाधमं पूर्ववत् परिपूर्य वहिर्दिक्षु च नवकेषु प्रणवेन गुळेक्षुनाळिकेरोदकतैलशान्तिजलमङ्गलज- लमृज्जलभस्मजलैः पूरयेत्। स्नानमन्त्रान् वक्ष्ये- त्वं विष्णोः सुमतिमित्यादि ईशानादि सद्योजातान्तं, मूलं प्रणवं चोक्त्वा गुळेन, इक्षुजलेन, नाळिकेरजलेन

---

**नीवारशालियवतण्डुलवेणुबीजमाषसिद्धार्थकङ्गुभिरक्षतद्रव्यम्। कषायोक्तवृक्षत्वग्भिर्दग्धं करीषं भस्मद्रव्यम्। वेदीक्षेत्रगजोक्षशृङ्गगिरिवल्मीकोद्भवाः कोलनदीतटद्वयतटाकान्तस्रवन्त्युद्भवाश्च मृदः। यवतिलगोधूमशालीमुद्गश्यामाकचणककङ्गुवैणवनीवारयुतानि बीजानि।**

**1 मानुषदिक्खण्डगतैरिति विष्णूक्त एवाभिषेकक्रमः।**

चाभिषेचयेत्। पुनः त्वं विष्णोः इति ईशानः सर्वविद्यानामिति मूलं प्रणवं चोक्त्वा उत्तरस्थतैलेन स्नापयेत्। पुनः विष्णोर्नुकमिति तत्पुरुषायेति मूलं प्रणवं चोक्त्वा अग्निखण्डस्थशान्तिजलेन स्नापयेत्। पुनः शन्नोदेवीरिति अघोरेभ्य इति मूलं प्रणवं चोक्त्वा निर्ऋतिखण्डस्थमाङ्गल्यजलेन स्नापयेत्। उद्धृतासीति वामदेवायेति मूलं प्रणवं चोक्त्वा वायुखण्डस्थमृज्जलैः स्नापयेत्। अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा[1]। शिरसा धारिते देवि रक्षस्व मां पदे पदे। सद्योजातादि, मूलं प्रणवं चोक्त्वा ईशखण्डस्थभस्मजलेन स्नापयेत्। तत्रत्योपधटैस्तदा तदा स्नापयेत्। उद्धृतासि वराहेण कृष्णेन शतबाहुना। मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम्। मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम्। आज्यादियवजलान्तैः सप्तदशद्रव्यैः स्नाते सति गुळादिद्रव्यैरभिषिच्य द्रोणघटेनाभिषेचयेत् इति मध्यमाधमप्रकारः।

**मध्यममध्यममध्यमोत्तम** पदक्लृप्तिं वक्ष्ये- विंशतिसूत्रे क्षेत्रे अन्तः नवपुटेन एकोनपञ्चाशत्कलशान् विधाय तत्परितः पङ्क्तिद्वयेन वीथीं कृत्वा दिक्षु विदिक्षु अन्तराळेषु च षोडशपञ्चकानि कुर्यात् इति मध्यममध्यमे पदक्लृप्तिः। मध्यमोत्तमे तु विंशतिसूत्रक्षेत्रस्यान्तः एकादशपुटेन एकाशीतिकलशान् विधाय तत्परितः पङ्क्त्या वीथीं कृत्वा तद्वहिर्दिक्षु विदिक्षु अन्तराळेषु च षोडश नवकानि कुर्यात् इति मध्यमोत्तमपदक्लृप्तिः। उभयत्रान्तराळेषु च वैष्णवाष्टाक्षरेण गन्धजलैः पूरयेत्। आज्यादिकषायान्तैः गुळादिभस्मजलान्तैश्च द्रव्यैः पूर्ववत् (पूर्वमेव?) पूरयेत् इति मध्यममध्यममध्यमोत्तमप्रकारः।

**उत्तमाधमे उत्तममध्यमे** च पदक्लृप्तिः- त्रयोविंशतिपुटक्षेत्रे मध्ये पञ्चदशपुटेन पञ्चविंशतिद्रव्यन्यायेनाष्टोत्तरशतकलशान्विधाय तद्वहिर्दिक्षु कोणेषु अन्तराळेषु च षोडश पञ्चकानि कुर्यात् इति उत्तमाधमे। उत्तममध्यमे तु दिक्कोणान्तराळेषु च षोडश नवकानि कुर्यात्। उभयत्रापि सत्यकाद्यन्तराळेषु अष्टौ त्रिकानि कुर्यात् इत्युत्तमाधमे उत्तममध्यमे च पदक्लृप्तिः। **उत्तमोत्तमे** पदक्लृप्तिं वक्ष्ये- पञ्चविंशतिपुटक्षेत्रस्य मध्ये पञ्चदशपुटेन पञ्चविंशतिद्रव्यन्यायेन अष्टोत्तरशतं विधाय तत्परितः पङ्क्त्या वीथिं विधाय तद्वहिर्दिक्षु द्वादशकं कोणेषु षोडशकं अन्तराळेष्वपि द्वादशकं सत्यकाद्यन्तराळेषु अष्टौ चतुष्कानि कुर्यात् इत्युत्तमोत्तमपदक्लृप्तिः। उत्तमत्रये पूरणं वक्ष्ये- तत्र मध्ये अष्टोत्तरशते

---

1 धरे इति पा.

पूर्ववत् आज्यादि कषायान्तैर्द्रव्यैः प्रपूर्य तत्रान्तरालस्थितिकेषु पञ्चब्रह्माङ्गैः [समस्तैः] वलादीन् प्रपूरयेत्[1]। **तद्बहिर्दिक्षु विदिक्षु दिनकरादिषु**[2] पूर्ववत् गुळादीन्प्रपूर्य सत्यकादिस्थचतुष्कोष्ठेषु वैष्णवाष्टाक्षरेण नद्यादीनां जलानि[3] [क्रमात्] पूरयेत्। पुनः अन्तरिक्षादिस्थद्वादशादिकेषु स्वमूलमन्त्रेण नीवारादिबीजानि स्वर्ण...दूर्वाशालीतण्डुलक्षपामञ्जूषपुष्पाणि च [क्रमात्] पूरयेत्। उत्तमत्रितयेऽपि द्रव्यपूरणमिति सुष्ठूक्तम्। पुनः प्रातः तत्तत्पूरणमन्त्रतः तैः कलशैः स्नपनं कुर्यात्।

**द्रोणकलशप्रकारमाह**- नवधा उक्ते शङ्करनारायणकलशविधाने कलशक्षेत्रस्य उदग्भागे अष्टदळपद्मे पीठं विरचय्य महाकुम्भं न्यस्य पीठपूजादि कुम्भसंस्कारान्तं विधाय समस्तमनुभिः समस्तद्रव्यं न्यस्य गन्धजलैः सम्पूर्य विधिवत्सम्पूज्य सर्वकलशावसाने यज्ञायज्ञेन पुरुषसूक्तश्रीरुद्रव्योमव्यापिमन्त्रैः संस्न...य शेषं कुर्यात्। **शैवकलशप्रकारमाह**- सप्तदशद्रव्यैः पञ्चविंशतिद्रव्यैश्च, पुनः क्रमात् तैलादिभिः, गन्धादिभिः, कर्पूरादिभिश्च सहितैः पञ्चविंशतिद्रव्यैः स्नानप्रकारं वक्ष्ये- सप्तदशद्रव्यस्य पद्मं विधाय ब्रह्मकलशे शान्तिजलं, बहिः मानुषे पूर्वादिक्रमेण पञ्चगव्यं क्षीरं द... घृतं मधु रत्नं कुशजलं गन्धजलं इति स्वमन्त्रैः परिपूर्य दल...लशेषु[4] पूर्वादिक्रमेण लवणगुडसुरासर्पिर्दधिक्षीरशुद्धजलगर्भाख्यान्समुद्रान् सङ्कल्प्य स्वमन्त्रैः शुद्धोदकेन पूरयेत्। ब्रह्मकलशे ईशानाय नमः इति मन्त्रः। पञ्चगव्याद्यष्टसु द्रव्येषु- सावित्र्यै। सोमाय। रुद्राय। अग्नये। स्कन्दाय। वैश्रवणाय सप्तऋषिभ्यो। इन्द्राय इति पूरणमन्त्राः। क्षाराद्यष्टसु समुद्रेषु वरुणाय नमः इति मन्त्राः।

**स्नानमन्त्राः- पञ्चगव्य- सद्यादिमन्त्रः। क्षीरे- आप्यायस्वेति मन्त्रः। दध्नि- दधिक्राव्णः इति मन्त्रः। आज्ये तेजोसीति मन्त्रः। मधुनि- मधुवातेति मन्त्रः। रत्ने-आसत्येनेति मन्त्रः। कुशजले- देवस्यत्वेति मन्त्रः। गन्धजले- गन्धद्वारेति मन्त्रः। अष्टसु समुद्रेषु समुद्रज्येष्ठा इत्यादि मन्त्राः। ब्रह्मकलशे व्योमव्यापि मन्त्रः इति कलशाभिषेकमन्त्राः[5]। इति सप्तदशद्रव्यप्रकारः।**

**पञ्चविंशतिद्रव्यप्रकारो लिख्यते- तत्र ब्रह्मकलशे ईशानाय नमः इति**

---

1 केरलभाषाया...र्थपुरःसरं द्रव्यजातमुक्तम्। तत्र बलावचाऽतिबलाशङ्खपुष्पीसक्तूदर्कासहिकाव्याघ्रीकुशोदकानिति अष्टौ द्रव्याणि।

2 द्वादशादिषु। 3 नदीसमुद्रवापीअ...ुवर्षहिमतीर्थनिर्झरोदकानीत्यर्थः। 4 दैवे एव।

5 तत्र प्रादक्षिण्येन मानुषदैवब्रह्मकलशैरभिषेकक्रमः।

इति मन्त्रेण स्वर्णरत्नगन्धजलैः पूरयेत् तस्य शान्तिजलमिति संज्ञा। दैविके पूर्वदिशि पितृभ्यो नमः इति मन्त्रेण पर्वतमृत्दूर्वासर्षपतिलैः पूरयेत् तस्य पाद्यमिति संज्ञा। दक्षिणदिशि स्वाहायै नमः इति मन्त्रेण तक्कोलजातीलवङ्गैः पूरयेत् तस्याचमनमिति संज्ञा। पश्चिमदिशि सरस्वत्यै नमः इति मन्त्रेण दधिजलक्षीराक्षतयवतिलसर्षपकुशाग्रैः पूरयेत् तस्याऽर्घ्यमिति संज्ञा। पुनः एकस्मिन्पात्रे यथोक्तं गोमूत्रादिपञ्चगव्यं संयोज्य उत्तरदिशि सावित्र्यै नमः इति मन्त्रेण तेन पञ्चगव्येन पूरयेत्। अग्निकोणे अग्नये नमः इति मन्त्रेण घृतं पूरयेत्। निर्ऋतिकोणे षण्मुखाय नमः इति मधुना पूरयेत्। वायुकोणे सोमाय नमः इति मन्त्रेण क्षीरेण पूरयेत्। ईशकोणे रुद्राय नमः इति मन्त्रेण दध्ना पूरयेत्। पुनः मानुषे पूर्वदिशि दुर्गायै नमः इति मन्त्रेण इक्षुजलेन पूरयेत्। दक्षिणदिशि गणपतये नमः इति मन्त्रेण भव्यश्रीबीजपूगामलक[1]-पनसकदलीनाळिकेराम्राणां फलैः पूरयेत् तस्य फलोदकमिति संज्ञा। पश्चिमदिशि विद्येश्वराय नमः इति मन्त्रेणाश्वत्थौदुम्बरवटशिरीषपनसमधूकद्विजाम्राणां त्वग्भिः कषायं सम्पाद्य तेन पूरयेत्। उत्तरदिशि ज्येष्ठायै नमः इति मन्त्रेण सक्तूदकेन पूरयेत्। अग्निकोणे इन्द्राय नमः इति मन्त्रेण चन्दनकुङ्कुमसेव्याम्ब्वगरुमुरगदमांसीपिष्टा [ष्ट] ष्टगन्धैः पूरयेत्। निर्ऋतिकोणे विष्णवे नमः इति मन्त्रेण जातीनन्द्यावर्तद्वयमल्लिकाचम्पकबकुलसौगन्धिकपद्मैः पूरयेत्। वायुकोणे ब्रह्मणे नमः इति मन्त्रेण स्वर्णजलैः पूरयेत्। ईशकोणे वैश्रवणाय नमः इति मन्त्रेण मुक्तावैडूर्यवज्रमणिमरकतगोमेदपुष्परागेन्द्रनीलैः पूरयेत्। इन्द्राग्न्योरन्तराळे वरुणाय नमः इति मन्त्रेण मुक्तारत्नेन[2] पूरयेत्। अग्नियमयोर्मध्ये दिवाकराय नमः इति मन्त्रेण प्रवाळेन पूरयेत्। यमनिऋत्योरन्तराळे वायवे नमः इति मन्त्रेण यवोदकेन पूरयेत्। निऋतिवरुणयोर्मध्ये यमाय नमः इति मन्त्रेण तिलोदकेन पूरयेत्। वायुवरुणयोर्मध्ये श्रियै नमः इति मन्त्रेण दूर्वोदकेन पूरयेत्। वायुसोमयोर्मध्ये पृथिव्यै नमः इति मन्त्रेण उत्पलोदकैः पूरयेत्। सोमेशानयोर्मध्ये सप्तर्षिभ्यो नमः इति मन्त्रेण कुशोदकेन पूरयेत्। इन्द्रेशानयोर्मध्ये विश्वेभ्यो देवेभ्यो नमः इति विश्वाय नमः इति वा मन्त्रेण शाल्युदकेन पूरयेत्।

**अभिषेकमन्त्राः**[3]- प्रणवोपचारमूलमन्त्राः सर्व । पाद्ये- इदं

---

अभिषेके सर्वत्र मूलप्रणवद्रव्यदेवतादियोजनमत्रापि समानम्। 1 दाडिमीति योज्यम्। 2 मुक्तारूपरत्नमित्यर्थः। 3 दैविके दिक् विदिक् क्रमेण मानुषे दिक् विदिक् -

विष्णुः. . . . पितृभ्यो नमः मूलं प्रणवश्च मन्त्राः। शुद्धजलेषु देवतारहिता एते मन्त्राः। आचामके-आपः पुनन्तु. . . .स्वाहायै नमः इति। अर्घ्ये-आपोहिष्ठा. . . .सरस्वत्यै नमः। पञ्चगव्ये- अग्निमीळे. . . .सावित्र्यै नमः। आज्ये- इषेत्वा. . . . अग्नये। मधौ-मधुवाता. . . .षण्मुखाय। क्षीरे-आप्यायस्व. . . .सोमाय। दध्नि- दधिक्राव्णो. . . .रुद्राय। इक्षुजले-उपत्वाग्ने. . . .दुर्गायै। फलोदके-मानस्तोके. . . .विघ्नाय। कषाये-अश्वत्थेवो. . . .विद्येश्वराय। सक्तुजले- सुमित्रान [त्र्यान] आपः- ज्येष्ठायै। गन्धोदके- अग्न आयाहि. . . .इन्द्राय। पुष्पोदके- पुष्पावतीः प्रसूवतीः. . . . विष्णवे। स्वर्णोदके- ब्रह्मजज्ञानं. . . .ब्रह्मणे। रत्नोदके- हिरण्यवर्णाः शुचयः. . . .वैश्रवणाय। मुक्तोदके- समुद्रज्येष्ठाः. . . .वरुणाय। विद्रुमोदके- रक्षोहणं. . . .आदित्याय। यवोदके- ओषधयः सं. . . .वायवे। तिलोदके-पितरः पितामहाः. . . .देवहूत्यां यमाय। दूर्वोदके- श्रिये जातः. . . .श्रियै। उत्पलोदके- जातवेदसे. . . .पृथिव्यै। कुशोदके-देवस्यत्वा. . . .सप्तऋषिभ्यो। शाल्युदके- आशुः शिशानः. . . .विश्वाय। ब्रह्मकलशे व्योमव्यापिमन्त्रः ईशानाय इति पञ्चविंशतिद्रव्यैः कलशप्रकारः। अथ तैलादिभिः षोडश द्रव्यैः पञ्चविंशतिद्रव्यैश्च कुम्भानां त्रिशतं स्यात्। त्रिपञ्चाशद्युक्तं द्विशतं वा। गन्धजलैस्तैलादिभिश्च युक्तैः पञ्चविंशतिद्रव्यैः विंशतिसहितं त्रिशतं घटाः स्युः। कर्पूरादिभिर्गन्धजलैस्तैलादिभिश्च युक्तैः पञ्चविंशतिद्रव्यैः पञ्चसहितं पञ्चशतं घटाः स्युः।

**तैलादिभिर्युक्ते पञ्चविंशतिद्रव्ये** - त्रिशतकलशे चतुर्विंशतिसूत्रे क्षेत्रे मध्ये पञ्चविंशतिद्रव्यन्यायेन पञ्चदशपुटैरष्टोत्तरशतवत् पद्मं विधाय तद्वहिः पङ्क्तिः वीथीं कृत्वा तद्वहिः परितस्त्रिभिः पुटैः दिक्षु पञ्चदशकं कोणेषु नवकं अन्तराळेषु द्वादशकं प्रकल्प्य शेषकोष्ठानि मार्जयेत्। अथवा पूर्वोक्ततैलद्रव्ये त्रिपञ्चाशद्युक्तद्विशते पूर्वोक्तक्षेत्रे अन्तः पूर्ववदष्टोत्तरशतं, बहिः षोडश नवकानि प्रकल्पयेत्। अन्यकोष्ठानि मार्जयेत्। अन्तः अष्टोत्तरशतकलशान् पञ्चविंशतिद्रव्यैः पूर्ववत् पूरयेत्। वहिः कलशान् तैलादिषोडशद्रव्यैः पूरयेत्। तैलं गुडं शर्करा[1] नालिकेररसं तीर्थं सरिद्वारि तटाकवारि कूपाम्बु पूर्वादिदिक्षु अग्न्यादि कोणेषु च शर्वाद्योजमन्त्रैः युग्ममन्त्रैश्च पूरयेत्। शर्वाय। पशुपतये । भवाय। महादेवाय। अन्तराळक्रमेण ब्रह्मघटेन चाभिषेचयेत्।

1 शर्करायाः कथं द्रव्यत्वं मूलेऽनुक्तेः किन्तु नाळिकेररसं नाळिकेरजलमिति द्रव्यपूर्तिरुक्ता।

रुद्राय। ईशानाय। उग्राय। भीमाय इति शर्वाद्योजयुग्ममन्त्राः। अचलोक्षशृङ्गवेदिक्षेत्रखलनदीपुटसमुद्रतीर्थेभ्यः सम्भृता मृदः अनन्तादिमन्त्रैः भृशादिषु अन्तराळेषु क्रमात् पूरयेत्।

**पुनः गन्धयुक्ततैलादिसहित** पञ्चविंशतिद्रव्ये विंशतिसहितत्रिशते कलशे षड्विंशतिसूत्रे क्षेत्रे मध्ये पञ्चदशपूटैरष्टोत्तरशतोक्तमानुषकोणेषु त्यक्तघटचतुष्कं संयोज्य द्वादशोत्तरशतं कृत्वा तद्बहिः परितः वीथीं कृत्वा बहिः पुटचतुष्कैः दिक्षु द्वादशकं, कोणेषु षोडशकं, अन्तराळेषु त्रिशस्त्रिशः चतुष्काणि कुर्यात्। शेषपदानि मार्जयेत्। अत्र मध्ये द्वादशोत्तरशतं पञ्चविंशतिद्रव्यैर्यथोक्तं प्रपूर्य तद्बहिर्दिक्षु विदिक्षु अन्राळेषु तैलादिषोडश द्रव्यैः प्रपूर्य मृदामुत्तरदक्षिणादिपार्श्वक्रमात्[1] मूलमन्त्रेण गन्धोदकं प्रपूरयेत्। **कर्पूरादिभिर्गन्धैस्तैलादिभिश्च**- युक्तैः पञ्चविंशतिद्रव्यैः पञ्चसहिते पञ्चशते कलशे द्वात्रिंशत्सूत्रक्षेत्रे अन्तः पूर्ववत् पञ्चदशपुटैः नवोत्तरशतं कृत्वा पुनस्तद्बहिः परितः वीथीं कृत्वा तद्बहिः त्रिपुटैः दिक्षु विदिक्षु च अष्टौ नवकानि प्रकल्प्यान्तराळेषु त्रीणि त्रीणि त्रयाणि प्रकल्प्य तद्बहिः परितः वीथीं प्रकल्प्य तद्बहिस्त्रिपुटैः पृथग्दिक्षु प्रत्येकं सप्त सप्त (एवं अष्टविंशति) नवकानि कल्पयेत्। तत्र मध्यस्थनवोत्तरशतं पूर्ववत् पञ्चविंशतिद्रव्यैः पूरयेत्। तद्बाह्यस्थितनवकादिकानि च पूर्ववत् तैलादिषोडशद्रव्यैः मृत्पार्श्व स्थितगन्धैश्च पूरयेत्। तद्वाह्ये कर्पूराद्यष्टविंशतिद्रव्यैः चतुर्दिक्षु अष्टाविंशतिनवकानि क्रमेण पूरयेत्। तत्र पूर्वभागे सप्तसु नवकेषु ईशानादि क्रमेण पर्जन्यादिक्रमेण[2] वा तत्पुरुषेण इन्दु (कर्पूर) वानरपयोदपटीर (चन्दन) वारिकुष्ठागरूणि एतानि द्रव्याणि पूरयेत्। पुनः दक्षिणभागे अग्न्यादि वा पूषादि वा क्रमेण अघोरेण वैडूर्यनीलमाणिक्य[3] विद्रुमवज्रमुक्तागारुत्मतानि द्रव्याणि पूरयेत्। पुनः पश्चिमभागे निर्ऋत्यादि वा दौवारिकादि वा क्रमेण सद्योजातमन्त्रेण न्यग्रोधपिप्पलशिरीषनिवाक[4] पलाशबिल्वाम्राणां त्वग्भिः पृथक्कषायं कृत्वा क्रमेण पूरयेत्। पुनरुत्तरभागे वाय्वादि वा नागादि वा क्रमेण वामदेवेन गोधूमशालियवमुद्गतिलप्रियङ्गुनिष्पावबीजानि पूरयेत्। पुनः द्रव्यं विना शुद्धजलैः[5] पूरयित्वा पल्लवादिकं न्यस्य यथाविधि सम्पूज्याधिवास्य पुनः प्रातः अभिषेककाले पञ्चविंशतिद्रव्याणां तत्तदुक्तमन्त्राः।

1 मृदां पार्श्वद्वयस्थानि गन्धोदकैः पूरयेदित्यर्थः। 2 विवरणोक्तत-द्गुणातद्गुणसंविज्ञानवहुव्रीहिपक्षद्वयमुक्तम्। 3 मूले मणीत्युक्तावपि विवरणे माणिक्यमित्युक्तं अत्रापि तथैवोक्तम्। 4 नीवाकः प्लक्षः मूले सप्तरु प्लक्षोक्तेः। 5 शिष्टानि।

तैलादीनां, गन्धसहिततैलादीनां कर्पूरादिसहितानां च इति त्रिविधानां कलशानां पूरणे**[णोक्ताः]** मन्त्राः, शर्वाद्यनन्तादिमूलततपुरुषाद्याः, अभिषेकमन्त्राः स्युः। शिवे- सप्तदशद्रव्यैः पञ्चविंशतिद्रव्यैश्च तैलादिद्रव्यैः गन्धसहिततैलादिद्रव्यैः कर्पूरादिद्रव्यैश्च इति पञ्चधा कलशप्रकारः स्यात्।

**पञ्चविंशतिद्रव्यैरेव दुर्गायां स्नपनं विधीयते**- तत्र कलशानां संख्याः पञ्चप्रकारश्च सामान्येनोक्ताः। द्रव्यभेदं मनुभेदं अभिषेकपूरणक्रमभेदं अभिषेकभेदं च वक्ष्ये। ब्रह्मकलशे गन्धपुष्पौषधिफलरत्नस्वर्णजलैः पूरयेत्। दैविके ईशकोणमारभ्य प्रदक्षिणक्रमेण सक्तुजलभस्ममधुतैलगुळाश्वत्थदूर्वाजलरजतानि ॱॱमान्नं न्यसेत्। पुनः मानुषे दिग्विदिगन्तराळेषु पाद्यार्घ्यपञ्चगव्य-गोमूत्रगोमयक्षीरदध्याज्यकुशोदककषायरत्नस्वर्णधातुगन्धपुष्पफलानीति षोडश द्रव्याणि न्यसेत्। दूर्वासिंहीकुशशतगुण व्याघ्र्यः ओषध्यः। राजिश्यामाकनवदूर्वाः पाद्यद्रव्यम्। कुशाग्रराजीक्षीराक्षततिलगन्धपुष्पाणि अर्घ्यद्रव्याणि। क्षीरि[1] खदिराणां त्वग्भिः कषायम्। वज्रमुक्तावैडूर्यविद्रुममाणिक्यमहानीलनील-ब्रह्मरागात्मकानि अष्टरत्नानि। श्यामरसहरितालाञ्जनगोरो-चनसौराष्ट्रीगैरिकसीसमनोह्वानीति नव धातुद्रव्याणि। पटीराम्नायसकपिजटारोचनेन्दुचोराख्याणि अष्टगन्धद्रव्याणि। नन्द्यावर्तबकुलचम्पकाशोकनागमल्लिकाजातीकुसुमानीति सप्त पुष्पाणि। नारङ्गबदरकदलीबीजपूरमातुलङ्गाख्यानि षट् फलानि[2] इति सङ्घातद्रव्याणि।

**अभिषेकमन्त्राः**- पाद्ये-इदं विष्णुः. . . . जा। अर्घ्ये-आपोहिष्ठा. . . . त। पञ्चगव्ये- अग्निमीळे. . . . वे। गोमूत्रे-तत्सवितुः. . . . द। गोमये-गन्धद्वारां. . . . से। क्षीरे–

---

1 **प्लक्षौदुम्बरवटाश्वत्थाः क्षीरिणः। द्रव्यविषये मूलव्यत्यासः क्वचित्** परिदृश्यते। **पारिभाषिकाष्टगन्धद्रव्यप्रतिपदार्थाः**- रुक्-कुष्ठं कङ्कुष्ठं वा। वारि हिरिबेरं मुडिवाळमिति भाषायां प्रसिद्धम्। घुसृणं-कुङ्कुमं कुङ्कुमकेसरीति भाषायाम्। मं-जटामांसी। अयः-गन्धविशेषः, अगिलुगन्ध इति भाषायाम्। पटीरः- चन्दनः, श्रीगन्धेति भाषायाम्। शशी-कर्पूरः, पच्चकर्पूर इति भाषायाम्। कीशः- गजशिशुप्रथमप्रच्युतमलं, गन्धपर्णी इति। अब्दः-मुस्ता, भद्रमुष्टीति प्रसिद्धम्। सेव्यं- लवञ्चेति प्रसिद्धम्। चोरः- कचोरेति प्रसिद्धम्। एतत्पर्यायशब्दा अपि प्रयुज्यन्ते। 2 दाडिमीभव्यरम्भानाळिकेरबदरीजातिफलानि इति वक्तव्यम्। क्षीरिवृक्षपलाशैर्भरम।

आप्यायस्व . . . . सु। दध्नि-दधिक्राव्णः . . . . न। आज्ये-इषेत्वोर्जेत्वा . . . . वा। कुशोदके-तत्सवितुः . . . . म। कषाये-अश्वत्थेवो . . . . सो। रत्नजले-त्र्यम्बकं . . . . म। स्वर्णे-हिरण्यगर्भः . . . . म। धातौ- मानस्तोके . . . . रा। गन्धजले-शन्नोदेवी[1] . . . ती। पुष्पे फले च- पूष्पावतीः . . . . य, फले तो इति विशेषः। इति मानुषे षोडश घटैरभिषेकः। अथ पुनः सक्तुजले-सुमित्र्यानः . . . . नि। भस्मजले- हूतिश्रीः[2] . . . . द। मधुनि-मधुवाता . . . . हा। तैले- विश्वानिनो . . . . ति। गौळे-अग्नेत्वम्पारया . . . . वे। पैप्पले- अश्वत्थेवो . . . . दः। दूर्वोदके-शन्नोदेवी . . . . स। रजतजले- अग्नेत्वम्पारया . . . . नः। ब्रह्मकलशे- चित्तिः स्रुक् . . . नृम्णन्धां स्वाहा। पर्षदति दुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः। इति परिखण्डद्रव्यकलशेषु त्रिष्टुभः एकैकाक्षरयुक्ता इदं विष्णुरित्याद्याः चतुर्विंशतिमन्त्राः। ब्रह्मकलशे- पर्षदित्यादि युक्तश्चित्तिः स्रुङ्मन्त्रः। परिखण्डपरिकलशैः पञ्चदुर्गाभिः स्नपयेत्। ब्रह्मजज्ञानमिति मन्त्रेणान्तराऽन्तरा अभिषेकं कुर्यात्[3] । भूतिः श्रीः पीङ्गलो बभ्रुर्भूतिर्विष्णुः सनातनः। अग्निमारुतयो र्भूतिर्भूतिस्सेन्द्राश्च देवताः इति दुर्गायां स्नपनप्रकारः।

**सुब्रह्मण्ये कलशविधिर्लिख्यते**- तत्र बुधोत्तमा नवविधकलशप्रकारमाहुः। तद्यथा- उत्तमत्रितयं पुनरप्युत्तमद्वयं, मध्यमद्वयं, अधमद्वयमिति नवविधम्। प्रथमं पञ्चशतकलशैः १। द्वितीयं द्विशतसहितपञ्चाशत्कलशैः २। तृतीयं शतसहितपञ्चविंशतिकलशैः ३। चतुर्थं नवोत्तरशतकलशैः ४। पञ्चमं सप्तोत्तरनवतिकलशैः ५। इति उत्तमपञ्चकविधिः। पुनरेकाशीतिकलशैः षष्ठं ६। पञ्चषष्टिकलशैः सप्तमं ७। इति मध्यमद्वयविधिः। एकोनपञ्चाशत्कलशैरष्टमं ८। पञ्चविंशतिकलशैर्नवमं ९। इत्यधमद्वयविधिः। अत्र पृथग्द्रव्यभेदाः स्युः। इति नवविधकलशसंख्याप्रकारः।

---

1 शन्न इन्द्राग्नीति विवरणे अयमेव युक्त इति भाति। दूर्वोदके शं नो देवीति मन्त्रस्य मूलोक्तेः। 2 भूतिरिति मूले, अत्राप्युत्तरत्र भूतिश्रीरिति मन्त्रपाठो दृश्यते अतो लेखकभ्रमः स्यात्। 3 अत्र दुर्गायां पूरणमन्त्रा नोक्ताः। तत्र ब्राह्मे- मूलं दैविके अष्टसु अष्टौ मूलाक्षराणि मानुषे दिक्षु-' हृदयादि, अस्त्रं विदिक्षु, नेत्रं अन्तराळेषु इति विवरणसम्मतप्रक्षेपश्लोकात् भाति। सप्तदशद्रव्यस्नपने- विष्णुवदेव, किन्तु ब्राह्मे- विष्णुस्थाने दुर्गा, अभिषेकमन्त्रे निजमूलमन्त्रयोग इति विशेषः।

घटानां पञ्चशतकलशे त्रिंशत्सूत्रसहिते क्षेत्रे समन्तात् पञ्च पञ्चपुटान्तरे चतस्रो वीथिकाः कृत्वा पञ्चविंशतिखण्डानि प्रत्येकं पञ्चविंशतिपदानि कृत्वा तत्र मानुषकोणेषु बहिः कोणेषु एकैकं पद्मं कृत्वा षड्विंशतिकलशान् कुर्यात्। अष्टान्तराळानि नवकानि कुर्यात्[1] एवं पञ्चशतकलशे पद्म प्रकारः। मूलेन सर्वत्र पूरणं स्यात्। ब्रह्मकलशे पञ्चगव्येन पूरयेत्। दैविके प्रागादि दिक्षु आज्यं क्षीरं दधि मधु, अग्न्यादि कोणेषु तैलं गुळं इक्षुजलं तीर्थजलं च पूरयेत्। तत्र पञ्चगव्यपूरणानन्तरं तत्परितोऽष्टकलशेषु दिग्विदिक्क्रमात् रत्नाष्टकं पूरयेत्। तत्परितो दिग्विदिक्षु पर्जन्याद्यदित्यन्तिमेषु अन्तरालेषु च शुद्धजलैः पूरयेत्। इति सर्वत्र द्रव्यम्। पूर्वखण्डे आज्यपूरणानन्तरं तत्परितः पूर्ववत् वीजाष्टकं, तत्परितः पूर्ववत् शुद्धजलैश्च पूरयेत्। दक्षिणखण्डे क्षीरपूरणानन्तरं तत्परितः पूर्ववत् कषायाष्टकं शुद्धजलं च पूरयेत्। पश्चिमखण्डे दधिपूरणानन्तरं तत्परितः पूर्ववत् पुष्पाष्टकं, शुद्धजलं च, उत्तरखण्डे मधुपूरणानन्तरं फलाष्टकं शुद्धजलं च, अग्निखण्डे तैलपूरणानन्तरं गन्धाष्टकं शुद्धजलं च, निर्ऋतिखण्डे-गुळपूरणानन्तरं लोहाष्टकं शुद्धजलंच, वायुखण्डे इक्षुजलपूरणानन्तरं ओषध्यष्टकं शुद्धजलं च, ईशखण्डे तीर्थजलपूरणानन्तरं जलाष्टकं शुद्धजलं च पूरयेत्। इति ब्राह्मे दैविके च पूरणक्रमः। पुनर्मानुषे प्रागादिदिक्षु धात्री[2] रात्री आचाममर्घ्यमिति। अग्न्यादिकोणेषु कुशोदकं काशं सेव्यं दूर्वा च[3] पूरयेत्। तत्तद्द्रव्यपूरणानन्तरं तत्तदुपघटान् उक्तक्रमात् शुद्धजलैः पूरयेत्। तत्तदवसरे कोणगतकलशं च शुद्धजलेन पूरयेत्। ततः पर्जन्याद्युदित्यन्तिमेषु अन्तराळस्थनवकेषु एकैकं अङ्कुरं न्यसेत्[4]। पद्मरागनीलमुक्ताचन्द्रकान्तकुरुविन्दवैडूर्यप्रवाळवज्राणीति रत्नाष्टकम्। यवाः तिलाः गोधूमाः सर्षपाः शालयः मुद्गाः माषाः नीवाराः इत्यष्टबीजानि। वटोदुम्बराश्वत्थप्लक्षाम्रपलाशशिरीषमधुकानामष्टवृक्षाणां त्वग्भिः कषायाष्टकम् उत्पलकल्हाराम्बुजकुमुदसौगन्धिककशेरूत्पलद्वयानि[5] इत्यष्टपुष्पाणि। पुष्पालाभे रक्तकरवीरम्। मातुलङ्गाम्रबिल्वजम्बूपनसदाडिमभव्यकदलीफलानीति अष्टफलानि। कुङ्कुमायशशशि (कर्पूर) कुष्ठकीशपाथोमुरमलयजाख्याष्टगन्धाः।

1 शिष्टानि सर्वखण्डानि पञ्चविंशतिकान्येव। 2 धात्री रात्रीपिष्टमिति मूले।
3 सेव्यदौर्व्ययोर्व्यत्यासपाठो मूले दृश्यते। दौर्व्यकं सेव्यकं चेति। एवं च क, ख पुस्तकद्वयेऽपि व्यत्यासः क्रियासारसम्मतः ⁄? 4 क्षीरराजीयवतिलकुशदध्यक्षतैरर्घ्यम्। तक्कोलजातीलवङ्गैराचामम्। शैवं पाद्यम्। 5 रक्तोत्पलं नीलोत्पलं च।

सुवर्णरजतताम्रायस्त्रपुसीसकांस्यपित्तलाख्यं लोहाष्टकम्। सुवर्चलासहदेवीवचाब्राह्मीशङ्खपुष्पीशतावरीविष्णुक्रान्तीलक्ष्मीः इत्यौषध्यष्टकम्। सागरजनदीजनिर्झरजवापीजतटाकजह्रदजकूपजसेतुजान्यष्टजलानि मन्त्रदीक्षितैराहर्तव्यानि[1]। न्यग्रोधोदुम्बराश्वत्थप्लक्षबिल्वपलाशशम्यपामार्गाणामङ्कुराष्टकम् इति पञ्चशतकलशप्रकारः। वेदीक्षेत्रगजशृङ्गवृषशृङ्गगिरिवल्मीकनदीसमुद्रेभ्य उत्पन्नाः अष्टमृदः। **द्विशतोत्तरपञ्चाशत्कलश[2]विधिं वक्ष्ये**- अष्टादशसूत्रैः सप्तदशपुटं क्षेत्रं कृत्वा पञ्चपुटान्तरे वीथीं कृत्वा पञ्चविंशतिकोष्ठयुक्तानि नवखण्डानि विधाय प्रागादिखण्डेषु बहिः पञ्च पञ्च कलशान् संयोज्य त्रिंशत्कलशान् कुर्यात्। कोणखण्डेषु बहिरेकैकं पदं संयोज्य षड्विंशतिकलशान् कुर्यात्। इतिद्विशतोत्तरपञ्चाशत्कलशे पद्मप्रकारः। तत्र ब्राह्मे पञ्चगव्यं तत्परितः[3] पद्मरागाष्टकं, पूर्वखण्डमध्ये आज्यं तत्परितः यवाद्यष्टकं, दक्षिणखण्डमध्यकलशे क्षीरं तत्परितः दिग्विदिक्षु वटौदुम्बरादि कषायाष्टकं, पश्चिमखण्डमध्यकलशे दधि तत्परितःदिग्विदिक्षु उत्पलादि पुष्पाष्टकं, उत्तरखण्डमध्यकलशे मधु तत्परितः मातुलङ्गादि फलाष्टकं, अग्निखण्डमध्यकलशे तैलं तत्परितः कुङ्कुमादि गन्धाष्टकं, निर्ऋतिखण्डमध्यकलशे गुळं तत्परितः स्वर्णादि लोहाष्टकं, वायुखण्डमध्यकलशे इक्षुरसं तत्परितः सुवर्चलाद्योषध्यष्टकं, ईशखण्डमध्यकलशे तीर्थजलं तत्परितः समुद्रादि जलाष्टकम्। एवं ब्राह्मे दैविके च संपूर्य वहिःसंयोजितपञ्चकानेककांश्च मानुषान् सङ्कल्प्य धात्र्याद्यष्टद्रव्याणि दिक्कोणक्रमेण पूरयेत्। पुनः द्रव्यकुम्भान् वर्जयित्वा शेषान् शुद्धजलैः पर्जन्याद्युदित्यन्तिमं पूरयेत् इति द्विशतोत्तरपञ्चाशत्कलशप्रकारः। **शतोत्तरपञ्चविंशतिकलशविधिं वक्ष्ये**- तत्र पूर्वोक्तपद्मे बहिः संयोजितानि दिक्कोणगतपञ्चैककानि पदानि पुनः कोणगतानि खण्डान्यपि त्यक्त्वा मध्ये चतुर्दिक्ष्वपि पञ्चविंशतिशः पदानि कुर्यात्। इति पद्मप्रकारः। पूरणे मध्यपञ्चविंशतौ पञ्चगव्यपद्मरागाष्टकाभ्यां, पूर्वपञ्चविंशतौ आज्ययवाद्यष्टकाभ्यां, याम्यपञ्चविंशतौ क्षीरवटाद्यष्टकाभ्यां, पश्चिमपञ्चविंशतौ दध्युत्पलाद्यष्टकाभ्यां, उत्तरपञ्चविंशतौ मधुमातु[illegible]द्यष्टकाभ्यां च सम्पूर्य द्रव्यवर्जितान् शेषान् दिग्विदिगन्तगळेषु पर्जन्याद्यु[illegible]न्तिमं पूरयेत्, अथ शतोत्तरपञ्चविंशतौ विकल्पः, तं वक्ष्ये। त्रयोदशपुटे क्षेत्रे बहिरारभ्य चतुर्थपुटेन परितः वीथीं कृत्वा कोणेषु

1 अभावे तद्भावनया शुद्धजलानि ग्राह्याणि। 2 एकोनपञ्चाशदधिकशतद्वयं इत्यर्थः।
3 दिग्विदिक्क्रमादित्येव।

एकैकं पदं संयोज्य दशकं कुर्यात्। दिक्षु पञ्चदशकं मध्ये पञ्चविंशतिरिति पद्मप्रकारः। अत्र गव्यपद्मरागाद्यष्टकं, आज्ययवाद्यष्टकं, क्षीरवटाद्यष्टकं, दध्युत्पलाद्यष्टकं, मधुमातुलङ्गाद्यष्टकं, तैलकुङ्कुमाद्यष्टकं, गुळसुवर्णाद्यष्टकं, इक्षुसुवर्चलाद्यष्टकं, तीर्थजलसमुद्रजलाद्यष्टकं मध्यदिग्विदिक्षु पूरयेत्। शुद्धजलैः[1] पूर्ववत्पूरयेत्। इत्युत्तमेऽधमप्रकारः। **अथाष्टोत्तरशते सप्तनवत्यां च** पदक्लृप्तिः- पूर्ववत् क्षेत्रं वीथीं च कृत्वा कोणस्थनवकेषु त्रिपदानि मार्जयित्वा षट्कं कुर्यात्। दिक्षु-पूर्ववत् पञ्चदशकाः मध्ये पञ्चविंशतिरिति नवोत्तरशतम्। सप्तनवत्यां बहिर्दिक्षु चत्वारि पदानि मार्जयित्वा एकादशकं, कोणेषु पदद्वयं मार्जयित्वा सप्तकं च कुर्यात्। अन्तः पूर्ववत्पञ्चविंशतिः इत्युत्तमद्वये पद्मप्रकारः। अत्र पूरणे ब्राह्ममण्डलमध्यकलशे मूलेन रत्नाद्यष्टकं तद्बहिर्दिग्विदिक्षु पञ्चगव्यं क्षीरं दधि आज्यं मधु गुळं इक्षुजलं तैलं इति, पुनः तद्बहिः हरिद्राजलं धात्रीजलं फलोदकं कषायं कुशजलं काशजलं सेव्यजलं[2] दूर्वाजलं[2] इति दिग्वदिक्षु एवं सप्तदशद्रव्याणि प्रपूर्य तत्र पर्जन्याद्यन्तराळेषु चन्दनकुङ्कुमौ आयसवानरौ मुरमांसौ[3] जलमुस्ते अम्बुमुक्खचोरे एलाशशि[4] जातीकुष्ठे लवङ्गत्वक्फले इति षोडश गन्धाः। तेषु द्वयं द्वयं पर्जन्याद्यन्तराळेषु न्यसेत्। पुनः बहिर्दिग्विदिक्षु खण्डेषु न्यग्रोधाद्यङ्कुरान् न्यसेत् इत्यष्टोत्तरशते सप्तनवत्यां च पूरणप्रकारः। **पुनरेकाशीतिकलशे** - एकादशपुटक्षेत्रे प्रसिद्धवत् नव नवकानि कुर्यात्। पञ्चषष्टिकलशे एकादशपुटे क्षेत्रे पूर्ववन्नवकानि कृत्वा बहिरष्टसु नवकेषु पदद्वयं मार्जयित्वा अष्टसप्तकानि कुर्यात् इति मध्यमद्वन्द्वके पदक्लृप्तिः। तत्र व्रह्मकलशे आज्येन पूरयेत्। तद्बहिर्दलकलशेषु दिग्विदिक्क्रमेण गोमूत्रं गोमयं क्षीरं दधि गोरोचनजलं कौशं रत्नं गन्धं पुनः बहिरष्टसु खण्डेषु दिग्विदिक्क्रमात् मधु गुळं कषायं बीजानि मृज्जलं तिलं पुष्पाणि स्वर्णं इत्यष्टद्रव्याणि। एवं मध्यमद्वन्द्वके सप्तदशद्रव्यैःपूरयेत्। **एकोनपञ्चाशत्कलशे** - नवपुटक्षेत्रे मध्ये नवकं वहिर्दिक्षु षट्कं कोणेषु चतुष्कं कुर्यादिति। पुनः पञ्चविंशतिकलशे मध्ये नवकं बहिर्दिक्षु त्रिकं कोणेष्वेकैकं कुर्यात्। इत्यधमद्वन्द्वे पदक्लृप्तिः। अत्राधमद्वन्द्वे व्रह्मकलशे पञ्चगव्यं तद्दलकलशेषु दिक्कोणक्रमात् मधु क्षीरं घृतं दधि गुळं इक्षुजलं तैलं नाळिकेरजलं इत्यष्टद्रव्याणि न्यसेत्। तद्बहिरष्टसु खण्डेषु दिक्कोणक्रमात् पाद्यं अर्घ्यं आचमनं कषायं रत्नजलं पल्वलजलं[5] गन्धजलं

1 शिष्टानि। 2 अत्रापि दौर्व्यसेव्ययोर्व्यत्यासो दृश्यते। 3 मांस्यौ पा। 4 शशिनौ।
5 फलजलमिति मूले पल्वलजलमिति लेखकप्रमादः स्यात्।

पुष्पजलं इत्यपि चाष्टौ द्रव्याणि न्यसेत्, इत्यधमद्वन्द्वे सप्तदशद्रव्याणि। इति नवविधकलशे पूरणप्रकारः। सर्वब्रह्मकलशे गायत्रीमन्त्रः[1]। द्रव्यपूर्णपरिकलशेषु मूलमन्त्रः। अवशिष्टशुद्धजलपरिपूर्णकलशेषु अङ्गमन्त्रः। मध्यादिपूरणक्रमात् स्नानप्रकारः। अथवा ब्रह्मकलशे मूलषण्मुखविद्या[2] तमर्वन्तमित्यादि सूत्रोक्तमन्त्रः। परिखण्डब्रह्मघटेषु मूलमन्त्रः। द्रव्यपुर्णपरिघटेषु गायत्रीमन्त्रः। अवशिष्टशुद्धजलपूर्णपरिकलशेषु हृदयमन्त्रः। पञ्चशतपूरणार्थं बहिःकोणेषु य उपघटो योजितः स्वखण्डावसाने तेन तैनैवाभिषेचयेत्। पुनः पञ्चाशत्संयुक्तद्विशतकलशे बहिर्दिक्कोणेषु यत्पञ्चकमेकमेकं च संयुक्तं तस्य खण्डैक्ये सत्यपि (तथापि) मानुषांशद्रव्यपूरणत्वात् तैः संयुक्तकलशैः मानुषावरणत्वात् पृथग्देवमभिषेचयेत् इति नवधा कलशप्रकारः।

**विघ्नेशे कलशप्रकारः**- तत्र कलशसंख्यां पद्मप्रकारं च शिवोक्तवत् कुर्यात्। तत्र ब्रह्मकलशे मुक्ताफलाद्ययस्कान्तानि शङ्करनारायणोक्तद्वादशरत्नानि पूरयेत्। पुनः दैविके मानुषे च दिक्कोणक्रमात् पाद्यादिषोडशद्रव्यैः पूरयेत्। इति सप्तदशद्रव्यपूरणविधिः। पुनः पञ्चविंशतिद्रव्ये मानुषान्तराष्टकेषु गुळाद्यष्टद्रव्यैः पूरयेत् इति पञ्चविंशतिद्रव्यपूरणविधिः। तत्र पाद्यं अर्घ्यं आचमनीयं क्षीरं दैविके दिक्षु। दधि घृतं मधु पञ्चगव्यं दैविके कोणेषु। फलं भक्ष्यं यवं व्रीहीन् मानुषे दिक्षु। तिलं रत्नं सुवर्णं विद्रुमं मानुषे कोणेषु। इति सप्तदशद्रव्याणि। पुनः गुळं पुष्पजलं दूर्वाजलं धातुजलं मृज्जलं कुशजलं मुक्तारत्नं नाळिकेरक्षीरं[3] इत्यष्टद्रव्याणि अन्तराळाष्टकेषु पूरयेत्। इति पञ्चविंशतिद्रव्याणि तत्तद्देवतामन्त्रैः पूरयेत्। ब्रह्मकलशे गणेशाय नमः। पुनः पाद्यादिषु पितृभ्यो। सरस्वत्यै। स्वाहायै। सोमाय। रुद्राय। अग्नये। गुहाय। सावित्र्यै। गणेशाय। गजास्याय। वायवे। विश्वेभ्यो देवेभ्यो। यमाय। वैश्रवणाय। ब्रह्मणे। रवये १६। दुर्गायै। विष्णवे। लक्ष्म्यै। सप्तऋषिभ्यो। पृथिव्यै। अग्नये। वरुणाय। सोमाय इति द्रव्यदेवताः पूर्णे प्रोक्ताः। अथ कलशद्रव्याणि मूक्ताफलादीनि शिवनारायणोक्तानि स्फटिकरहितानि द्वादशरत्नानि। पुनः पाद्यं, अर्घ्यं, आचमनं, पुष्पं, फलं, रत्नमिति षड्द्रव्याणि (शैलमृत्स्नादि) शिवोक्तानि स्युः। धातवः श्यामादिदुर्गोक्ताः। पृथुकापूपलड्डुकशष्कुलीभिः भक्ष्यद्रव्यम्। वेदिक्षेत्रगजोक्षशृङ्गगिरिवल्मीकमूषिकालयतीर्थानामष्टमृदः। इति कलशद्रव्याणि। **पञ्चविंशतिद्रव्याणां**

---

1 अत्र गायत्री मूलमन्त्रयोर्व्यत्यासः मूलसम्मतः इति भाति। 2 उपचारः।
3 उभयत्रापि जलमिति (रत्नजलं नाळिकेरजलं) भवितव्यम्।

**मन्त्राःलिख्यन्ते**- इदं विष्णुः. . . .सुरे १।आपोहिष्ठा. . . .चक्षसे २। आपः पुनन्तु. . . .स्वाहा ३ । आप्यायस्व. . .गये ४। दधिक्राव्णो. . . . रिषत् ५। तत्सवितुः. . . .दयात् ६ । मधुवाता. . . .न्तुनः ७। आग्निमीळे . . . .तमम् ८। मानस्तोके. . . .वामहे ६। मूलमन्त्रः १०। ओषधीरिति मातरः. . . . . पूरुष ११ । आशुः शिशानो. . . .मिन्द्रः१२। पितरः पितामहाः. . . . हूत्याम् १३। हिरण्यवर्णाः. . . . भवन्तु १४। ब्रह्मजज्ञानं. . . .विवः १५। रक्षोहणं. . . .नक्तं १६। अग्नेत्वं पारया. . . .शंयोः १७ । पुष्पावतीः. . . . यिष्णवः १८। शन्नोदेवीः. . . .नः १६। देवस्यत्वा. . . .षिंचामि २०। उद्धृतासि. . . .ष्ठितम् २१ । अग्न आयाहि. . . .बर्हिषि २२। समुद्रं गच्छ स्वाहा २३। याः फलिनीर्या . . . .हसः २४। इति तत्तद्देवतायुक्ताः परिकलशमन्त्राः। ब्रह्मकलशे तु गणानान्त्वा. . . .सादनम्। गणेशाय नमः इति मन्त्रः। एवं पञ्चविंशतिद्रव्यैः सप्तदशद्रव्यैर्वा विघ्नेशमभिषेचयेत्। इति विघ्नेश्वरकलशप्रकारः। विघ्नेशे अष्टगन्धं शैवम्।

**शास्तरि कलशप्रकारो लिख्यते**- तत्र कलशसंख्या सामान्येनोक्ता। पद्मप्रकारो वैष्णवोक्तः शिवोक्तो वा। ब्रह्मकलशे पाद्यद्रव्येण पूरयेत्। दैविके दिग्विदिक्षु अर्घ्यं, आचमनं, पञ्चगव्यं, गोमूत्रं, क्षीरं, दधि, आज्यं, मधु इत्यष्टद्रव्याणि। पुनःमानुषे दिग्विदिक्षु कषायं, फलं, मार्जनं, मृदं, सक्तुजलं, गन्धजलं, पुष्पजलं, यवजलं १६। पुनरन्तराळेषु क्रमेण गुळं, इक्षुजलं, नाळिकेरक्षीरं, नाळिकेरजलं, रत्नं, लोहं, तीर्थजलं, अक्षतजलं इति षोडश द्रव्याणि पूरयेत्।

**द्रव्यपूरणदेवताः लिख्यन्ते**- पितृभ्यो नमः इति ब्रह्मकलशे पूरयेत्। पुनरर्घ्यादि परिखण्डदेवताः- श्रियै। सरस्वत्यै। सावित्र्यै। गायत्र्यै। सोमाय। रुद्राय। अग्नये। स्कन्दाय। विश्वाय, विश्वेभ्यो देवेभ्यो नमः इति वा। विघ्नेशाय। पृथिव्यै। ज्येष्ठायै। इन्द्राय। सप्तऋषिभ्यो। वायवे। नरसिंहाय। दुर्गायै। श्रीधराय। श्रीधराय। ब्रह्मणे। वैश्रवणाय। पुरुषाय। निर्ऋतये। पराय[1]। इति पञ्चविंशतिद्रव्यदेवताः। अष्टगन्धनिशाचूर्णाक्षतपूष्पतिलैः पाद्यं ब्रह्मकलशे स्यात्। पुनः दैविकादिषु क्रमात् सर्षपतिलक्षीरकुशाष्टगन्धपुष्पैरर्घ्यं, लवङ्गपद्माष्टगन्धजलैः आचमनं, क्षीरित्वग्भिः कषायं। रात्रिः ऐन्द्री अक्षतं

1 परपुरुषाय।

गन्धः पुष्पं सदाभद्रं कुशाग्रं एतैर्मार्जनम्। क्षेत्राद्रिवेदिवृषशृङ्गनदीद्वितीगणां मृदः। ·ाहानि विष्णूक्तानि। मुक्तावैडूर्यादि शिवोक्तानि विद्रुमसहितानि नवरत्नानि। गन्धपुष्प[1]फलानि शिवोक्तानि विष्णूक्तानि वा।

**स्नानमन्त्राः लिख्यन्ते**- षण्मन्त्रमूलप्रणवैः[2] पाद्यादि द्रव्यपूर्णघटैः पूरणक्रमात् अभिषेचयेत्। तत्तद्द्रव्यघटस्नपनानन्तरं तत्तत्खण्डगतशुद्धजलपूर्णघटैः पूरणक्रमादभिषेचयेत्। तत्र पञ्चगव्येन तत्सवितुरित्यादि पञ्चमन्त्रैः षण्मन्त्रादिभिश्च। गोमूत्रेण तत्सवितुः. . . .षण्मन्त्रादिभिश्च। क्षीरेण आप्यायस्व. . . .षण्मन्त्रादिभिः। दध्ना दधिक्राव्णः. . . .षण्मन्त्रादिभिः। आज्येन तेजोसि. . . .षण्मन्त्रादिभिः। मधुना मधुवाता. . . .षणमन्त्रादिभिः अभिषेचयेत्। पुनः षण्मन्त्रमूलप्रणवैरेव कषायादिषोडशद्रव्यैरभिषेचयेत्। अत्र पाद्यादिमध्वन्तिमैः नवद्रव्यैरधमकलशविधिः स्यात्। पुनः पाद्यादियवोदान्तिमैः सप्तदशद्रव्यैः मध्यमाभिषेकविधिः। पुनः पाद्याद्यक्षतजलान्तिमैः पञ्चविंशतिद्रव्यैरुत्तमाभिषेकविधिः। इति त्रिविधकलशेषु तत्तद्योग्यं घटसंख्यापद्मप्रकारादिकं कृत्वा एकेन विधिना शास्तारमभिषेचयेत्। इति शास्तरि कलशविधिः। एवं तत्र तत्रोक्तद्रव्यविन्यासं कृत्वा पञ्चगव्यादिप्रति[3]द्रव्यकुम्भेषु पल्लवादिकं न्यस्य पृथक्कृत्य शेषद्रव्यपूर्णघटान् तत्तत्परिकलशांश्च पूजितजलैः सम्पूर्य[4] पल्लवचक्रिकादिकं न्यस्य खण्डं प्रति पूरणक्रमेण स्वस्वमूलेनावाह्य सकलीकृत्य जलादिभिः सम्पूज्य निवेद्य प्रसन्नपूजां विधाय पूजां समाप्य व्याप्य लयाङ्गं कृत्वा रक्षां कुर्यात्। ब्रह्मकलशे वस्त्रद्वयेन वेष्टयेत्। एवमलङ्कृत्य सर्वान् कलशान् वस्त्रैर्दर्भैराच्छादयेत्। पुनरधिवासं कुर्यात्।

**अधिवासहोमविधिः**- गुरुकुण्डेऽग्निं जनयित्वा विष्णौ शङ्करनारायणे दुर्गायां च गुरुकुण्डात् पूर्वादिचतुर्दिक्षु कुण्डेषु अग्निं विहृत्य गुरुः मूर्तिपाश्च पञ्चाधिवासहोमान् कुर्युः। सुब्रह्मण्ये तथा गुरुकुण्डादग्निं विहृत्य पूर्वाग्नियमवरुणसोमेशान दिक्स्थकुण्डेषु निक्षिप्य सप्ताधिवासहोमान् कुर्युः। शिवविघ्नेशशास्तृषु गुरुकुण्डादग्निं विहृत्य अष्टदिक्षु चतुर्दिक्षु वा कुण्डेषु अग्निं निक्षिप्य पञ्च नव वा अधिवासहोमान् कुर्युः। अथ सर्वत्राल्पकलशविधौ स्वकुण्डे

---

**1 पुष्पं विष्णूक्तमेव युक्तं आर्यस्य पृयगुक्तेरिति भाति। 2 पूरणनाममन्त्रयोजनं कार्यम्। 3 द्रवेति युक्तम्। 4 एवं च घन द्रव्येऽभिषेकसिद्ध्यर्थं जलयोगः सिद्धः।**

एकमेवाधिवासहोमं गुरुः कुर्यात्[1]।

**कुण्डलक्षणमाह**- प्रागाद्यष्टदिक्षु चतुरस्रं, अश्वत्थपर्णवत्, अर्धचन्द्रवत्, त्रिकोणं, वृत्ताकारं, षडस्रं, पद्माकारं, अष्टास्रं इत्यष्टकुण्डानि रचयेत्। पञ्चहोमपक्षे तत्तद्दिग्भवानि कुण्डानि कुर्यात्। तत्र सुब्रह्मण्यशङ्करनारायणदुर्गासु सौम्यदिशि त्रिकोणकुण्डं कुर्यात्। सर्वत्र गुरुकुण्डं[2] चतुरस्रं नागस्थानं[2] कुर्यात्।

**अग्निविहरणविधिः**- गुरुकुण्डेऽग्निं जनयित्वा परिकुण्डेषु सह स्थलशुद्धिं कृत्वा शोषणादिकं स्वगृह्योक्तक्रमादुल्लेखनादिकं विष्टरन्यासं पीठपूजां शक्त्यावाहनं तत्पूजान्तं विधाय स्वस्वमन्त्रैरग्निं विहरेत्। **विहरणमन्त्रानाह**- सर्वत्र गुरुकुण्डे अग्निं दूतमिति उपस्थानं कुर्यात्। पुनः दुर्गायां पूर्वकुण्डे अग्निमीळे पुरोहितं इत्यग्निं विहरेत्। विष्णौ पूर्वकुण्डे अग्निनारयिमिति[3]। पुनर्द्वयोः दक्षिणकुण्डे त्वमग्नेद्युभिरिति। द्वयोः पश्चिमकुण्डे अग्न आयाहि वीतये इति। द्वयोरुत्तरे अग्निमग्निं हवीमभिरिति। इति दुर्गायां विष्णौ च विहरणप्रकारः।पुनः शिवे शङ्करनारायणे शास्तरि सुब्रह्मण्ये गणपतौ च स्वस्वहोममन्त्रैः अग्निं विहरेत्। अथ शिवादौ पक्षान्तरम्। सर्वत्र गुरुकुण्डे सप्तते अग्ने इत्युपस्थानं कुर्यात्। शिवे पूर्वाद्यष्टदिक्षु अग्निमीळे . . . . अग्निः पूर्वेभिः . . . . अग्निर्होता . . . . यदङ्ग . . . . उपत्वाग्ने . . . . सनः पितेव . . . . अग्निं दूतं . . . . अग्निमग्निं इत्यष्टौ विहरणमन्त्राः। शङ्करनारायणे सर्वत्र प्रणवेनाग्निं विहरेत्। शास्तरि-अग्निमीळे. . . . इत्यग्निं विहृत्य सर्वकुण्डेषु भूर्भुवःसुवरिति क्षिपेत्।सुब्रह्मण्ये- पूर्ववदुपस्थाय पूर्वकुण्डे सनत्कुमाराय नमः मूलद्वयं स्कन्दादिद्वाशनामानि सनत्कुमाराय नमः इति। आग्नेयकुण्डे भवपुत्राय नमः मूलद्वयं स्कन्दादिद्वादशनामानि भवपुत्राय नमः इति। दक्षिणकुण्डे स्कन्दाय नमः **मूलद्वयं स्कन्दादिद्वादशनामानि स्कन्दाय नमः** इति। पश्चिमकुण्डे बाणाय नमः मूलद्वयं द्वादशनामानि बाणाय नमः इति। उत्तरकुण्डे हेमचुडाय नमः मूलद्वयं द्वादशनामनि हेमचूडाय नमः इति। ईशकुण्डे भद्रसेनाय नमः मूलद्वयं द्वादशनामानि भद्रसेनाय नमः इति विहरणमन्त्राः। अथ गणपतौ- पूर्ववत् गुरुकुण्डेऽग्निं उपस्थाय प्रागाद्यष्टदिक्षु पण्मन्त्रान्ने गं गणञ्जयाय नमः। पुनः षण्मन्त्रान्ने गिं विघ्नेशाय इत्यष्टमन्त्रैर्विहरेत्। पुनः सर्वत्रान्वाधानादि कृत्वा इध्मात्पूर्वं[4] पीठं सम्पूज्य देवमावाह्य सकलीकृत्य सम्पूज्य

---

1 तथा च कलशाधिक्ये होमाधिक्यं सिद्धम्। 2 मुख्यपदे गुरुकुण्डं देवस्य शिरोभागे वा। 3 विष्ण्वादिषु अमन्त्रकमाधानं अथवा प्रणवो वा मन्त्रः स्यादिति विवरणे।
4 लक्षणसंहितायां पक्वात् पूर्वं पीठपूजाद्युक्तम् सम्प्रदायोऽपि तथैव।

नैवेद्यस्थाने इध्मादि चक्षुष्यन्तं कृत्वा **प्रणवव्याहृतिपीठमन्त्रैराज्यं हुत्वा स्वस्वमन्त्रेण पक्वं[1] हुत्वा** पूजामन्त्रैराज्यं हुत्वा स्वस्वमन्त्रेण पूर्णां हुत्वा स्वस्वमूलेनाष्टवारमाज्यं हुत्वा पूर्णां जुहुयात्।

**पुनः शिवे गुरुकुण्डे**- ईशानमन्त्रेण समिदादि दशद्रव्यं हुनेत्। पूर्वाद्यष्टदिक्षु तत्पुरुषहृदयाघोरशिखासद्योजातकवचवामदेवशिरोमन्त्रैः समिदाज्यचरुलाजसर्षपतिलयवव्रीहिसक्तुघृतानीति दशद्रव्याणि सर्वकुण्डेषु ससम्पातं होमयेत्। अन्तराऽन्तरा अवसाने च व्योमव्यापिदशाक्षरेण ससम्पातं पूर्णाहुतिं कुर्यात्। पुनः स्विष्टकृदादिहोमशेषं समाप्य सम्पूज्य पूजां समाप्य रक्षां कुर्यात्। **विष्णौ गुरुकुण्डे**- मूलेन, पूर्वादिदिक्षु अं[2] ओं नमो भगवते वासुदेवाय अं। आं ओं नमो भगवते सङ्कर्षणाय आं। अं ओं नमो भगवते प्रद्युम्नाय अं। अः ओं नमो भगवते अनिरुद्धाय अः इति मन्त्रैः समिदाज्यचरुलाजसर्षपयवतिल-व्रीहिघृतानीति नव द्रव्याणि सर्वकुण्डेषु होमयेत्। द्वादशाक्षरेणान्तराऽन्तरा अवसाने च सम्पातसहितां पूर्णां जुहुयात्। स्विष्टकृदादिहोमशेषं समापयेत्।

**शङ्करनारायणे गुरुकुण्डे**- चतुर्दिक्स्थकुण्डेषु च पलाशसमिदाज्यह-विराज्यतिलसर्षपयवलाजघृतानीति नवद्रव्यैः चतुर्भिर्वेदाद्यैः[3] भूरादिचतुर्भिः मूलेन इति नवभिर्मन्त्रैः क्रमात् सम्पातसहितं जुहुयात्। अन्तराऽन्तरा मूलेन पूर्णां जुहुयात्। पुनः स्विष्टकृदादि कुर्यात्[4]। **दुर्गायां**- विहरणानन्तरं सर्वैः महान्वाधानादिकं विधाय इध्मात् प्राक् पीठं सम्पूज्य देवीमावाह्य सकलीकृत्य सम्पूज्य निवेद्यस्थाने इध्मं हुत्वा आघारं चक्षुषी च हुत्वा प्रणवव्याहृतिपीठमन्त्रैः सकृत्सकृदाज्यं हुत्वा त्रिष्टुभा पक्वं हुत्वा पूजामन्त्रैः सकृत्सकृदाज्यं हुत्वा मूलेन पूर्णां हुत्वा मूलेनाष्टवारमाज्यं हुत्वा पूर्णां जुहुयात्। पुनः सर्वत्र पञ्चदुर्गाभिः सकृत्सकृदाज्यं हुत्वा गुरुकुण्डे त्रिष्टुभा पलाशसमिधो जुहुयात्। प्रागादिकुण्डेषु अग्निमीळे. . . . इषेत्वा . . . . अग्न आयाहि . . . . शन्नोदेवीरिति

---

**1 मूले- ईशे तत्पुरुषेण, दुर्गायां- त्रिष्टुभा, इतरेषु-निजगायत्र्या प्रभेशे व्याहृतियुक्तया गायत्र्या इत्युक्तं तथा च प्रभेशे व्याहृतेरनुवाक्यास्थानत्वेनोक्तेः इतरेषु देवेषु पक्वमन्त्रस्यैव द्विरावृत्तिः न तु व्याहृतिप्रवेशः इति भाति। 2 अत्र मूले केवलाद्यद्वितीयेत्याद्युक्तेः अ, अ, आ, आ, अं, अं, अः, अः इति क्रमात चतुर्मूर्तिसम्पुटीकरणं युक्तमिति भाति। 3 अग्निमीळे....इषेत्वोर्जेत्वा....अग्न आयाहि . शन्नोदेवीरिति वेदाद्याः। 4 ईश्वरे दिक्षु पलाशखदिराश्वत्थप्लक्षरौहिणबिल्वौदुम्बरकाश्मयः समिधः। मध्ये पालाश्यः। विष्णौ- चतुर्षु कुण्डेषु तोरणजाः पालाश्यो वा समिधः। मध्ये पालाश्यः। अश्वत्थौदुम्बरवटप्लक्षाः तोरणजाः।**

वेदादिमन्त्रैः पलाशपिप्पलखदिरबिल्वसमिधः जुहुयुः। पुनः सर्वे गुरुकुण्डे परिकुण्डेषु च त्रिष्टुभा आज्यं हविः यवान् व्रीहीन् तिलान् सर्षपान् दूर्वाश्च इति सप्तद्रव्याणि जुहुयुः। एवमष्टद्रव्याणि अन्तराऽन्तरा पूर्णाहुतिसहितं सम्पातसहितं च हुत्वा पुनः स्विष्टकृदादिहोमशेषं समापयेत्। **सुब्रह्मण्ये** - विहरणानन्तरं अन्वाधानादि सर्वं कृत्वा पूर्वाग्नियमवरुणोत्तरेशकुण्डेषु सनत्कुमारभवपुत्रस्कन्द-बाणहेमचूडभद्रसेनमन्त्रैः यथाक्रमं षट्षट् संख्यं आज्यं हुत्वा मूलमन्त्रद्वयेन[1] स्कन्दप्रोक्तद्वादशनामभिश्च सकृत्सकृदाज्यं हुत्वा मूलेन पूर्णां जुहुयात्। पुनः गुरुकुण्डे मूलद्वय[2]द्वादशनामानि जुहुयाद्वा। पुनः गुरुकुण्डे मूलमन्त्रेण, अन्यकुण्डेषु सनत्कुमारादिस्वस्वमन्त्रैः तत्तत्समिदाज्यहविर्लाजतिलयवसर्षपान् इति सप्तद्रव्याणि सम्पातसहितं जुहुयुः। अन्तराऽन्तरा पूर्णां जुहुयुः। तत्र पलाशखदिरा-श्वत्थप्लक्षवटौदुम्बराः समिधः परिकुण्डेषु प्रागादि क्रमात्, गुरुकुण्डे बिल्वं वा कदम्बं वा समिधं जुहुयात्।

**विघ्नेशे** - विहरणानन्तरं अन्वाधानादि पूजामन्त्रहोमान्ते मूलेनाष्टाज्याहुतिं पूर्णाहुतिं च विधाय सर्वत्र विघ्नादिषण्मन्त्रैः सकृत्सकृदाज्यं हुत्वा पूर्वाद्यष्टकुण्डेषु गं गणञ्जयाय स्वाहा इत्यादि पूजोक्तपरिवारैरष्टभिर्मन्त्रैः, गुरुकुण्डे मूलेन च समिदाज्यहविर्लाजपृथुकलड्डुकापूपशष्कुल्याज्यानीति नवद्रव्याणि जुहुयुः। प्रागादि दिक्षु पलाशखदिराश्वत्थशमीसमिधः। गुरुकुण्डे कोणकुण्डेषु च बिल्वसमिधः स्युः। एवं नवद्रव्याणि। पूर्णान्ते स्विष्टकृदादिशेषं समापयेत्।

**शास्तरि**- विहरणानन्तरमन्वाधानादि सर्वं कृत्वा पूजामन्त्रहोमान्ते मूलेनाष्टवारमाज्यं हुत्वा वौषडन्तव्याहृत्या पूर्णां जुहुयात्। पुनः रेवन्तप्रोक्तषण्मन्त्रषड्विंशतिमन्त्रैः सर्वत्र सकृत्सकृदाज्यं जुहुयुः। पुनः पूर्णां जुहुयुः। पुनः गुरुः स्वकुण्डे समिदाद्यष्टद्रव्याणि मूलेनैव, मूर्तिपाश्च स्वस्वकुण्डे समिदाज्यचरुलाजव्रीहियवसर्षपतिलानीत्यष्टद्रव्याणि मूलमन्त्रगायत्रीहृदयमन्त्रैः शास्त्रादिमन्त्रार्यादिमन्त्रनमस्तेभवादिमन्त्रशरादिमन्त्रस्वस्वदिक्पालमन्त्रैः सर्वकुण्डेषु जुहुयुः। अत्रैकैकद्रव्यस्यैकैको मन्त्रः। मूलं १। गायत्री २। हृदयमन्त्रः[3] ३। ओं शास्त्रे नमो गोप्त्रे नमो भूताधिपतये नमो नमः स्वाहा ४। इति शास्तृमन्त्रः। ओंआर्याय विश्वगोप्त्रे सेनान्यै नमो नमः स्वाहा ५। इत्यार्यमन्त्रः। नमस्ते

1 मूलद्वयेति, द्वितीयमूलस्य उपचारमन्त्रपरत्वेन व्याख्यातम्।
ओं नमः षण्मुखाय इति उपचारस्थानीयो मूलमन्त्रः।

2 मूलेन षड्वारं उपचारद्वादशनामभिः सकृत्सकृत् जुहुयादित्यर्थः। 3 ओं रेवन्ताय [हृदयाय] नमःइति।

भवपुत्राय भवतुल्यबलाय च। वरदाय नमस्तेऽस्तु भक्तप्रियहिताय वै स्वाहा इति भवमन्त्रः ६। ओं शं[1] शराय नमस्तेऽस्तु नमः कुक्कुटकेतवे। नमस्ते नीलरूपाय नीलाम्बरधराय च नमो नमः स्वाहा इति शरमन्त्रः ७ । ओं इन्द्राय सुराधिपतये सायुधसवाहनपरिवाराय नमः स्वाहा इतीन्द्रमन्त्रः। अग्नये तेजोधिपतये सायुधेत्यादि। यमाय प्रेताधिपतये। निर्ऋतये रक्षोधिपतये। वरुणाय जलाधिपतये। वायवे प्राणाधिपतये। सोमाय नक्षत्राधिपतये। ईशानाय विद्याधिपतये सायुधसवाहनपरिवाराय नमः स्वाहा। इत्यष्टकुण्डेषु दिक्पालमन्त्राः ८। गुरुकुण्डे मूलमन्त्र एव। तत्र पलाशसमिधः। पूर्वाद्यष्टदिक्षु पलाशखदिराश्वत्थप्लक्षवटौदुम्बरबिल्वमार्गजाः क्रमेण समिधः स्युः। सर्वत्र इत्यष्टद्रव्याणि हुत्वा स्विष्टकृदादिशेषं समापयेत्। अथ शास्तरि पञ्चहोमपक्षे गुरुकुण्डे चतुर्षु परिकुण्डेषु च मूलमन्त्रेण समिदाज्यचरुलाजसर्षपयवतिलाज्यानीति अष्टद्रव्याणि जुहुयुः। अत्र मध्ये पलाशसमिधः प्रागादिचतुर्दिक्षु अश्वत्थवटप्लक्षशम्याकाः समिधः स्युः। अत्र लाजसर्षपयवतिलानि चतुर्द्रव्याणि आर्यभव शरदिक्पालमन्त्रैर्वा जुहुयुः। स्वस्वदिक्पालमन्त्रैः जुहुयुर्वा। अष्टममाज्यं मूलेन एव जुहुयुः। अन्तराऽन्तराऽवसाने च सम्पातसहितं व्याहृत्या पूर्णाहुतिं च कुर्युः। पुनः स्विष्टकृदादिशेषं कुर्युः। एवं सर्वेषु देवेषु उक्तमन्त्रैः उक्तद्रव्यैः क्रमात् पृथगष्टोत्तरशतमष्टाविंशतिं वा अष्टशो वा सम्पातसहितं हुत्वा अष्टबन्धविषये अवसानपूर्णान्ते गुरुकुण्डे स्वस्वनवशक्तिमन्त्रैः संहारक्रमेण एकैकशः आज्यं हुत्वा स्वस्वपूर्णाहुतिमन्त्रेण पूर्णां हुत्वा सम्पातं पृथक् सम्पादयेत्। पुनः स्वस्वनवशक्तिमन्त्रैः सृष्टिक्रमेण पृथगष्टाष्टसंख्यमन्तराऽन्तरा पूर्णाहुतिसहितं हुत्वा तत्सम्पातं पृथक् सम्पादयेत्। संहारसम्पातं सृष्टिसम्पातं चाष्टबन्धार्थं क्वचित्पृथग्रक्षेत्। गुरुकुण्डे एव एवं शक्तिहोमं कृत्वा पुनर्गुरुर्मूर्तिपाश्च स्विष्टकृतं हुत्वा दर्वीं च त्यक्त्वा मेक्षणमग्नौ क्षिप्त्वा हविरुदङ्नीत्वाऽनुयाजं परिधीन् पाशं च श्लथयित्वाऽग्नौ क्षिपेत्। पुनःवैदिकोक्तानि प्रायश्चित्तानि कृत्वा तद्व्याहृत्यन्ते प्रणवेनाज्यं हुत्वा समापयेत्। गण्डूषकाले वा प्रसन्नपूजान्ते ब्रह्मार्पणकाले वा प्रणीतां मार्जयेत्। अवसानार्घ्यादि दत्वा व्याप्य लयाङ्गं कृत्वा परिसमूहनादि कृत्वा गण्डूषपुष्पाराधने च कृत्वा ताळत्रयादिना रक्षेत्। पुनः तत्सम्पातं सर्वं संयोज्य द्रव्यकुम्भेषु सम्पातं संस्पृश्य सर्वान् कलशान्वस्त्रेणाच्छाद्य

---

1 **शमित्यधिकमिति भाति मूलानुक्तेः।**

दर्भाद्यैः परिभूष्य गुरुः स्वयं कलशक्षेत्राद्बहिः प्राङ्मुख उपविश्य प्रणवेन तत्वबुद्ध्या पुष्पं समर्प्य एकीकृत्य भूतसंहारं भूतसृष्टिं च कृत्वा लिपिप्राणायामं लिपिन्यासं च कृत्वा मन्त्रोदयप्राणायामं कृत्वा पीठन्यासं विधाय पुनः मन्त्रप्राणायामं कृत्वा व्याप्य स्वस्वषडङ्गाध्वन्यासं कृत्वा पीठं सम्पूज्य मूर्तिं सङ्कल्प्य प्रणवोपचारसहितेन मूलेनावाह्य सकलीकृत्य सम्पूज्य निवेद्य[1] प्रसन्नपूजां कृत्वा " शुद्धा भवन्त्विमे कुम्भाः सकुशाः सपिधानकाः। वातातपपरीताश्च शुभलक्षणसंयुताः। पञ्चविंशतिधा विष्णोस्तत्वभेदेन तिष्ठतः। द्रव्येयत्ताश्रयाः सर्वाः सङ्गच्छन्तु विभूतयः" इति मन्त्राभ्यां पवित्रपाणिः अग्रतः स्थित्वा सम्पातसहितजलैः सर्वान् कुम्भान् रक्षेत्। पुष्पाक्षतैर्विकिरेच्च। अत्र विष्णुपदे शम्भोः, देव्याः, शास्तुः इत्यादि योज्यम्। पुनस्तत्रोपविश्य ब्रह्मार्पणादि कृत्वा तिष्ठन् पुष्पाञ्जलिं कृत्वा अञ्जलिमुद्रां बध्वा, "शास्त्रोदितमिदं चास्तु स्नपनं देवनिर्मितम्। अनेन स्नपनेनास्तु प्रसन्नो भगवान् हरिः। " इति प्रार्थयेत् विष्णौ। शिवादौ शिवः, गुहः, प्रसन्ना भवती शिवा इति प्रार्थनामन्त्राः। पुनस्तत्रोपविश्यावसानीयार्घ्यं दत्वा व्याप्य लयाङ्गं कृत्वा तालात्रयादिना रक्षेत्। पुनः प्रासादस्याग्रतः स्थित्वा पूर्णपुष्पाञ्जलिं कृत्वा अञ्जलिमुद्रां बध्वा "अधिवासः कृतो देव स्नपनाय मया तव। क्षणेन मे प्रसादोऽस्य क्रियतां पुरुषोत्तम" इति विष्णौ। शिवादौ परमेश्वर इत्यादि मन्त्रेण प्रार्थयेत्। पुनः मण्टपं प्राप्य स्वासने उपविश्य तत्तद्देवं ध्यायन् अस्वपन्नेव निशां नयेत्[2]। इति कलशेऽधिवासः।

**मुहूर्तदिवसे प्रातः आचार्यः-** स्नात्वा तात्कालिकं कर्म निर्वर्त्य देवस्याभिषेकादिकं कारयित्वा नित्यपूजां निर्वर्त्य स्वयं नववस्त्रधरः पादौ प्रक्षाळ्याचम्योत्तरीयमुपवीतवत्कृत्वा प्रासादान्तः प्रविश्य देहशुद्धिं शङ्खपूरणमात्माराधनं च विधाय पीठं सम्पूज्य देवमावाह्य सकलीकृत्य[3] स्नानकाले अभिषिच्य पुनः पुष्पमाराध्य सम्पूज्य बहिर्निर्गत्य मण्टपान्तः प्रविश्य कलशक्षेत्राद्बहिः पश्चाद्भागे प्राङ्मुख उपविश्य गणपतिं सम्पूज्य एकीकृतकलशस्य पीठं सम्पूज्य देवमावाह्य सकलीकृत्य सम्पूज्य निवेद्य प्रसन्नपूजां विधाय पूजां समाप्य व्याप्य लयाङ्गं कृत्वा तालत्रयादिना रक्षेत्। पुनस्तत्वानि सङ्कल्प्य प्रणवेन पुष्पाञ्जलिं कृत्वा पृथक्कृत्य वस्त्राद्युद्धृत्य पूर्वं तैजसपात्रे विमलैस्तण्डुलैः पूरयित्वा तत्र शरावं वा नाळिकेरखण्डं वा न्यस्याज्यं निक्षिप्य प्रवर्तिकां न्यस्य प्रज्वाल्य

1 बलिं कृत्वा। 2 दिवाऽपि अधिवास उक्तः-- "एवं रात्रौ दिवा वाऽपि विदध्यादधिवासनम् इति। 3 विश्वतश्चक्षुरिति निर्माल्यं व्यपनीय।

सम्पूजयेत् इति नीराज्यं सम्पाद्य पूर्वोक्तस्नानमन्त्रक्रमात्क्रमं निरूप्य तत्तदुद्धारयोग्यखण्डं गत्वा प्रणवेन मूर्ध्नि पादयोश्च दूर्वाक्षतान्न्यस्य स्वास्त्रमन्त्रं जपन् अस्त्रार्चितेन तेन नीराजनीयेन नीराज्य अर्घ्यं दत्वा मूर्तिपेनोद्धार्य नीराजनीयमग्रतः कृत्वा कनिक्रदादि जपन् वाद्यघोषैः सह वरुणखण्डस्य दक्षिणवीथ्या प्रसार्य मुख्यद्वाराद्बहिर्निर्गत्य प्रासादान्तः प्रविश्यार्घ्यं दत्वा पूर्ववन्नीराज्य तेन कलशेनाभिषेचयेत्। तत्र परिखण्डेषु पूर्वं तत्तद्द्रव्यघटेनाभिषेचयेत्। तत्तद्द्रव्यघटानन्तरं तत्तदुपकुम्भान् क्षेत्रक्रमानुसारेण खण्डेष्वपि क्रमं परिगृह्य वा परिखण्डेषु द्रव्यघटानन्तरं तत्समीपनवकमारभ्य दिक्कोणक्रमाद्वा उद्धृत्याऽऽनाय्याभिषिञ्चेत्। तत्र खण्डावसाने नैवेद्यं कृत्वा गण्डूषादिकं दत्वा पाद्याद्यन्ते अन्तरा स्नानं कुर्यात्। तत्र शिवे तन्महेशाय मन्त्रः। विष्णौ शङ्करनारायणे दुर्गायां च ब्रह्मजज्ञानमिति मन्त्रः। सुब्रह्मण्ये गणपतौ शास्तरि च मूलमन्त्रः। इत्यन्तरा स्नानमन्त्राः। अन्तराऽन्तरा नीराजयेच्च। पुनरन्यखण्डाभिषेकः। एवं क्रमेण परिकलशाभिषेकं कृत्वा ब्रह्मकलशे दलकलशाः सन्ति चेत् दैर्दलकलशैर्देवमभिषिच्य पुनः ब्रह्मकलशेनाभिषिञ्चेत्[1]। विष्णौ शिवे दुर्गायां गणपतौ च एवं क्रमः। सुब्रह्मण्ये शास्तरि च पूर्वं ब्रह्मकलशेनाभिषिच्य जीवन्यासादि कृत्वा पायसं निवेद्य परिवारकलशैरभिषिञ्चेत्। शङ्करनारायणे मानुपदिक्खण्डकलशैरभिषिच्य ब्रह्मकलशेनाभिषिच्य न्यासं कृत्वा निवेद्य शेषपरिकलशैरभिषिच्य द्रोणकलशेनाभिषेचयेत् इत्यभिषेकविधिः। तत्र सर्वेषु अत्यन्तरकलशान्[2] अर्वाक्कलशाभिषेकं इति कृत्वा? बहिर्गत्वा मण्डपस्यान्तः प्रविश्य दानं ... तोरणध्वजद्वारकलशादिकं अग्न्यादिकं मण्डपं पीठं[3] चास्मिन्कलशे उद्वास्य व्याप्य लयाङ्गं कृत्वा नीराज्याऽर्घ्यं दत्वा मूर्तिपेनोद्धारयेत्। ततः कुम्भेशसमीपं गत्वा पीठमुद्वास्य नीराज्यार्घ्यं दत्वा अन्यमूर्तिपेन तमुद्धार्यान्येन कर्करीं चोद्धार्य पुनः गुरुः कनिक्रदादि जपन् वाद्यघोषैः सह अग्रतो नीराजनं १। [करकधारा २] अर्घ्यहस्तो गुरुः ३। अन्त्यकलशः ४। कुम्भेशः ५ यजमानश्च ६ इति क्रमेण निर्गत्य प्रासादं प्रविश्यार्घ्यं दत्वा वर्धनीधारया त्रिः

---

1 सामान्यतः आदौ प्रणवोपचारमूलयोगः व्याख्यात्रा उक्तः अन्ते मूलप्रणवयोगश्च। तस्मात् शेषकलशेषु देवतानाममन्त्ररहितैरवशिष्टैः प्रणवोपचारमूलप्रणवैरित्यर्थः परिशिष्यते।

2 अन्त्यकलशाभिषेकात् पुरा इत्यर्थः। अत्र सर्वत्र स्नानमध्ये यथावकाशं तत्तदेवतासम्बन्धि विष्णुसूक्तश्रीरुद्रसूक्तादि यथाशक्ति जपेत्।

3 तत्तच्छक्तीरित्यर्थः।

परिषिच्य नीराज्य कुम्भेशेनाभिषिच्य त्रितत्वानि न्यस्याभिषिच्य पुनरपि नीराज्यान्त्यकलशेनाभिषिच्य षडध्वन्यासादि कृत्वा नीराज्य पायसं निवेद्य पुष्पाञ्जलिं कुत्वा देवं यथाविधि सम्पूज्य निवेद्य वैश्वदेवादिकं कृत्वा प्रसन्नपूजां कृत्वा समाप्य रक्षेत्। पुनस्तत्तद्द्रव्यघटाभिषेकावशिष्टजलं एकस्मिन् सुयोज्य तेन सर्वपरिवारानभ्युक्षेत। श्रीभूतबलिं कुर्यात्।

**अष्टबन्धविषये** - प्रासादशुद्ध्यादिकं सर्वं कृत्वा चतुःशुद्ध्यादिकं विधाय होमादिकं कृत्वा परिकलशाभिषेकावसानं कृत्वा निवेद्य गण्डूषादिकं दत्वा पुष्पाञ्जलिं कृत्वा संहारनवशक्तिहुतसम्पातमष्टबन्धस्थाने समर्प्य प्रणवेनोद्वास्य तच्चैतन्यं बिम्बे उद्वास्य विलाप्याष्टबन्धमलं त्यक्त्वा नाळं यथावत् संशोध्याभिषिच्य सिक्तरत्नस्वर्णादिभिः नाळं परिपूर्य गुरुस्तत्रोपविश्य देहशुद्धिं शङ्खपूरणमात्माराधनं च विधाय पीठं सम्पूज्य स्वस्वशक्तिमन्त्रेण पीठे प्रकृतिमावाह्य सकलीकृत्य मूलमन्त्रेण बिम्बे देवमावाह्य सकलीकृत्य उभयोः स्नानान्तानुपहारान् दत्वाअग्रतः स्थलं संशोध्य पुण्याहपात्रं न्यग्बिलं न्यस्य तत्समीपेऽष्टबन्धं सम्पातं च न्यस्य प्रायश्चित्तं नान्दीमुखं च कृत्वा मूर्तिपैः सह ओं अष्टबन्धदेवताः प्रीयन्तामितिसहितं बिम्बे पीठे अष्टबन्धे च पुण्याहं विधाय पुनः वस्त्रादिभिः बिम्बं पीठं चालङ्कृत्य पाद्याद्युपहारान् दत्वा बीजेन पीठं मूलेन बिम्बं च सम्पूज्याष्टबन्धस्य शोषणदाहनप्लावनानि कृत्वा नवशक्तिमन्त्रैः प्राणायामं कृत्वा व्याप्य प्रणवेनाङ्गं कृत्वा नवशक्तिभिः सम्पूज्य सम्पातं तत्र समर्प्य बिम्बपीठसन्धौ सम्पातं समर्प्य पुनः मण्टपान्तः प्रविश्य ब्रह्मकलशे सर्वमुद्वास्य नीराज्यार्घ्यं दत्वा मूर्तिपेनोद्धारयेत् कुम्भेशं च। पुनः कनिक्रदादि जपन् यथोक्तक्रमात् बहिर्निर्गत्य वाद्यघोषैः सह प्रासादं प्रविश्यार्घ्यं दत्वा करकोदकेनास्त्रेण देवं त्रिः परिषिञ्चेत्। स्वयं तत्रोपविश्य दानं सुमुहूर्तं च कृत्वा नीराज्य बिम्बपीठयोः शक्तिपुरुषौ ध्यात्वा अष्टबन्धं गृहीत्वा प्रणवोपचारमूलमन्त्रान्ते नवशक्तिं तत्तच्छक्तिं मूलं प्रणवं ध्रुवाद्यैरिति मन्त्रं च सञ्जप्य दृढीकृत्य प्रणवेन द्विधा व्याप्य प्रकृतिपुरुषयोरैक्यं-विभाव्य स्वहृदयाद्देवमावाह्य लिपितत्वमन्त्रन्यासं कृत्वा उपहारान् दत्वा किञ्चिदभिषिच्य किञ्चित्सम्पूज्य नीराज्य तत्रावाहितमन्त्रानुक्त्वा कुम्भेशेनाभिषिच्य त्रितत्वानि आधारत्रये न्यस्य पुनः लिपितत्वमन्त्राङ्गानि न्यस्य किञ्चिदभिषिच्य किञ्चित्सम्पूज्य नीराज्य ब्रह्मकलशं गृहीत्वा प्रणवोपचारमूलमन्त्रतत्तन्मन्त्रदे-वतातत्तत्वमन्त्रजीवावाहनादि मूलप्रणवसप्तमातृप्रणवमुच्चरन्

ब्रह्मकलशेनाभिषिञ्चेत्। पुनः प्रणवेन त्रिवारं व्याप्य हृदयं स्पृष्ट्वा पञ्चतत्वानि सञ्जप्य पुनरेकैकशः मूर्धादि पञ्चस्थानेषु न्यस्य प्राणन्यासं कुर्यात्। स्वस्वपञ्चतत्त्वबीजान्ते नमः पराय प्राणात्मने नमः। शिवे- नमः शिवाय प्राणात्मने नमः इति। पुनः अपानात्मने नमः। व्यानात्मने। उदानात्मने। समानात्मने। नागात्मने। कूर्मात्मने। कृकलात्मने। देवदत्तात्मने। धनञ्जयात्मने। इत्यङ्गुष्ठादिपञ्चभूताङ्गुलिभिः प्राणादीन् न्यसेत्। कराभ्यां पादाग्रादि नासिकान्तं प्राणं, नासिकादि पृष्ठे पादाग्रान्तं अपानं, व्यापकत्वेन व्यानं, उदरादि नेत्रान्तं उदानं, नाभ्यादि हृदयान्तं समानं, आस्ये नागं, नेत्रयोः कूर्मं, नासापुटयोः कृकलं, बहिर्व्यापकत्वेन देवदत्तं, अन्तर्व्यापकत्वेन धनञ्जयं इति दश प्राणान् न्यसेत्। पुनः बुद्ध्याद्यष्टकं न्यसेत्। हृदये अधोभागमारभ्य नवशक्तिन्यासन्यायेन बुद्ध्याद्यष्टकं न्यस्य तन्मध्ये प्रकृतितत्त्वं जीवतत्त्वं तत्तच्छक्तिबीजं मूलमन्त्रं च न्यसेत्। पुनः स्वस्वपञ्चमूर्तीः दिग्दळेषु मध्ये च न्यस्य लिपिन्यासं षडध्वन्यासादिकं च न्यस्य किञ्चिदभ्यर्च्य पायसं निवेदयेत्। पुनः गण्डूषादिकं दत्वा पुष्पाञ्जलिं कृत्वा नीराज्य स्वयं तत्रोपविश्य यथाविधि देवं सम्पूज्य निवेद्य वैश्वदेवं कृत्वा बलिं विकीर्याचम्यान्तः प्रविश्य नैवेद्यं विसृज्य प्रसन्नपूजां विधाय पूजां समाप्य रक्षेत्। परिवारेषु अवस्रावप्रोक्षणं कृत्वा श्रीभूतबलिं कुर्यात् इति सामान्यविधिः। सुब्रह्मण्ये शास्तरि च पूर्वमष्टबन्धं कृत्वा वर्धन्या सह यथोक्तक्रमात् ब्रह्मकलशमानाय्य वर्धनीपरिषेकं कृत्वा तद्वर्धनीं मण्डपे यथोक्तक्रमात् ब्रह्मकलशमानाय्य वर्धनीपरिषेकं कृत्वा तद्वर्धनीं मण्डपे यथापूर्वं न्यसेत्। ब्रह्मकलशेनाभिषिच्य जीवन्यासादि सर्वं न्यस्य पायसं निवेद्य परिकलशाभिषेकादिकं सर्वं कुर्यात्। अन्त्यकलशे मण्टपादिकं उद्वास्य वर्धनीकुम्भेशादिभिः सहानाय्य वर्धनीपरिषेकान्ते कुम्भेशेनाभिषिच्य पुनरन्त्यकलशेनाभिषिच्य षडध्वन्यासादि कृत्वा पायसनिवेदनादि सर्वं कुर्यात्। शङ्करनारायणेऽपि मानुषदिक्खण्डान्ते अष्टवन्धादिकं कृत्वा व्रह्मकशाभिषेकादिकं सर्वं कुर्यात्। **अष्टबन्धमात्रे** - सप्तशुद्धिं कृत्वा शुद्धजलपूरितैः कलशैरभिषिच्य सुमुहूर्ते अष्टबन्धं कृत्वा पायसं निवेद्य पूजयेत्। पुनः द्वितीयेऽहनि तृतीयेहनि निर्माल्यं त्यक्त्वा अभिषेकादिकं विना पूजयेत्। द्रव्यकलशपक्षे तृतीयेऽहनि प्रायश्चित्तहोमादि सर्वं कुर्यात्। द्रव्यकलशपूजां च कुर्यात्। चतुर्थदिवसे प्रातःतैलपूर्णं कलशं सम्पूज्य देवस्य निर्माल्यं त्यक्त्वा तैलघटेनाभिषिच्य शिरीषचूर्णादिभिः

संशोध्याभिषिच्य पायसं निवेद्य प्रायश्चित्तादिकलशैः द्रव्यकलशैश्चाभिषिच्य सम्पूज्यावस्त्रावप्रोक्षणं कृत्वा श्रीभूतवलिं कुर्यात्। अथवा प्रायश्चित्तादिहोमं विना चतुर्थदिवसे शुद्धजलपूजितकलशैरभिषिच्य श्रीभूतवलिं कुर्याद्वा। इति तृतीयः पटलः।

**उत्सवप्रकारः**- मार्गशीर्षादिषट्सु मासेषु पुनः ज्येष्ठादिषट्सु मासेषु वा मध्ये स्वस्वनक्षत्रान्तः[1] सङ्कल्प्य तस्मात् प्रागष्टमदिवसे वा दशमदिवसे वा त्रयोदशदिवसे वा रात्रौ बीजाङ्कुरारोपणं कृत्वा ध्वजं संस्थाप्य उत्सवं कुर्यात्।

**तत्राङ्कुरारोपणप्रकारो लिख्यते**- प्रासादस्योत्तरभागे बीजाङ्कुरमण्टपं कृत्वा वितानादिभिरलङ्कृत्य गुरुः स्नात्वाऽऽचम्य मुष्ट्यादीन् संसाद्य स्थलशुद्धिं विधाय षोडशपदं क्षेत्रं कृत्वा रजोभिः यथाशोभं परिपूर्य तेषु षोडश पदेषु व्रीहीन् दर्भाश्च विन्यस्य पीठं विधाय तद्दक्षिणे पूर्वे वा बीजन्यासार्थं स्वस्तिकं कृत्वा व्रीहिभिः पीठं कुर्यात्। पुनः षोडशपालिकाः स्वस्वास्त्रेण क्षाळयित्वा स्वस्वकवचेन त्रिसूत्रेण संवेष्ट्य दूर्वादिभिरलङ्कृत्य कूर्चान् विन्यस्य मृद्वालुकाकरीषैः उत्तरोत्तरं परिपूर्य ताः पालिकाः अग्निकोणमारभ्य प्रथमपङ्क्तौ पश्चिमान्तं द्वितीयपङ्क्तौ पश्चिमादि पूर्वान्तं तृतीयपङ्क्तौ पश्चिमादि पूर्वान्तं[2] चतुर्थपङ्क्तौ पश्चिमादि पूर्वान्तं विन्यसेत्। स्वस्ववीजानि एकस्मिन्वा संयोज्य स्वस्वास्त्रेण जलैः संक्षाळ्य जले अधिवास्य पुनः स्वस्वमन्त्रेण क्षीरेण संक्षाळ्याग्रे न्यसेत्। गुरुस्तत्रोपविश्य देहशुद्धिं शङ्खपूरणमात्माराधनं च कृत्वा गणपतिं सम्पूज्य प्रायश्चित्तं नान्दीमुखं च कृत्वा मूर्तिपैः सह ओं वीजाङ्कुरदेवताः प्रीयन्तां इति विशेषयुक्तं बीजे पालिकासु च पुण्याहं कृत्वा पुण्याहशेषजलैश्च बीजानि सिक्त्वा तत्स्वस्तिके न्यसेत्। पालिकासु एकपीठं सम्पूज्य वीजे च पीठं सम्पूज्य पालिकासु कलशन्यायेन शोषणादीन् दर्भविन्यासादींश्च कृत्वा ओं नमो विष्णवे इति

---

**1 प्रतिष्ठानक्षत्रं तदेवनक्षत्रं वा विवक्षितम्। तन्नक्षत्रे यथा तीर्थस्नानं भवति तथा इत्यर्थः। तिथावपि भवति। तत्र विशेषः ईश्वरसंहितायां उभयदिने नक्षत्रतिथियोगे- "नक्षत्रभेदे सम्प्राप्ते पूर्वमेव फलप्रदम्। परेद्युर्दशनाडी चेत्परमेव शुभं भवेत्। तिथिभेदे तथा प्राप्ते परमेव फलप्रदम्। एकादश्याममावास्यां द्वादश्यादिषु वा द्विजाः परेद्युश्चेत् कलामात्रं तदेव शुभदं भवेत् इति। विष्णुतिलके- तिथिनक्षत्रयोगे तु तीर्थं सर्वगुणोत्तरम्। कलया वाऽपि विद्धा चेत् तिथिर्वा यदि तारका। वर्जयित्वा तु तां विद्धां परेद्युस्तीर्थमाचरेत्। कलामात्रावशेषा चेत्तिथिर्वा यदि तारका। तत्रोत्सवं प्रकुर्वीत सा हि सर्वगुणोत्तरा। 2 पूर्वादिपश्चिमान्तमिति युक्तम्।**

पालिकासु विष्णुमावाह्य विष्णुं पूजयेत्। बीजे शोषणदाहनप्लावनानि कृत्वा ओं सों सोमाय नमः इति मन्त्रेण सोममावाह्य सम्पूजयेत्। दानं कृत्वा नीराज्य पवित्रपाणिः वाद्यघोषैःसह स्वस्वमन्त्रेण पालिकासु अग्न्यादीशावमानं पालिकान्यासवत् बीजं निर्वपेत्। पुनः कूर्चपाणिः स्वस्वम॰ अष्टगन्धरजनीचूर्णजलैः तद्वत्प्रोक्ष्य स्वस्वमूलेनावाह्य लिपिन्यासादिभिः सकलीकृत्य उपहारान् दत्वा स्नानकाले आपोहिष्ठादिभिःसम्प्रोक्ष्य उपहारशेषं दत्वा यथाविधि सम्पूज्य निवेद्य प्रसन्नपूजां विधाय पूजां समाप्य वस्त्रेणाच्छाद्य स्वस्वास्त्रेण रक्षेत्। प्रागाद्यष्टदिक्षूपलिप्य दर्भान् विन्यस्य स्वस्वमन्त्रेण रात्रीशेभ्यो बलिं दद्यात्। ऊर्ध्वदिवसेषु सवनेषु देहशुद्ध्यादिकं कृत्वा पीठं सम्पूज्य पालिकासु विष्णुं बीजेषु सोमं सम्पूज्य कूर्चपाणिर्निशागन्धजलैः स्वस्वमन्त्रेण प्रोक्ष्य स्वस्वमूलेन देवमावाह्य लिपिन्यासादिभिः सकलीकृत्य उपहारान् दत्वा स्नानकाले आपोहिष्ठादिभिः सम्प्रोक्ष्य वस्त्रादीन् दत्वा जलगन्धादिभिः सम्पूज्य निवेद्य प्रसन्नपूजां कुर्यात्। पुनः रात्रौ पूर्वाद्यष्टदिक्षु तत्तद्रात्रीशेभ्यःतत्तत्पार्षदेभ्यश्च बलिं कुर्यात्। कर्मदिवसे प्रातः बलिं दत्वा ब्रह्मकलशस्य परितः शय्यायाः परितो वा बीजाङ्कुरपालिकाः न्यसेत्। कलशे उत्सवे च बीजाङ्कुरार्पणं कुर्यात्। शङ्करनारायणे दुर्गायां विष्णौ च शालीमाषयवप्रियङ्गुतिलमृत्सारखल्वमुद्गासुरीशिम्बश्यामा-कराजमाषाख्यद्वादशबीजानि। शिवे विघ्नेशे च यवराजमाषौ च वर्जयित्वा दश बीजानि। सुब्रह्मण्ये श्यामाकराजमाषौ वर्जयित्वा दश बीजानि। शास्तरि मुद्गादिपञ्चकं वर्जयित्वा सुमनवेणुबीजनीवारान्संयोज्य दशबीजानि। अथ शिवे क्षीरक्षाळने तत्पुरुषायेति मन्त्रः। बीजावापे प्रोक्षणे च त्र्यम्बकाय[1] शर्वाय शङ्कराय शिवाय च। सर्वलोकप्रधानाय शाश्वताय नमो नमः इति मन्त्रः। विष्णौ क्षीरक्षाळने द्वादशाक्षरो मन्त्रः। शङ्करनारायणे दुर्गायां सुब्रह्मण्ये गणपतौ शास्तरि च क्षीरक्षाळने स्वस्वमूलमन्त्राः। शिवं वर्जयित्वा अन्येषु षट्सु देवेषु बीजावापे स्वस्वमूलमन्त्रः[2]। प्रोक्षणे शिवं विघ्नं च वर्जयित्वा अन्येषु पञ्चसु देवेषु स्वस्वोपचारमन्त्रः। विष्णौ जितन्ते . . . . पूर्वज। ओं ओं ओं नमः इति मन्त्रः। विघ्नेशे प्रोक्षणे स्वगायत्रीमन्त्रः। सुब्रह्मण्ये प्रोक्षणे स्वगायत्रीमन्त्रः।

1 त्रियम्बकायेति मूलपाठः। 2 गणपतिशास्तृस्कन्देषु स्वस्वगायत्र्या रोचनविधिः कार्यः। शङ्करनारायणे विष्णौ च त्रितार (प्रणव) मनुसहितेन नमोन्तेन जितन्ते मनुना, दुर्गायां प्रणवपुटितया शक्त्या, हरे वापोदितेन (त्रियम्बकायेति) मनुना इति मूलाशयः।

**बलिदेवता लिख्यन्ते**- शिवे गणपतौ च ब्रह्मग्रहेभ्यो[1]। भूतग्रहेभ्यो। इन्द्रग्रहेभ्यो। गन्धर्वग्रहेभ्यो। यक्षग्रहेभ्यो। राक्षसग्रहेभ्यो। पिशाचग्रहेभ्यो। विष्णुग्रहेभ्यो। विघ्नग्रहेभ्यो। स्कन्दग्रहेभ्यो। रुद्रग्रहेभ्यो। शिवग्रहेभ्यो इति द्वादशदेवतामन्त्राः[2]। सुब्रह्मण्ये ब्रह्मग्रहेभ्यो। इन्द्रग्रहेभ्यो। भूतग्रहेभ्यो। गन्धर्वग्रहेभ्यो। यक्षग्रहेभ्यो। राक्षसग्रहेभ्यो। पिशाचग्रहेभ्यो। इति सप्तमन्त्राः। अष्टमे स्कन्दग्रहेभ्यो नमः। अतः परं मूलमन्त्रः[3] इति। पुनः शङ्करनारायणे दुर्गायां विष्णौ च, यवराजमाषवर्जितशिवोक्तबीजे सुब्रह्मण्ये च- भूतग्रहेभ्यो। पितृग्रहेभ्यो। यक्षग्रहेभ्यो। नागग्रहेभ्यो। ब्रह्मग्रहेभ्यो। शिवग्रहेभ्यो। विष्णुग्रहेभ्यो नमः इति सप्तबलिदेवतामन्त्राः। पुनः शास्तरि भूतग्रहेभ्यो। पिशाचग्रहेभ्यो। यक्षग्रहेभ्यो। नागग्रहेभ्यो। ब्रह्मग्रहेभ्यो। शिवग्रहेभ्यो। विष्णुग्रहेभ्यो। पितृग्रहेभ्यो। सर्वदेवग्रहेभ्यो इति[4] नव बलिदेवतामन्त्राः। इति बीजाङ्कुरप्रकारः।

**तदनन्तरमेव ध्वजान् स्थापयेत्**- प्रासादस्यान्तर्बहिश्च द्वारं स्याच्चेत् अन्तर्द्वारशाखायां [ : ] दीर्घां मात्वा तेन दीर्घेण ध्वजस्य भूतमानं? वर्जयित्वा दशगुणितदीर्घं कुर्यात्। पुनः लोहेन वा उत्तमदारूणा वा वाहनं रचयेत्। पुनः महाबलिपीठबाह्ये ध्वजस्थापनार्थं अवटं कृत्वा तत्समीपे ध्वजदण्डमुत्तराग्रं न्यस्य संक्षाळ्य पल्लवादिभिः सम्भूषयेत्। पुनः गुरुः स्नात्वाऽऽचम्य प्राङ्मुख उदङ्मुखो वा तत्रोपविश्य देहशुद्धिं शङ्खपूरणमात्माराधनं च विधाय गणपतिं च सम्पूज्य प्रायश्चित्तादिकं कृत्वा तत्राग्रतस्तण्डुलपूर्णपात्रे वाहनं संक्षाळ्य न्यस्य पताकां च न्यस्य अवटमस्त्रेण खात्वा वायुबीजेन पांसुं त्यक्त्वा गोमयेनोपलिप्य गन्धपुष्पदर्भाक्षतान् अवटे क्षिप्त्वा मूर्तिपैः सह ओं ध्वजदेवताः प्रीयन्तां इतिसहितं वाहने अवटे ध्वजदण्डे च पुण्याहं कृत्वा पुण्याहजलैः क्षालयित्वा ध्वजदण्डस्य शोषणदाहनप्लावनानि कृत्वा प्रणवेन सम्पूज्य वृषाय नमः, षण्मुखाय नमः, वायवे नमःइति मूले मध्ये अग्रे च पूजयेद्वा। पुनः वाहनस्य भुतसंहारं शोषणादिकं भूतसृष्टिं च विधाय लिपिप्राणायामं लिपिन्यासं वाहनमन्त्रप्राणायामं कृत्वा व्याप्य प्रणवेनाङ्गं कुर्यात्। अवटे ध्वजाग्रे च पीठं सम्पूज्य तण्डुलपात्रेण सह घण्टापताकादिसहितं वाहनमुद्धृत्य नीराजनादिभिः सह प्रासादान्तः प्रविश्य

1 सर्वत्र नमः इत्यन्ते योजनीयम्। 2 पञ्चदिनपक्षे आदितः पञ्चदेवताः सप्त, नव, दश, द्वादशदिनेषु आदितः तत्तत्संख्याकाः बलिदेवताः इत्यर्थः। 3। अतः परं स्कन्दग्रहेभ्यो नमः इत्येवेति मूलसम्मतम्। 4 दिनाधिक्ये अन्त्यदेवताया आवृत्तिः।

देवं किञ्चित्सम्पूज्य वाहनस्य पीठं सम्पूज्य मूर्तिं सङ्कल्प्य नीराज्य देवस्याग्रतः स्थितवाहनात् वाहनमन्त्रेण तत्रावाह्य प्रणवेनाङ्गं कृत्वा शाकुन्तसूक्तं जपन् वाद्यघोषैः सह बहिर्गत्वा ध्वजसमीपे उपविश्य स्वहृदयात् वाहनमन्त्रेण वाहनमूर्तौ आवाह्य सकलीकृत्य सम्पूज्यार्घ्यं दत्वा नीराज्य प्रणवोपचारमूलपञ्चतत्ववाहन-प्रणवैः ध्वजाग्रे वाहनं यथावत्संस्थाप्य वाहनस्य वामभागे वा उत्तरभागे वा ध्वजोपान्ते पताकां घण्टां मालां च लम्बयित्वा ध्वजं प्रयत्नेन देवाभिमुखमवटे संस्थाप्य स्थिरीकृत्य वेदिकां कृत्वा स्वमन्त्रेण प्रतिष्ठापनं कृत्वा स्वहृदयादावाह्य सकलीकृत्य सम्पूज्य नैवेद्यं विसृज्य गण्डूषादि दत्वा किञ्चिदभ्यर्च्य बलिं दत्वा प्रसन्नपूजां कृत्वा पूजां समाप्य व्याप्य लयाङ्गं कृत्वा अस्त्रेण तालत्रयादिना रक्षेत्। इति महाध्वजप्रतिष्ठाप्रकारः। पुनरन्यांश्च ध्वजान् स्थापयेत्। तत्र वैणवान्ध्वजानानाय्य संक्षाळ्य पल्लवादिभिः पताकादिभिश्चालङ्कृत्याथाष्टदिक्षु बलिपीठबाह्ये स्वयं तत्र तत्रोपविश्य अस्त्रखननं पांसुत्यागं उपलेपनं दर्भाक्षतादिन्यासं च कृत्वा पद्मान्तं पीठं सम्पूज्य ध्वजस्यास्त्रप्रोक्षणं शोषणादिकं च कृत्वा स्वस्वमन्त्रप्राणायामं तेन सकलीकरणं कृत्वा किञ्चित्सम्पूज्य स्वस्वमन्त्रेण प्रतिष्ठाप्यावाह्य प्रणवेनाङ्गं कृत्वा सम्पूज्य यत्किञ्चिन्निवेद्य प्रसाद्य रक्षेत्। सुब्रह्मण्ये ईशकोणे द्वौ इति नवध्वजाः तदन्यत्राष्टौ ध्वजाः। इति ध्वजस्थापनप्रकारः। उत्सवं सङ्कल्प्य बीजाङ्कुरात्पूर्वं वा प्रासादस्य वेदिकादीन् संक्षाळ्य तैलादीन्स्पृष्ट्वा अन्तः अङ्कणादीन् बहिःप्राकारान्तं तृणादीनुत्सार्य जलैः सिक्त्वा भूभागं यथा शुद्धं भवति तथा कुर्यात्। पुनः महाजनसन्दर्शनार्थं ध्वजान् पताकाश्च संस्थाप्य पूगमण्टपादिभिः यन्त्रदीपादिभिर्मालाभिः पुष्पादिभिःवितानादिभिश्च सम्भूष्य वहिश्चतुष्पदादिषु च सपताकान् ध्वजान् स्थापयेत्। इत्युत्सवमारभ्य रात्रावेव देवं सम्पूज्य श्रीभूतबलिं कुर्यात्। द्वितीयादिषु दिवसेषु प्रातर्मध्याह्ने रात्रौ च देवं पूजयेत्। दिवा रात्रौ च बलिं कुर्यात्। तत्र मध्याह्नपूजायां स्नानकाले शुद्धजलैः अभिषिच्य पुनः क्षीरेण दध्नाऽऽज्येन गन्धजलैः क्रमात् अभिषिच्य पूजितेन पञ्चगव्येन, नालिकेरजलैः, पूजितैः कलशैश्चाभिषेचयेत्। अन्तराऽन्तरा निवेदयेद्वा। पुनःवस्त्राभ्यां यथा शोभं संवेष्ट्य यज्ञोपवीतं समर्प्य पुनः किरीटादिभिः तत्तद्योग्याभरणैः भूषयेत्। पुनरष्टगन्धैः पुष्पैर्मालाभिश्चालङ्कुर्यात्। त्रिषु सवनोक्तमन्त्रैर्वा स्वस्वमूलेन वा देवं सम्पूज्य साज्यं गुळोपदंशादिकदळीकेरादिभिः सहितं पायसादिकं हविर्निवेदयेत्। शिवे मध्याह्नपूजायां पञ्चब्रह्मपूजापक्षे

पञ्चवक्त्रेषु क्रमात् दध्याद्यन्नं निवेदयेत्। तत्रेशानमुखे दौग्धान्नं निवेदयेत्। तत्पुरुषमुखे हरिद्रान्नं तत्रैव मुखे सामान्यनैवेद्यं च निवेदयेत्। अघोरमुखे कृसरान्नं[1], वामदेवमु· ·ल्लान्नं, सद्योजातमुखे दौग्धहारिद्रकृसरगुडान्नानि एकीकृत्य निवेदयेदिति विशेषः। तत्र प्रातः रात्रौ च उत्सवबलिं कुर्याद्वा भूतवलिं वा। प्रातरुत्सववलिं रात्रौ श्रीभूतबलिं कुर्याद्वा।

**तत्र पूर्वं श्रीभूतबलिर्लिख्यते तदनन्तरमुत्सवबलिश्च-** तत्रादौ प्रभूतं हविः सम्पाद्य क्वचित्प्रदेशे एकस्मिन् पात्रे वा उपस्तीर्य निक्षिप्य समलङ्कृत्य उपस्तीर्य कदळीनाळिकेरशर्करादीन् संयोज्य तत्र प्राङ्मुख उपविश्य देहशुद्धिं शङ्खपूरणमात्माराधनं च विधाय गणपतिं सम्पूज्य स्वस्वास्त्रेण जलैः सम्प्रोक्ष्य आच्छादनपात्रं त्यक्त्वा तालत्रयादिना संरक्ष्य पुनरपि प्रोक्ष्य दर्भेण स्पृष्ट्वा शोषणदाहनप्लावनानि कृत्वा पीठं सम्पूज्य मूलेनावाह्य सकलीकृत्य सम्पूज्य निवेदयेद्वा, अर्घ्यं दद्याद्वा। पुनः प्रमाद्य लयाङ्गं कृत्वा त्रिधा विभज्याद्यमंशं देवेभ्यो नमः इति सम्पूज्य देविकं कल्पयेत्। हारिद्रदधिलाजसक्तुपललानि पञ्चभूतकूराणि द्वितीयांशे तृतीयांशे च संयोज्य पार्षद्भ्यो नमः भूतेभ्यो नमः इति क्रमात् सम्पूज्य पार्षदं भौतिकं च कल्पयेत्। तत्र द्वाःस्थादि निर्माल्यधार्यन्तं प्रधानदेवताः देवाः। पार्षदाः भौतिकाश्च प्रसिद्धाः इति हविःपूजां कृत्वा तद्रक्षेत्। पुनः गणपतिं विसर्जयेत्। पुनः बहिर्दीपादीन् न्यस्य वाद्येषु शक्त्या शब्दतत्वेन च पुष्पाञ्जलिं कृत्वा वा पूजितैर्वाद्यैः वादकैः पाणिसन्ताडनं कारयित्वा मन्त्रार्थस्मृत्या भूतगणानामन्त्रयेत्। पुनः द्वारसमीपे स्थित्वा पुष्पाञ्जलिं कृत्वा अञ्जलिमुद्रां वध्वा सृष्टिस्थितिविनाशानां कर्तृभूतपते प्रभो[2]। तत्पारिषदानां मुख्यानां[2] बलिमादाय[4] शाधि माम् इति प्रार्थ्यान्तःप्रविश्य बलिकौतुकस्य किञ्चित् पीठं सम्पूज्य मूलेन मूलबिम्बात् किञ्चिद्देवमावाह्य[5] सकलीकृत्य सम्पूज्यार्घ्यं दद्यात्। यद्वा देवं प्रार्थ्य बलिकौतुके देवं मनसा योजयेत्, पुनः मूर्तिपेन देवं सन्धार्य वहिर्गत्वा दीपैः सह तत्तद्बलिस्थानं प्राप्य देवं साक्षीकृत्य वाद्यघोषैः

---

1 तिलमिश्रान्नमित्यर्थः। 2 कर्तः भूतपते प्रभो इति पाठान्तरम्। 3 त्वत्पारिषदमुख्यानां इति। 4 बलिदानाय इति च पाठान्तरम्। 5 किञ्चिदित्यनेन विशेषो द्योत्यते तदुक्तमीश्वरसंहितायां- प्रत्यहं कर्मबिम्बानां मूलबिम्बहृदब्जगात्। किञ्चिदावाहनं कार्यं तत्रत्वेवं क्रमो द्विजाः। मूलबेरे तु यत्तेजः षड्भागैकं तु चोत्सवे। षड्त्रिंशदेकभागस्तु बलिकर्मार्चनादिषु।

सह तत्तत्स्थाने बलिं दद्यात्[1]। तत्र बलिस्थाने प्रोक्ष्य पुष्पमाराध्याष्टदलपद्मे तत्तद्देवतां ध्यात्वा पाद्यार्घ्याचमनानि दत्वा तत्तन्मन्त्रेण जलगन्धादिभिः सम्पूज्य त्रिवारं बलिं दद्यात्। तत्तत्पार्श्वपदे तत्तत्पार्षदेभ्यो नमः इति त्रिवारं मूलेनैकवारं च बलिं दत्वा सकृज्जलं दत्वा पुष्पमाराध्य बलिमुद्रां बध्वा प्रसादयेत्। एवं सर्वत्र बलिदानप्रकारः। विष्णौ शङ्करनारायणे च द्वारि पार्श्वद्वये द्वास्स्थौ, अग्रमण्टपे वाहनं, प्रासादस्य पृष्ठे अनन्तं दक्षिणद्वारि पश्चिमपूर्वक्रमात् गणपतिं दक्षिणामूर्तिं च पूजयेत्। शिवादिषु पञ्चसु देवेषु पृष्ठे अनन्तं वर्जयित्वा पूर्वोक्तद्वास्स्थादीन् यजतु। शिवे वाहनानन्तौ वर्जयित्वा पूर्वोक्तद्वास्स्थादीन् यजतु। प्रासादस्य बहिः द्वास्स्थौ स्यातां चेत् दक्षिणामूर्त्यनन्तरं तौ द्वास्स्थौ यजेत्। पुनः सर्वेषु देवेषु पूर्वद्वारे प्रासादे इन्द्रादीन्, पश्चिमद्वारे प्रासादे वरुणादीन् लोकपालान् यजेत्। शिवे लोकपालानन्तरमग्रमण्टपे वृषभं यजेत्। पुनः लोकपालानन्तरं सर्वेषु देवेषु दक्षिणभागे गन्धर्वपदे मातृः, भृङ्गराजपदे शास्तारं, वायौ दुर्गां, मुख्यपदे स्कन्दं, सोमस्योत्तरे वैश्रवणं। उदितिपदे निर्माल्यधारिणं चार्चयेत्। यद्वा सोमपूजानन्तरं वैश्रवणपूजां इति विकल्पः। प्रासादस्यान्तर्भागे बहिर्भागे च द्वास्स्थान् सम्पूज्य वाहनादीन् पूजयेत् इति मूर्तिभेदेन विकल्पः। एवमन्तः बलिक्रमः। शङ्करनारायणे प्रासादस्यान्तर्द्वारि बहिर्द्वारि च सभायाः अन्तर्द्वारि बहिर्द्वारि च इति चत्वारः द्वास्स्थाः स्युः। गणपतौ प्रासादस्यान्तर्द्वारं च वर्जयित्वा प्रासादस्य बहिर्द्वारि सभाया अन्तर्द्वारि च द्वौ द्वौ द्वास्स्थौ यजेत्। सुब्रह्मण्ये[2] दुर्गायां च प्रासादस्यान्तर्द्वारं वर्जयित्वा वा[3]। शिवे शास्तरि च सभाबहिर्द्वारं वर्जयेत्। विष्णौ चतुर्थद्वारं आद्यद्वारं वा वर्जयेत्। शङ्करनारायणे प्रासादस्यान्तः नन्दिने नमः, चण्डाय नमः। तत्र वहिः[4] जयत्सेनाय। विष्वक्सेनाय। पुनः वाहनादि चण्डसेनान्तं, पुनःसभान्तः उमायै। श्रियै। सभाबहिः शूलाय। चक्राय नमः इति। गणपतौ प्रासादे- वज्रदन्ताय। गजास्याय। पुनः वाहनादि कुम्भोदरान्तं, पुनः सभान्तः चण्डविक्रमाय। विघ्नकराय इति। दुर्गायां- चतुर्द्वास्स्थपक्षे प्रासादस्यान्तः चण्डिकायै। अम्बिकायै। तत्र बहिः जयायै। विजयायै इति, पुनः वाहनादिकं, त्रिद्वास्स्थपक्षे प्रासादे वहिः चण्डिकामम्बिकां च ततः वाहनादि मुडिन्यन्तं, पुनः सभान्तः

1 पीठिकासु स्थण्डिले वा ; तदुक्तमीश्वरसंहितायां- पीठिकासु बलिं दद्यान्निर्मितासु पुरैव तु। भूतले गोमयाद्येन लेपिते वा यथारुचि इति। 2 कुमार्यां आद्यद्वास्स्थरहिताः, चतुर्द्वास्स्थयुक्ता वा, गुहगणपयोः अन्त्यद्वाररहिता आद्यन्तहीना वा इति मूलाभिप्रायः। 3 चतुर्विधद्वास्स्थयुक्ता वा इति शेषः 4 बहिर्द्वारि

ह्लादिन्यै। मोदिन्यै। सभाबहिः जयन्त्यै। कात्यायन्यै इति। शिवे- प्रासादस्यान्त -नन्दिने। महाकाळाय। पुनःगणपतिदक्षिणामूर्ती। प्रासादे वहिः शूलपाणये। परशुपाणये इति। पुनः इन्द्रादि वरुणादि वा अष्टमूर्त्यन्ते ब्रह्माणं अनन्तं वाहनमात्रादि चण्डेश्वरान्तम्। पुनः सभान्तः- तिक्ष्णदन्ताय। मृगास्याय इति। सुब्रह्मण्ये- प्रासादे- सुकुमाराय। वज्रसेनाय इति वा वज्रहस्ताय। शक्तिपाणये इति वा। पुनःवाहनादि धूर्तसेनान्तं, सभान्तः अग्निकेतवे। सूर्यकेतवे इति। अथ शास्तरि- प्रासादे- अन्तः क्षुरिकापाणये। खड्गहस्ताय। बहिर्द्वारि- वीरबाहवे। महावीराय इति। पुनः वाहनादि घोषवदन्तं, पुनः सभान्तः तीक्ष्णाय। तीक्ष्णदन्ताय इति। विष्णौ प्रासादे- अन्तः चण्डाय। प्रचण्डाय। ओं पक्षिराजाय स्वाहा। अनन्ताय। गं गणपतये। दक्षिणामूर्तये। लोकपालादिविष्वक्सेनान्तं। सभान्तः श्रियै। पुष्ट्यै। बहिर्द्वारि चण्डप्रचण्डौ। गरुडानन्तगणपतिदक्षिणामूर्तयः। लोकपालादिविष्वक्सेनान्तं। सभान्तः श्रियै। पुष्ट्यै। बहिर्द्वारि चक्रपाणये। शङ्खपाणये। एतौ प्रासादस्य बहिश्चेत् सभाबहिः स्याताम्। इति द्वास्थानां व्यवस्था। **वाहनानि**- शिवे- वृषाय नमः। विष्णौ- गरुडाय। शङ्करनारायणे- वृषगरुडात्मने[1]। गणपतौ- महाचाषाय। शास्तरि- अश्वाय। सुब्रह्मण्ये- मयूराय। दुर्गायां- महासिंहाय नमः इति। वज्रनखदंष्ट्रायुधाय महासिंहाय हुं नमःइति वा। इति वाहनानि ध्वजचिह्नानि च[2]। तत्र द्वास्थादिनिर्माल्यधार्यन्तं प्रधानान्त[3] तत्पार्षदेभ्यो नमः इति। मातृवीरभद्रेत्या... प्रार्थ्य वीरभद्रं गणपतिं तत्पार्षदं च पुनः ब्राह्म्यादितत्पार्षदानन्तरं मातृभ्यो ...मातृभ्यो सर्वमातृभ्यो सर्वमातृगणेभ्य इति तत्पार्षदान्ते नानारूपेत्यादि तत्पार्षदेभ्यो आकाशमातृगणेभ्यः मूलं पुनः तत्तन्मूलान्ते तत्तत्पार्षदान्ते सर्वेभ्यो भूतेभ्यो नमो नमः स्वाहा इति जलाप्लुतवलिः। पुनः निर्माल्यधारिबलौ स्वस्वपरिषन्मूलान्ते जलाप्लुतबलिः। एवमन्तः बलिं कृत्वा सभाद्वास्थानभ्यर्च्य बहिर्निर्गत्य पुष्पमाराध्य, ये समस्तं जगद्व्याप्य तिष्ठन्ति बलिकांक्षिणः। ते विष्णुपार्षदाः सर्वे गृह्णन्तु बलिमुत्तमम् इति प्रार्थ्य अग्राद्यष्टदिक्षु ध्वजाधिपान् समभ्यर्च्य तद्बाह्ये तत्तद्गणानभ्यर्च्य महाबलिपीठे पूर्वाद्यष्टदिक्षु तदावरणानभ्यर्च्य तन्मध्ये तदधिपं समर्च्य जलाप्लुतबलिं कृत्वा अग्राद्यष्टदिक्षु अष्टग्रहान् समभ्यर्च्य तत्तदवसरे दिग्बलिं कृत्वा पुनः

1 वृषाय गरुडात्मने इति युक्तम्। 2 गुहे कुक्कुटः ध्वजलक्षणम्, अन्यत्र वाहनान्येव ध्वजलक्षणानीति ज्ञेयानि। 3 प्रधानानन्तरमिति पाठः।

शीघ्रं प्रदक्षिणबलिं कृत्वा उदितिदिशि क्षेत्रपालमभ्यर्च्य बलिं दत्वा मूलेन वलिं दत्वा समापयेत्। इति बहिः बलिक्रमः।

**मन्त्राः लिख्यन्ते**- शिवे- नन्दिने। महाकाळाय। भूतनाथाय। महीधराय। पर्वतेशाय। गुहेशाय। कालपाशाय। कपालिने इति ध्वजाधिपाः। अथ सुब्रह्मण्ये- देवसेनापतये। अग्निलोचनाय। दण्डहस्ताय। असिधारिणे। कालपाशाय। ध्वजशेखराय। गदिने। शूलविलासिने इत्यष्टदिक्षु बलिं दद्यात्। सर्वदा अवसाने ईशकोणे विप्रप्रियाय इति च नव ध्वजाधिपाः। विष्णौ- कलशमण्डपे उक्ताः कुमुदाद्याः। दुर्गायां तत्रोक्ताः काळयाद्याः। शङ्करनारायणे- तत्रोक्ताः नन्दिकुमुदात्माद्याः। शास्तरि- तत्रोक्ताः गोप्त्राद्याः। गणपतौ- द्वारकलशपूजोक्ताः वज्रदन्ताद्याः। इति ध्वजाधिपाः प्रागादिक्रमात्प्रोक्ताः। तत्र द्वारवशात् ध्वजाधिपान् सम्पूज्य बलिं दत्वा द्वितीयावरणे शिवे अग्न्याद्यष्टदिक्षु दशदिक्षु वा विंशद्भूतगणेभ्यो नमः इति। विष्णौ अग्न्याद्यष्टदिक्षु पञ्चाशद्भूतगणेभ्यो नमः इति। शङ्करनारायणे सप्ततिभूतगणेभ्यो इति। षण्मुखे- षट्कोटिभूतगणेभ्यो इति। पुनः पूर्ववत् दुर्गायां- अष्टकोटिभूतगणेभ्यो इति। शास्तरि गोघ्नपार्षदेभ्यो। पिङ्गलाक्षपार्षदेभ्यो। वीरसेनपार्षदेभ्यो। शाम्भवपार्षदेभ्यो। त्रिणेत्रपार्षदेभ्यो। त्रिशूलपार्षदेभ्यो। दक्षपार्षदेभ्यो। भीमरूपपार्षदेभ्यो नमः इति। गणपतौ- वज्रदन्तपार्षदेभ्यो। गजास्यपार्षदेभ्यो। भीमपार्षदेभ्यो। महिषासुरपार्षदेभ्यो। मेघनादपार्षदेभ्यो। विरूपाक्षपार्षदेभ्यो। वरदपार्षदेभ्यो। सर्वभक्षपार्षदेभ्यो नमः इति। द्वितीयावरणे- वलिं दत्वा पुनः महाबलिपीठस्याग्रतः स्थित्वा महाबलिपीठं प्रोक्ष्य पुष्पमाराध्य तस्य परितः[1] पूर्वाद्यष्टदिक्षु विष्णौ कुमुदाद्यष्टकं सम्पूज्य बलिं दद्यात्। महावलिपीठोपरि हरिसेनाय नमः इति बलिं दत्वा मूलेन सम्पूज्य बलिं दत्वा मूलान्ते विष्णुपार्षदेभ्यः सर्वेभ्यो भूतेभ्यो नमो नमःस्वाहा इति सम्पूज्य जलाप्लुतबलिं कृत्वा सकृज्जलं दत्वा पुष्पमाराध्य बलिमुद्रां प्रदर्शयेत्। शिवे- महावलिपीठस्याष्टदिक्षु पूर्वादिक्रमेण- भूतिदाय स्वाहा। दुर्निरीक्ष्याय। भीमरूपाय। सुलोचनाय। सुमुखाय। सुवाहवे। त्रिशिरसे। त्रिभुजाय इति। अधोभाग सङ्कल्प्य कुमुदप्रदेशे- पिङ्गलाय स्वाहा। ऊर्ध्वभागं सङ्कल्प्य पीठोपरि हरसेनाय इति। पुनः मूलेन वलिं दत्वा [मूलेन सम्पूज्य बलिं दत्वा] मूलान्ते रुद्रपार्षदेभ्यः सर्वेभ्यो भूतेभ्यो नमो नमः स्वाहा इति जलाप्लुतबलिं दत्वा सकृज्जलं दत्वा

---

1 प्रासादस्य प्राङ्मुखत्वे पश्चिममुखत्वे वा बलिपीठे पूर्वाद्येवार्चनम्।

पुष्पाराधनान्ते बलिमुद्रां प्रदर्शयेत्। पुनः शङ्करनारायणे-वलिपीठस्य पूर्वादि नैर्ऋत्यन्तं, भूतिदादि चतुरः पश्चिमादीशानान्तं, कुमुदादिचतुरः अथवा बलिपीठस्य पूर्वाद्यष्टदिक्षु भूतिदाय स्वाहा कुमुदाय नमः इत्यादि षोडशमन्त्रैः पृथग्वलिं दत्वाऽधोभागे पिङ्गलाय इति पीठोपरि परमेष्ठीशसेनाय इति वलिं दत्वा पुनः आयान्तु पार्षदाः सर्वे शाङ्करा वैष्णवास्तथा। वलिपीठेऽत्र सन्तुष्टाः निवसन्तु यथासुखम्।। नमः सर्वपार्षदेभ्यो नमः इति च। पुनः मूलेन वलिं दत्वा मूलान्ते शिवनारायणपार्षदेभ्यः सर्वेभ्यो भूतेभ्यो नमो नमः स्वाहा इति जलाप्लुतबलिः। अथ दुर्गायां बलिपीठस्य पूर्वाद्यष्टदिक्षु- ब्रह्मघोष्यै। सुघोष्यै। यज्ञवेष्ट्यै। सुरङ्गिण्यै। सुमुख्यै। सुभुजायै। प्रमोदिन्यै। आत्मन्यै इति। पुनःपीठोपरि ब्राह्म्यै नमः इति बलिं दत्वा तत्रैवाष्टदलस्थाने काळ्याद्याः पूजयेद्वा। पुनः मूलेन बलिं दत्वा मूलान्ते दुर्गापार्षदेभ्यः सर्वेभ्यो भूतेभ्यो नमो नमः स्वाहा। इति जलाप्लुतबलिः। संवन्द्य बलिमुद्रां वेध्नीयात्। अथ सुब्रह्मण्ये- बलिपीठस्य पूर्वाद्यष्टदिक्षु- शूरसेनाय। उग्रसेनाय। शिखिसेनाय। जगत्सेनाय। महासेनाय। चण्डसेनाय। क्रुद्धसेनाय। क्रूरसेनाय इति। अधोभागे जगत्सेनाय। उपरि- स्कन्दसेनाय इति वा, अथवा भूतिदाय स्वाहा इत्यादि पिङ्गलान्तान्, उपरि स्कन्दसेनाय इति वलिं दत्वा, ये भूताः स्कन्दसेनस्य पार्षदा वलिभोजिनः। तृप्यन्तु ते मुदं यान्तु सद्भ्योऽसद्भ्यो नमो नमः स्वाहा[1] इति जलाप्लुतवलिः। पुष्पाराधनान्ते वलिमुद्राः प्रदर्शयेत्। पुनः विघ्नेशे वलिपीठस्य पूर्वाद्यष्टदिक्षु- गजवक्त्राय। गणेशाय। विनायकाय। चण्डविक्रमाय। विघ्नकराय। सर्पमेखलाय। शूर्पकर्णाय। नागदन्तिने इति, अधोभागं सङ्कल्प्य कुमुदे- रुद्रवक्त्रजाय। उपरि विघ्नसेनाय इति। पुनः मूलेन वलिं दत्वा मूलान्ते- विघ्नपार्षदेभ्यः सर्वेभ्यो भूतेभ्यो नमो नमः स्वाहा इति जलाप्लुतबलिः। पुनःसकृज्जलं दत्वा बलिमुद्रां प्रदर्शयेत्। पुनः शास्तरि- बलिपीठस्याग्रतः स्थित्वा बलिपीठं संप्रोक्ष्य पुष्पं समर्प्य संवन्द्य पुनस्तत्र पूर्वाद्यष्टदिक्षु वीरबाहवे नमः इत्याद्यष्ट, पुनरधोभागं सङ्कल्प्य कुमुदके- भूतेशाय। उपरि- शास्तृसेनाय इति। पुनः मूलेन बलिं दत्वा मूलान्ते शास्तृपार्षदेभ्यः सर्वेभ्यो भूतेभ्यो नमो नमः स्वाहा इति जलाप्लुतबलिः। पुनः जलं दत्वा वलिमुद्रां वन्धयेत्। इति सप्तसु देवेषु महाबलिपीठे बलिप्रकारः। पुनस्तद्वहिः वास्तुबल्युक्तान् देवग्रहादीन् द्वारवशात् पितृग्रहादीन् वा सम्पूज्य वलिं दद्यात्। तत्र देवग्रहादिवलिदाने ओं नमो नारायणाय विष्णुपार्षदेभ्यः

1 ग्रहेभ्यः स्कन्दपार्षदेभ्यश्च सर्वेभ्यस्तेभ्यस्ताभ्यो नमो नमः।

सर्वेभ्यो भूतेभ्यो नमो नमः स्वाहा इति विष्णौ। शिवादिषु तत्तन्मूलान्ते तत्तत्पार्षदेभ्यः सर्वेभ्यो भूतेभ्यो नमो नमः स्वाहा इति जलगन्धपुष्पहविषा तत्तद्दिग्बलिं कुर्यात्। एवमष्टदिक्षु बलिं दत्वा दिग्बलिमन्त्रेण शीघ्रप्रदक्षिणबलिं कृत्वा पुनरीशकोणे क्षं क्षेत्रपालाय नमः। इति सम्पूज्य बलिं दत्वा स्वस्वमूलेन च सम्पूज्य बलिं दत्वा शेषं हविः तस्मै निवेद्य तद्विसृज्य गण्डूषादि दत्वा किञ्चित्सम्पूज्य ब्रह्मार्पणादि सर्वं कुर्यात्। अथवा द्वितीयावरणान्ते देवग्रहादिकं क्षेत्रपालबलिं जलाप्लुतबलिं कृत्वा महाबलिपीठे समापयेत्। उभयपक्षे पुनरन्तर्गत्वा प्रदक्षिणीकृत्य मान . . . . इत्यादिना नमस्कृत्य देवं संवन्द्य प्रसादं लभेत। इति श्रीभूतबलिप्रकारः।

**अथोत्सवबलिः**- हविः सम्पूज्य द्वारि स्थित्वा सृष्टिस्थित्यादिना प्रार्थ्य द्वास्थादीन् स्वस्वमन्त्रैरुपस्थाय श्रीभूतबल्युक्तक्रमात् द्वास्स्थाद्यनन्तपर्यन्तानां बलिं दद्यात्। तत्राग्रादिदशदिक्षु लोकपालबल्यन्ते तत्पार्षदेभ्यो नमः इति बलिं दत्वा ओं नमो भूतेभ्यो इत्यादि मन्त्रेण बलिं दद्यात्। पुनः शिवे गणपतौ सुब्रह्मण्ये च दशसु दिक्षु ओं नमो भूतभ्य इति बलिदानानन्तरं तत्र तत्र- पूर्वस्यां दिशि ये भूतादि[1] मन्त्राभ्यां बलिः। शङ्करनारायणे दुर्गायां शास्तरि च दद्याद्वा आभ्यां मन्त्राभ्याम्। विष्णौ न [तथा] बलिं दद्यात्। अत्र शिवे वैश्रवणबलिं दत्वा पुनः सोमस्य बलिं दद्यात्। पुनः सप्तसु देवेषु श्रीभूतबल्युक्तक्रमात् मातृशास्तृदुर्गासुब्रह्मण्यानां बलिं दद्यात्। शिवे वाहनमात्रादीनां तत्र प्रधानमन्त्रानन्तरं स्वस्वगायत्री- श्रीभूतबल्युक्ततत्पार्षदादिमन्त्रैश्च बलिं दद्यात्। विष्णौ अष्टसु दिक्षु स्कन्दाद्यावृतिभ्यः बलिं दद्यात्। पुनः शङ्करनारायणे दुर्गायां च पूर्वाद्यष्टदिक्षु स्कन्दादिभ्यो बलिं दद्यात् वा। विष्ण्वादौ स्कन्दावरणे प्राग्भागे स्कन्दं, अग्निकोणे शास्तारं, दक्षिणकोणे धर्मं, गन्धर्वे मातॄः, भृङ्गपदे शास्तारं, निरृतिकोणे सूर्यं, पश्चिमे ब्रह्माणं, वायुकोणे सूकरं दुर्गां च, मुख्यपदे स्कन्दं, भल्लाटपदे उत्तरमातॄः, सौम्ये अम्बिकां, ईशकोणे शिवं, सम्पूज्य पुनः प्रदक्षिणीकृत्य उदितिभागे निर्माल्यधारिणं यजेत्। इत्यन्तर्बलिक्रमः। **बहिर्बलिक्रमो लिख्यते**- विष्णौ श्रीभूतबल्युक्तक्रमात् कुमुदादिभ्यः पञ्चाशद्भूतगणेभ्यश्च बलिं दत्वा तृतीयावरणे- पूर्वस्यां दिशि इत्यादिमन्त्रैः अधस्ताद्दिशि इत्यादिपर्यन्तमन्त्रैः द्वारवशादारभ्य दशदिक्षु बलिं दद्यात्। पुनः महाबलिपीठे ये भूताः पुरःसदः

---

1 **ओजाशासु ये भूता इति मन्त्रेणेति शेषः**

इत्यादिभिर्मन्त्रैः पूर्वाद्यष्टदिक्षु पुनरीशकोणे च बलिं दद्यात्। पुनस्तदन्तः पूर्ववत् कुमुदाद्यष्टकान्ते स्वमन्त्रैः पीठाधिपतिं पूजयेत्। अथ शिवे- श्रीभूतवल्युक्तक्रमात् नन्द्यादिभ्यो बलिं दत्वा विंशद्भूतगणेभ्यो दशदिक्षु बलिं दत्वा महाबलिपीठे भूतिदादिभ्यो बलिं दत्वा स्वमन्त्रैः महाबलिपीठे बलिं दद्यात्। पुनः यस्मिन्देवे अन्तः शिववत् बलिदानादि, तस्मिन् देवे बहिश्च तद्वत्। यस्मिन् देवे वैष्णववदन्तः तस्मिन् देवे बहिरपि तद्वत्। शास्तरि- एतयोः पक्षयोः एकमाश्रित्य स्कन्दावरणं विना बलिं दद्यात्। दुर्गायामष्टकोटिगणस्थाने सुदुर्गाभ्यो बलिं दद्यात्। शिवे- विंशद्भूतगणस्थाने[1] महाकाळादिभ्यो बलिं दद्यात्। गुहे- षट्कोट्यन्ते वा महाबलिपीठान्ते वा प्रदक्षिणद्वयेन ये भूतादि मन्त्राभ्यां बलिं दद्यात्। शास्तरि- तृतीयावृत्तौ वा पञ्चमावृत्तौ वा चाम्बादीनां गणा इत्यादि चतुर्भिर्मन्त्रैः[2] बलिं दद्यात्। पुनः बलिपीठे बलिं दद्यात्। विघ्नेशे[3]- बलिपीठान्ते उत्सवार्थमिति बलिं दद्यात्। पुनः सप्तसु देवेषु देवग्रहादेः पूर्वं ये समस्तमित्यादि, ओं नमो भूतेभ्य इत्यादि, गृह्णन्तु वलिमित्यादि त्रिविधमन्त्रैरेकावृत्या अष्टसु दिक्षु बलिं दद्यात्। शिवे- नन्द्यादेः पूर्वं वा एकावृत्या बलिं करोतु। इत्युत्सवबलिक्रमः सङ्ग्रहेणोक्तः।

**उपस्थानमन्त्रान् मालामन्त्रांश्च वक्ष्यामि-** [विष्णौ] नमस्ते द्वारपालाय चण्डायामिततेजसे।[4] नरसिंहतनूजाय शङ्खेनाङ्कित मौलये २। वाहनाय महाविष्णोस्ताक्ष्यायामिततेजसे। गरुडाय नमस्तेऽस्तु दुष्टसर्पेन्द्रमृत्यवे ३। शय्या यो जगतां धातुर्विष्णोर्विविधमायिनः। अनन्ताय नमस्तुभ्यमहीन्द्रनमिताङ्घ्रये ४। नमस्तेस्तु महायोगिन् व्याख्यामुद्रालसत्कर। दक्षिणामूर्तिरूपाय रुद्राय परमात्मने ५। नमस्ते सर्वभूतेश सर्वसम्पत्प्रदायिने। सर्वविघ्नविनाशाय विघ्नेशाय शिवात्मने ६। नमस्ते द्वारपालाय चक्रव्यग्रमहाभुज। दृष्ट्या निहतदैत्याय वैष्णवाय नमो नमः ७। नमस्ते द्वारपालाय शङ्खव्यग्रमहाभुज। दृष्ट्या निहतदैत्याय वैष्णवाय नमो नमः ८। दैत्यदर्पविनाशाय सहस्राक्षाय धीमते। कुलिशव्यग्रहस्ताय नमस्तेस्तु शतक्रतो ८। मुखं यः सर्वदेवानां येन हव्यं च नीयते। येन प्रवर्तते सर्वं नमस्तस्मै हविर्भुजे १०। येन संह्रियते सर्वं येन धर्मश्च रक्ष्यते। यस्माद्बिभेति लोकोऽयं प्रेतनाथ नमोऽस्तु ते ११। राक्षसा यातुधानाश्च

---

1 विंशद्भूतगणैः सह महाकालाः समुच्चिताः इत्यवगम्यते 2 पृथगावृत्या इत्यर्थः। 3 आवरणद्वयान्ते। अत्र सर्वत्र मूलग्रन्थतद्व्याख्ययोर्विरोधो भासते। 4 नरसिंहतनूजाय चक्रेणाङ्कितमौलये। १। नमस्ते द्वारपालाय प्रचण्डायामितौजसे।।

पिशा ‌ ाश्रयन्ति यम्। तस्मै निर्ऋतिरूपाय रक्षसां पतये नमः १२। येन गंगक्ष्यन सर्वं यस्मिन् सर्वं प्रतिष्ठितम्। अमोघपाशहस्ताय तस्मैपां पतये नमः[1] १३। पूर्यन्ते च ह्रियन्ते च येन प्राणादयः क्रमात्। भूतानां पतये नित्यं नमस्तस्मै मरुत्वते १४। यं प्राश्यामरतां यान्ति देवा यज्ञशरीरिणः। सोमाय गदिने तस्मै ज्योतिषां पतये नमः १५। यत्प्रसादाज्जगत्सर्वं धनेन परिपूर्यते। यक्षगुह्यकनाथाय धननाथ नमोऽस्तु ते १६। येन कालाग्निना लोको युगान्तेष्वपि दह्यते। तस्मै ते ब्रह्मणः पुत्र विरूपाक्ष नमोऽस्तु ते १७। येन सृष्टं जगत्सर्वं सर्गादौ विष्णुशासनात्। पितामह नमस्तुभ्यं सर्वलोकेश पद्मज १८। पन्नगाधिपतिर्देव अनन्तो नाम नामतः। पाताळवासिने नित्यं नागराज नमोऽस्तु ते १९। वीरभद्र नमस्तेऽस्तु नमो विघ्नेश्वराय च। ब्राह्म्यादिभ्यश्च मातृभ्यो सर्वेभ्यो वै नमो नमः २०। श्रीधराय नमस्तेऽस्तु नमस्तेऽश्वमुखाय च। वागीश्वर्यादिमातृभ्यः सर्वाभ्यो वै नमो नमः २१। विष्वक्सेन नमस्तेस्तु देवनिर्माल्यधारिणे। शङ्खचक्रगदापाणिन् महाप [া]रिषदेश्वर २२। इति विष्णौ उपस्थानमन्त्राः प्रोक्ताः। **शिवादौ विशेषमन्त्रा [एव] लिख्यन्ते** [शिवे] –नन्दिमहाकाळयोः. . . . नमस्ते सर्व. . . . शिवात्मने। नमस्तेऽस्तु महा. . . . परमात्मने[2]। नमस्ते द्वारियुक्ताय शूलहस्ताय धीमते। दृष्ट्या निहतदैत्याय शाङ्कराय नमो नमः। नमस्ते द्वारियुक्ताय परशुव्यग्रपाणये। दृष्ट्या निहतदैत्याय शाङ्कराय नमो नमः। वाहनाय महाशम्भोः शैलार्णवघनस्वन। ऋषभाय नमस्तुभ्यं सर्वदुष्टप्रशान्तये। इति शिवे।

**शङ्करनारायणे**- नमस्ते द्वारियुक्ताय शूलहस्ताय धीमते। दृष्ट्या निहतदैत्याय शाङ्कराय नमो नमः १। नमस्ते द्वारपालाय चण्डायामिततेजसे[3]। नरसिंहतनूजाय चक्रेणाङ्कितमौलये २ इति प्रासादस्य बहिर्द्वारि। वाहनाय महाशम्भोः. . . .। वाहनाय महाविष्णोः. . . .। इति शङ्करनारायणे विशेषः। **दुर्गायां**- नमस्ते द्वारियुक्तायै चण्ड्यै खेटासिधारिणि। नरसिंहतनूजायै चक्रेणाङ्कितमौलये। नमस्ते द्वारियुक्तायै अम्बिकायै महौजसे। नरसिंहतनूजायै शङ्खेनाङ्कितमौलये। नमस्ते द्वारियुक्तायै जयायै ज्वालयावृते। दृष्ट्या निहतदैत्यायै कात्यायिन्यै नमो नमः। नमस्ते द्वारियुक्तायै विजयायै महौजसे। दृष्ट्या

---

1 तस्मै चाप्पतये नमः। 2 अनयोर्गणेशदक्षिणेशबल्यङ्गत्वात् नन्दिमहाकाळयोर्विशेषमन्त्रौ न भवतः। मूलेऽपि न दृश्येते। 3 प्रचण्डायामितौजसे पा.

निहतदैत्यायै कात्यायिन्यै नमो नमः। वाहनाय महादेव्याः सिंहायामिततेजसे। अतुल्यबलवन्नत्र नमस्तेऽस्तु हरीश्वर। नमस्ते सर्व. . . .। नमस्तेऽस्तु महायोगिन्. . . .। दैत्यदर्प. . . .। मुखं यः. . . .। दण्डहस्ताय भीमाय सर्वप्राणहराय च। प्रेतनाथ नमस्तेऽस्तु पितृलोकनिवासिने।। खड्गहस्ताय घोराय नैर्ऋताय महात्मने। रक्षोधिपाय तीक्ष्णाय नमस्तेऽस्तु निशाचर।। जलाधिपाय प्राणाय सर्वभूतहिताय च। पाशहस्ताय भीमाय नमस्तेऽस्तु अपां पते।। सदागताय प्राणाय सर्वभूतहिताय च। ध्वजहस्ताय शब्दाय नमस्तेऽस्तु समीरण। नक्षत्राणां च सर्वेषां सोमो राजा प्रकीर्तितः। गदापट्टसधारी च सोमराजाय ते नमः।। धनदाय कुबेराय सर्वौषधिधराय च। पौलस्त्याय च नीलाय नमस्तेऽस्तु धनाधिप।। ईशानः सर्वविद्यानामक्षमालाधरो हरः। हरिणहस्तो महात्मा च नमस्तेऽस्तु हरिप्रिय।। स्रष्टा चरस्य सर्वस्य लोकानां च पितामहः। आदिश्च सर्वभूतानां तस्मै देवात्मने नमः।। पन्नगाधिपतिर्देव अनन्तो नाम नामतः। पाताळवासिने नित्यं नागराजाय ते नमः।। तर्जयन्ती जगत्सर्वं सदा निर्माल्यधारिणि। वरदाभयहस्तायै चडिकायै नमोऽस्तु ते इति दुर्गायां विशेषः। **सुब्रह्मण्ये**- इन्द्रः सुरपतिश्चैव वज्रहस्तो महावलः। शतयागाधिपो देवस्तस्मै यागात्मने नमः।। सर्वदेवमयो देवो रक्तो वह्निर्महाबलः। सप्तजिह्वो महावीर्यो नमो वैश्वानराय च।। दण्डहस्तो महादेवो धर्माध्यक्षो महाबलः। आवाहयेद्धर्मराजं तस्मै प्रेतात्मने नमः।। खड्गहस्तधरो देवो नैर्ऋतो नीलविग्रहः। निर्ऋते च नमस्तुभ्यं खड्गहस्तात्मने नमः।। जलराज महाराज विख्यात इति निम्नगः। पश्चिमां दिशमाचष्टे पाशहस्तात्मने नमः।। सर्वप्रकाशको नित्यः सर्वलोकाधिदेवता। ध्वजहस्तो महाप्राणस्तस्मै वाय्वात्मने नमः।। नक्षत्राणां. . . .। धनदाय. . . .। सर्वलोकाधिपो देव ईशानो नाम नामतः। शूलपाणिर्महादेवस्त्रैलोक्याधिपते नमः।। स्रष्टा चरस्य सर्वस्य. . . .। पन्नगाधिपतिर्देवः. . . .। वीरभद्र नमस्तेऽस्तु. . . .इति।

**गणपतौ**- वाहनाय गणेशस्य महाचाषाय धीमते। मध्ये च पार्षदेशानां[1] भ्राजमानाय वै नमः। नमस्ते सर्वभूतेश. . . .। इत्यादि शिवोक्ताः। **शास्तरि**- विष्णूक्ता वा उपस्थानमन्त्राः। एवं शिवे शङ्करनारायणे दुर्गायां सुब्रह्मण्ये गणपतौ शास्तरि द्वास्थादीनामुपस्थानमन्त्राः विशेषेणोक्ताः। प्रणवान्ते

1 पारिषदेशानाम्।

चतुर्थ्यन्तं स्वस्व नाम . . . . तदन्ते विष्णुं, रुद्रं, शिवनारायणं, दुर्गां, स्कन्दं, विघ्नेशं, शास्तारं इति। पुनस्तदन्ते पार्षद इति चतुर्थ्यन्तं-नमो अन्त्ये[1] इति परिवारमन्त्राणामुद्धाराः। ओं आनन्दाय विष्णुपार्षदाय नमः इत्यादि सर्वत्र द्रष्टव्यम्। तत्पार्षदेभ्यो नम इति तत्पार्षदमन्त्रः। विष्णौ[2]- उत्सवबलौ अन्तर्द्वारि- ओं आनन्दाय नमः, नन्दनाय नमः। दुर्गायां बहिर्द्वारि- ओं जयायै दुर्गापार्षदायै नमः। विजयायै। शिवे- ओं स्फुरन् स्फोटय हुं त्र्यक्ष स्वाहा[3] इति नन्दिमन्त्रः। ओं प्रों कपालिन् ओं नमः इति महाकाळमन्त्रः[4]। विष्णौ- ओं पक्षिराजाय स्वाहा। गरुडाय नमः। वैनतेयाय नमः। वैनतेयाय विद्महे पक्षिराजाय धीमहे। तन्नो गरुडः प्रचोदयात् इति गरुडगायत्री। इन्द्रादिलोकपालानां मन्त्रेषु इन्द्रादिविष्ण्वादिशब्दयोर्मध्ये सुराइत्यादिजात्यन्ते अधिपतये इति योजयेत्। सुराः, तेजांसि, प्रेताः, रक्षांसि, जलानि, प्राणाः, नक्षत्राणि, विद्याः, लोकाः, नागाः इति दश जातयः। इन्द्राय सुराधिपतये विष्णुपार्षदाय नमः। तत्पार्षदेभ्यो नमः। ओं नमो भूतेभ्यो[5] भूतकृद्भ्यः सर्वेभ्योऽरिष्टकृद्भ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा। ओं अग्नये तेजोधिपतये विष्णुपार्षदाय नमः तत्पार्षदेभ्यो नमः। ओं नमो भूतेभ्यो नमः स्वाहा। यमाय प्रेताधिप तये . . . . दाय नमः। तत्पा . . नमः। ओं नमो भूतेभ्यो . . . . स्वाहा। इत्याद्यनन्तपर्यन्तानां मन्त्राः। पुनःविष्णौ स्कन्दावरणं कुर्यात्। शङ्करनारायणे दुर्गायां च स्कन्दावरणं कुर्यात्। शिवे गणपतौ सुब्रह्मण्ये ओं नमो भूतेभ्य इति बलिं दत्वा दशदिक्षु तत्र तत्रैव पूर्वस्यामित्यादि मन्त्रेण बलिं दद्यात्। पूर्वादिचतुर्दिक्षु [अग्न्यादिविदिक्षु बलिं दत्वा] उपरिभागं सङ्कल्प्य ईशकोणे चतुर्थबल्यनन्तरं ये भूताः पुर सदः [उपरिसदः] इत्यादिना बलिं दद्यात्। पूर्वस्यां दिशि शिवस्य भगवतो ये गणाः वज्रपाणयः श्वेताः श्वेताक्षाः श्वेतलोहिताः दिव्य [ा] न्तरिक्षभौमाः पाताळवासिनश्च तेभ्यो वै नमो नमः स्वाहा। इति पूर्वदिङ्मन्त्रः। पुनस्तत्रान्यदिक्षु दिक्पदे वज्राद्यस्त्रपदे श्वेतादि वर्णपदे च तत्तत्पदं योजयेत्।

---

1 नमो अन्ते। 2 इतः परं उत्सवबलौ मन्त्रयोजनां करोति। भूतबलेस्तु तारादि नत्यन्तः पार्षदयुक्तः। तत्पार्षदेभ्यो नमः इत्येव समानमिति ग्रन्थाशयः। अत एव इन्द्रमन्त्रेण उत्सवबल्युक्तं नमो भूतेभ्य इति मन्त्रं योजयति। उपस्थानमालामन्त्रा उत्सवबलेरेवेत्यपि वृत्तिकाराशयः। 3 शिवे- ओं स्फुर स्फोटय हुं त्र्यक्ष स्वाहा इति वा। 4 प्रों कपालिन् हः इत्येव मूलराम्मतः। 5 इन्द्रादि मन्त्रेषु सर्वत्र ओं नमो भूतेभ्यः इति मन्त्रयोजनं विचारणीयम्।

आग्नेय्यां दिशि शिवस्य- शक्तिपाणयो रक्ताः रक्ताक्षा इत्यादि।
याम्यां " " दण्डपाणयः कृष्णाः कृष्णाक्षाः " ।
नैर्ऋत्यां " " खड्गपाणयः श्यामाः श्यामाक्षाः "।
वारुण्यां " " पाशपाणयः शबलाः शबलाक्षाः "।
वायव्यां " " अङ्कुशपाणयः धूम्राः धूम्राक्षाः "।
सौम्यां " " गदापाणयः सिताः सिताक्षाः "।
ऐशान्यां " " शूलपाणयः कपिलाः कपिलाक्षाः "।
ऊर्ध्वायां दिशि- पद्मपाणयः सूक्ष्माः सूक्ष्माक्षा इत्यादि।

अधस्ताद्दिशि- विषपाणयः धूम्राः धूम्राक्षा इत्यादि। शिवपदे- गणपतेर्भगवतो ये गणाः, सुब्रह्मण्यस्य भगवतो ये गणाःइत्यादि। तत्र प्राङ्मन्त्रबल्यनन्तरं ये भूताः पुरः सदो निशाचरेन्द्राः सन्तोऽसन्तः सदसत्तः विरूपाः विश्वरूपाः महारूपा घोररूपा मृगास्या विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदाश्च बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि महद्भ्यः क्षुद्रकेभ्यश्च तेभ्यस्ताभ्यो नमो नमः स्वाहा। इति प्राङ्मन्त्रः। पुनः दक्षिणादिषु ये भूताः दक्षिणसदः. . . . । ये भूताः पश्चिमसदः. . . . । ये भूता उत्तरसदः. . . . । ये भूता उपरिषदः. . . नमः स्वाहा इति पूर्वादिपञ्चसु पञ्चविधा मन्त्राः। (अग्न्यादिपञ्चसु [वैष्णवादौ] चतुर्विधा मन्त्राः) । वैष्णवादौ महाबलिपीठे अग्न्यादिषु ये भूता अग्निसदः. . . निर्ऋतिसदः. . . वायुसदः. . . ईशसदः. . . . इति च नवसु दिक्षु बलिं कुर्यात्। पुनः शिवे- लोकपाल (तद्भवन्ति?) बल्यनन्तरं अग्रमण्टपे ऋषभाय नमः। महाबलाय। सौरभेयाय। हरवाहनाय इति वृषमन्त्राः। सौरभेयाय विद्महे महाबलाय धीमहे। तन्नो वृषः प्रचोदयात् इति गायत्री। पुनःविष्णु पार्षदेभ्यो नमः। पुनः विष्णवादौ स्कन्दावरणम्। ) ओं नमः. . . षण्मुखाय. . . तत्पार्ष. . . . पूर्वभागे। भां भूताधिपतये. . . तत्पा. . . अग्निकोणे। धर्माय. . . तत्पार्ष. . . दक्षिणे। पुनःसर्वत्र सामान्य (क्रम) मात्रतः [नाम मन्त्रतः] तत्र वीरभद्रेति प्रार्थ्य पूर्वपश्चिमपार्श्वयोः (वीं) वीरभद्रं (गं) गणपतिं सम्पूज्य बलिं दत्वा स्वस्वगायत्र्या तत्पार्षदेभ्यो नम इति पृथक् सम्पूज्य बलिं दद्यात्। पुनस्तयोर्मध्ये पूर्वादि पश्चिमान्तं व्रों व्राह्म्यै[1]नमः। मं माहेश्वर्यै। मां कौमार्यै। ह्रौं वैष्णव्यै।

1 ब्रह्माण्यै

हें वाराह्यै। हों इन्द्राण्यै। हुं चामुण्ड्यै इति। वीरभद्राय विद्महे महाननाय धीमहे तन्नः शान्तः प्रचोदयात्। एकदंष्ट्राय विद्महे गजाननाय धीमहे। तन्नो दन्तिः प्रचोदयात्। ब्रह्मभूतायै विद्महे कुशहस्तायै धीमहे। तन्नो ब्राह्मी प्रचोदयात्। महेश्वरभूतायै विद्महे शूलहस्तायै धीमहे। तन्नो माहेश्वरी प्रचोदयात्। स्कन्दभूतायै विद्महे शक्तिहस्तायै धीमहे। तन्नः कौमारी प्रचोदयात्। विष्णुभूतायै विद्महे चक्रहस्तायै धीमहे। तन्नो वैष्णवी प्रचोदयात्। प्रजापतिभूतायै विद्महे गदाहस्तायै धीमहे। तन्नो वाराही प्रचोदयात्। इन्द्रभूतायै विद्महे वज्रहस्तायै धीमहे। तन्न इन्द्राणी प्रचोदयात्। रुद्रभूतायै विद्महे खड्गहस्तायै धीमहे। तन्नश्चामुण्डी प्रचोदयात्। सर्वत्र तत्पार्षदे . . .। मातृभ्यो नमः। लोकमातृभ्यो . . .। सर्वमातृभ्यो . . .। सर्वमातृगणेभ्यो . . .। सर्वत्र तत्पार्ष . . .। इति दिक्षु। उपरि- नानारूपा मातरः प्रति दिशं व्यवस्थिताः दिव्यन्तरिक्षभौमाः पाताळनिवासिन्यश्च इहायान्तु विष्ण्वाज्ञया मामनुगृह्णन्तु प्रतिगृह्णन्तु पूजां सौम्यरूपधारिण्यः ताभ्यो देवीभ्यो नमो नमः स्वाहा। इति साधारणो मन्त्रः। तत्र विष्ण्वादिपदे रुद्राज्ञया . . . शिवनारायणाज्ञया . . . दुर्गाज्ञया . . . स्कन्दाज्ञया . . . विघ्नाज्ञया . . . शास्त्राज्ञया . . . इति योजयेत्। तत्पार्ष . . विकल्पः[1]। पुनः सर्वेषु आकाशमातृभ्यो नमः। आकाशमातृगणेभ्यो नमः। बलिं दद्यात्। पुनरधः मूलेन बलिं दत्वा श्रीभूतबल्युक्तमन्त्रेण जलाप्लुतबलिं कुर्यात्। पुनः पुष्पमाराध्य बलिमुद्रां प्रदर्श्य संवन्द्य शास्तृबलिं कुर्यात्। मूलेन[2] शास्त्रे भूताधिपतये विष्णुपार्षदाय[3] नमः। इत्यादि शास्त्रे मनुः। शम्बरकुमाराय। हस्त्यश्वाय। नीलाय। कालाय। कपर्दिने। उग्राय। रुद्रसुताय। भूतनाथाय। भूतनाथाय विद्महे भवपुत्राय धीमहे। तन्नः शास्ता प्रचोदयात्। तत्पर्ष . . .। तत्पश्चिमे . . . चाम्बादीनां गणाः सर्वे कोटिकोटिगणाधिपाः। भवन्तु सहिताः सर्वे तेभ्यस्ताभ्यो नमो नमः। मात्राद्येतत्पर्यन्तं सामान्यम्। निर्ऋतिकोणे दिवाकराय नमः इति वा खषोत्काय स्वाहा इति वा। तत्पार्ष . . .। वरुणदिशि ओं तत्सन्नमो ब्रह्मणे तत्सन्नमः। तत्पार्ष . . .। वायुकोणे ओं हुं[4] नमः। (वराहाय)। तत्पार्ष . . .। अथ स्वमूलमन्त्रेण तत्पार्ष . . . इति च दुर्गायै बलिं दद्यात्। वायुसोमयोरन्तराळे

---

1 उत्तरमन्त्रे बलौ चेत्यर्थः। 2 निजमूलमन्त्रेणेत्यर्थः। 3 भूताधिपतये विष्णुपार्षदायेति भागः अधिक इत्याभाति। 4 हूं नमः इति भवितव्यमित्याभति।

स्कन्दाय मूलेन, षण्मन्त्रैः, सनत्कुमाराय विद्महे षडाननाय धीमहे। तन्नः स्कन्दः प्रचोदयात्। तत्पार्ष...। तत्पूर्वे श्रीधरेत्यादिना प्रार्थ्य श्रीधराय नमः। अश्वमुखाय। उभयत्र तत्पार्षदेभ्यो नमः इति प्रत्येकपार्श्वयोः। पुनस्तयोर्मध्ये पश्चिमादि पूर्वान्तं लीं वागीश्वर्यै। लूं क्रियायै। लैं कीर्त्यै। लों लक्ष्म्यै। लं सृष्ट्यै। लें विद्यायै। लां शान्त्यै। सर्वत्र तत्पार्ष...पुनः मातृभ्यो इत्यादि पूर्ववत् जलाप्लुतबल्यन्तम्। पुनः सौम्ये अम्बिकायै। तत्पार्ष...। ईशकोणे ओं नमः शिवाय। तत्पार्षदेभ्यो...। इति बलिं दत्वा पुनः प्रदक्षिणीकृत्य निर्माल्यधारिणे बलिं दद्यात्। तत्र विष्वक्सेन नमस्तेऽस्तु...इत्यादिना प्रार्थ्य ओं विष्वक्सेन वौं नमः। तत्पार्ष...मूल...जलाप्लुतबलिः। दुर्गायां। तर्जयन्तीति प्रार्थ्य क्लीं मुण्डिन्यै नमः। तत्पार्ष...मूल...जलाप्लुतबलिः। शङ्करनारायणे- चण्डसेनाय नमः। तत्पार्ष...मूल...जलाप्लुतबलिः। पुनः शिवे- स्कन्दबल्यनन्तरं धुनि चण्ड हुं फट्। चण्डाय नमः। चण्डचण्डाय। चण्डेश्वराय। चण्डचण्डाय विद्महे चण्डेश्वराय धीमहे। तन्नश्चण्डः प्रचोदयात्। तत्पार्ष...मूल...जलाप्लुतम्। गणपतौ सुब्रह्मण्ये शास्तरि च स्कन्दबल्यनन्तरं स्वस्वनिर्माल्यधारि...तत्पार्ष...। स्वस्वमूलजलाप्लुतम्। इत्यन्तर्बलिः।

**विष्णौ**- मण्टपस्य बहिर्द्वारि श्रियै, पुष्ट्यै, सभान्तर्द्वारि शङ्खनिधये...पुष्पनिधये... (बहिः) चक्राय...शङ्खाय...। शिवादि षट्सु देवेषु श्रीभूतबल्युक्तद्वास्स्थाः। बहिः- ये समस्तं जगद्व्याप्य तिष्ठन्ति वलिकांक्षिणः। विष्णुपारिषदाः सर्वे गृह्णन्तु बलिमुत्तमम् इति, वाद्यैश्च घोषयेत्, विष्णुपारिषदा इत्यत्र रुद्रादि तत्पारिषदा योज्याः। विष्णौ- श्रीभूतबल्युक्तक्रमात् कुमुदाद्यष्टकं पञ्चाशद्भूतगणाष्टकं च कृत्वा पूर्वस्यां दिशीति दशदिक्षु वलिं दद्यात्। पुनः बलिपीठे ये भूताः पुरः सदः,। ये भूता अग्निसदो इत्यादि नवमु दिक्षु वलिं दत्वा कुमुदाद्यष्टकं (हरिसेनं) बलिपीठोपरि नदीयषड्विधमन्त्रैः बलिं दद्यात्। एवं दुर्गायां शङ्करनारायणे शास्तरि च क्रमात्। पुनः शिवे सुब्रह्मण्ये गणपतौ च श्रीभूतबल्युक्तक्रमात् प्रथमावरणं द्वितीयावरणं पुनःमहाबलिपीठे तदावृतं वलिं दद्यात्। एवं वा दुर्गायां शङ्करनारायणे शास्तरि च। दुर्गायां अष्टकोटिगणस्थाने सुदुर्गादयो मन्त्राः। शिवे विंशद्भूतगणस्थाने महाकालादयो मन्त्राः वा। तत्र गुहे

(षट्कोट्यावरणान्ते) ये भूताः स्कन्दसेनस्य पार्षदा बलिभोजिनः। तृप्यन्तु ते मुदं यान्तु सद्भ्योऽसद्भ्यः नमो नमः। इत्यष्टदिक्षु एकावृतिः। पुनः बलिग्रहेभ्यो भूतेभ्यः स्कन्दपार्षदेभ्यो नमो नमः स्वाहा। इत्यपि आवृतिः। शास्तरि-चाम्बाादीनां गणाः. . . नमः इत्यष्टदिक्षु ओं नमोऽस्तु भीमरूपेभ्यो भीमवक्त्रेभ्यो विविधाकृतिभ्यो वरदेभ्यश्च वो नमो नमः। इत्यपि, प्राग्गणेभ्यो बहुरूपेभ्यो विश्वरूपेभ्यः सद्भ्योऽसद्भ्यः सर्वगणेभ्यो नमो नमः। दक्षिणगणेभ्यो बहुरूपेभ्य. . .। पश्चिमगणेभ्यो बहुरूपेभ्यः। उत्तरगणेभ्यो. . . नमः इति पूर्वादि चतुर्दिक्षु। ओं सर्वेभ्यो पिङ्गलेभ्यो महाशनेभ्यो घोरेभ्यो मृगयुभ्यो विनायकेभ्यो मूकेभ्यो बधिरेभ्योऽन्धेभ्यो जडेभ्यः स्थूलेभ्यः कृशेभ्यो दीर्घेभ्यो ह्रस्वेभ्यो नपुंसकेभ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः इत्यपि अष्टदिक्षु।

**पुनः बलिपीठे गणपतौ**- उत्सवार्थं गता ये च याश्च विघ्नप्रहर्षणाः। ओं नमो विघ्नपार्षदेभ्यो नमो विघ्नपार्षदीभ्यो नमो नमः स्वाहा। विष्णौ-बलिपीठे हरिसेनाय नमः। हरिसेनाय विद्महे महाबलाय धीमहे। तन्नःशान्तः प्रचोदयात्। अष्टमूर्तिपार्षदेभ्यः सद्भ्भ्योऽसद्भ्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा। असङ्ख्याता गणाः सर्वे कोटिकोटिगणाधिपाः। भवन्तु सहिताः सर्वे तेभ्यस्ताभ्यो नमो नमः। देवताभ्यः पितृभ्योऽथ भूतेभ्यः सह जङ्गमैः। एतत्स्थाननिवासिभ्यः प्रयच्छामि वलिं नमः। मूलजलाप्लुतं च। अथ शिवे- महाबलिपीठे हरसेनान्ते हरसेनाय विद्महे महाबलाय धीमहे। तन्नः शक्तिः प्रचोदयात्। दशमूर्तिपार्षदेभ्यः. . . नमः स्वाहा। असंख्याता. . . नमः। देवताभ्यः. . . नमः। मूलजलाप्लुतं च। अथ शङ्करनारायणे- उभयमपि कुर्याद्वा। दुर्गादिषु स्वस्वमन्त्रान्ते. . . असंख्याता. . . देवताभ्यः. . . मूलजलाप्लुतं च। पुनः गुहे- ये भूतादि द्वाभ्यां बलिं दद्याद्वा। विघ्ने-उत्सवार्थं वा। सर्वेषु देवेषु एकावृत्या बलिं दद्यात्। तत्र ये समस्तं जगद्व्याप्य तिष्ठन्ति- ओं नमो भूतेभ्यो-गृह्णन्तु बलिमेतत्तु बाह्यस्था विहगाननाः। ये क्रूरा येऽल्पसत्वाश्च भूतप्रेतपिशाचकाः-। वेतालाश्चैव मातङ्गाः हीनाहीनाश्च ये गणाः। सर्वेषां चैव तेषां च हरामि बलिमुत्तमम्। सर्वेभ्य एवं तेभ्यश्च सगणेभ्यो नमो नमः इति। पुनः देवग्रहादिदिग्बलिं शीघ्रबलिं क्षेत्रपालबलिं कुर्यात्। अथवा महावलिपीठं वर्जयित्वा एवं सर्वं कृत्वा बलिपीठे तदीयमन्त्रैः पंक्तिः बलिं दत्वा वलिपीठे समापयेत्। इति उत्सवबलिं कृत्वा प्रदक्षिणी कृत्य

अन्तः प्रविश्य पादौ प्रक्षाळ्याचम्य गर्भगृहं प्रविश्य बलिकौतुकस्थं देवं मूलबिम्बे संयोज्य मान इत्यादिना, य ईशिरे भुवनस्य इत्यादिना च नमस्कृत्य क्षमापयेत् इत्युत्सवबलिप्रकारः। इति सर्वदिवसेषु सवनत्रयेषु देवं सम्पूज्य ब्राह्मणान् भोजयित्वा दिवारात्रौ च वलिं कुर्यात्। रात्रौ च दीपादिभिरलङ्कुर्यात्। पुनस्तीर्थस्नानदिवसात्पूर्वदिवसे अपराह्णे ग्रामवलिं कुर्यात्। तत्र गोपुरद्वारि द्वास्स्थान् सम्पूज्य बलिं दत्वा बहिर्गत्वा ग्रामं प्रदक्षिणीकुर्वन् चैत्यचतुष्पथादिषु अश्वत्थमूले च बलिं दद्यात्। तत्र विष्णौ- विष्णुपारिषदेभ्यश्च प्रमथेभ्यो नमो नमः। मातृभ्यस्तद्गणेभ्यश्च सर्वेभ्यो वै नमो नमः।। शिवे- रुद्रपारिषदेभ्य इत्यादि वा। ओं नमो भूतेभ्य इत्यादि वा मन्त्रः। शङ्करनारायणे- गृह्णन्तु बलिमित्यादि वा। दुर्गायां। ओं नमो भूतेभ्यो . . . गृह्णन्तु वलिं . . . भ्यो नमो नमः। सुब्रह्मण्ये- गृह्णन्तु बलिं . . . स्वाहा[1]। ग्रामपर्वतचारिभ्यो नमो नमः। नमोऽस्तु सिन्धुचारिभ्यः चतुष्पथगताय च। शून्यागारनिवासिभ्यः सर्वेभ्यो वै नमो नमः। शून्यग्रामनिवासिभ्यो वृक्षगुल्मगताय च। देवागारनिवासिभ्यो भूतेभ्यश्च नमो नमः। नमः पारिषदेभ्यश्च . . (नमो नमः)। शास्तरि- ओं घ्रूं नमः सर्वेभ्यः पिङ्गलेभ्यो वहुरूपेभ्यो महागणेभ्यो घोररूपेभ्यो मृगयुभ्यो विनायकेभ्यो बधिरेभ्यः अन्धेभ्यो जडेभ्यो स्थूलेभ्यः कृशेभ्यो ह्रस्वेभ्यो मुण्डेभ्यः स्त्रीभ्यो नपुंसकेभ्यो वहुरूपेभ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा[2]। गणपतौ-मूलेन . . .। इति सर्वासु बलिं दत्वा ग्रामान्ते भटैः सह मृगयां कृत्वा प्राकारान्तर्भागं प्रविश्य क्षेत्रपालाय वलिं दत्वा तत्र समापयेत्। पुनरन्तर्मूलविम्बे देवं संयोज्य क्षमापयेत्।

**देवस्य निद्राविधिः**- तीर्थयात्रायाः पूर्वदिवसे रात्रौ गुरुः स्नात्वा अग्रमण्टप उपविश्य शय्यार्थं पद्मं कुर्यात्। तद्यथा प्रागग्राणि षट् सूत्राणि, उदगग्राण्यष्टसूत्राणि कृत्वा कर्णपुटवीथ्या कोष्ठानि सम्मार्ज्य चतुर्दिक्षु स्वस्तिकखण्डानि कृत्वा यथाशोभं पूरयेत्। वहिर्गुणरेखां कुर्याद्वा। सर्वदेवेषु एवं पूर्वपश्चिमायतं पद्मं कुर्यात्। सुब्रह्मण्ये- एवं दक्षिणोत्तरायतं पद्मं कुर्यात्। तत्र स्वस्वमूलेन व्रीह्यादीन्निक्षिप्य विष्णौ द्वादशाक्षरेण शय्यां कुर्यात्। शिवादिषट्सु देवेषु स्वस्वमूलेन शय्यां कुर्यात्। पुनः मङ्गलपालिकादीन् दीपादींश्च विन्यस्य वितानादिभिरलङ्कृत्य

1 अत्रापि पूर्ववत् नमोन्तत्वं युक्तमिति भाति। 2 अत्रापि कथं स्वाहान्तत्वमिति विचारणीयम्।

गुरुस्तत्रोपविश्य देहशुद्धिं शङ्खपूरणमात्मागधनं च कृत्वा गुरून् गणपतिं च सम्पूज्य गुरुभ्योऽर्घ्यं दत्वा पुष्पाञ्जलिं कुर्यात्। गणपतये निवेदयेत्। पुनराधारशक्त्यादिस्वस्वपीठं सम्पूज्य विष्णौ श्रीबीजेन प्रकृतिमावाह्य श्रामाद्यङ्गं कुर्यात्। अन्येषु भुवनेश्वर्या प्रकृतिमावाह्य ह्रामित्याद्यङ्गं कुर्यात्। पुनरुपहारान् दत्वा प्रणवबीजाङ्गायुधैः सम्पूज्यार्घ्यं दत्वा पुष्पाञ्जलिं कुर्यात्। तत्समीपे एकमासनं न्यस्य तत्र तत्र पीठं सम्पूज्य सर्वं तालत्रयादिना रक्षेत्। पुनः गर्भगृहं प्रविश्य देवस्य पीठं सम्पूज्य प्रणवोपचारसहितेन स्वस्वमूलेनावाह्य लिपिन्यासादिभिः सकलीकृत्य स्वस्वोपहारान् दत्वा यथाविधि सम्पूज्य निवेद्य प्रसन्नपूजां विधाय ब्रह्मार्पणादिप्रसन्नार्घ्यं दत्वा व्यजनादिभिरुत्सवोक्तोपहारैर्देवं प्रसाद्य तीर्थयात्रेति मन्त्रेण प्रार्थयेत्। तीर्थयात्रा त्वया देव[1] श्वः कर्तव्या महेश्वर। तत्र प्रतिसरारम्भं त्वमनुज्ञातुमर्हसि इति। पुनः घृतारोपणं कुर्यात्। तद्यथा- अश्वत्थपत्रयोः दूर्वाग्राणि सर्षपं घृतसिक्तवर्तिकां च न्यस्य, ते पत्रे हस्ताभ्यां परिगृह्य दीपयित्वा हस्तौ विनिमय्य, सुशोभनं भवतु इति पादादि कट्यन्तं पार्श्वयोरुन्नमय्य हस्तयोर्विनिमयं त्यक्त्वा देवस्य पृष्ठे तत्सर्वं त्यजेत्। पुनः हस्तौ प्रक्षाळयेच्च। पुनरपि पूर्ववत् अश्वत्थपत्रद्वयं हस्ताभ्यां गृहीत्वा सुभद्रं भवत्विति कट्यादि कण्ठान्तं न्नमय्य पूर्ववत् पृष्ठभागे त्यजेत्। हस्तौ प्रक्षाळ्य पुनरपि हस्ताभ्यां अश्वत्थपत्रद्वयं पूर्ववत् गृहीत्वा सुमङ्गलं भवत्विति कण्ठादि मूर्धान्तं पूर्ववदुन्नमय्य त्यजेत् हस्तौ प्रक्षाळयेत् इति घृतारोपणप्रकारः। पुनः कर्मार्चामग्रतो न्यस्य संक्षाळ्य यथाविधि पुण्याहं कृत्वा तच्छेषेणाभिषिच्य क्षौमपटखण्डे मुक्तासर्षपसुवर्णानि क्षिप्त्वा ऊर्णासूत्रेण बध्वा अङ्गुष्ठोपकनिष्ठिकाभ्यां सप्तधा सुवर्त्य शिवे- अघोरेण, दुर्गायां सुदर्शनेन, सुब्रह्मण्ये- ओं नमः षण्मुखायेति मन्त्रेण, विष्णौ जितन्तेन, शङ्करनारायणे गणपतौ शास्तरि च- स्वस्वमूलेन कर्मबिम्बस्य दक्षिणे बाहूत्तमे कौतुकं बध्नातु। पुनः ह्लामादिबीजैः पञ्चभूतानि संहृत्य शोषणादि कृत्वा, हौमादिबीजैः आकाशादि भूतानि सृष्ट्वा, लिपिप्राणायामं लिपिन्यासं मन्त्रप्राणायामं मन्त्रन्यासं च विधाय, तत्र पीठं सम्पूज्य, मूर्तिं सङ्कल्प्य, नीराज्य, शङ्खे जलं सम्पाद्यष्टगन्धं विलोड्य, मूलबिम्बे पुष्पमाराध्य, प्रणवेन सम्पूज्य प्रणवोपचारमूलपुटितैः सृष्टिसंहारक्रमेण पञ्चतत्वैरावाहयामीत्यन्तैर्मन्त्रैर्मूलबिम्बात् शङ्खजले

1 दुर्गायां-तीर्थयात्रा

आवाह्य कर्मबिम्बे सुयोज्य[1], प्रणवेन प्रातः स्नात्वा जलविक्षेपं कृत्वा पुनः पादौ प्रक्षाळ्याचम्य तत्रोपविश्य देहशुद्धिं शङ्खपूरणमात्माराधनं च कृत्वा गणपतिं सम्पूज्य मण्टपे उपविश्य प्रणवमूलपञ्चतत्वैः पृथग्व्याप्य देवं वाद्यैः सह प्रवोधयित्वा[2] जागरूकं देवमुत्थाप्य मङ्गलानि गां च दर्शयित्वा अवसानार्घ्यं दत्वा व्याप्य लयाङ्गं कृत्वा संरक्ष्य तत्समीपे अधोभागे मण्डपं कृत्वा भद्रपीठं न्यस्य तत्समीपे उत्तरतः निर्माल्यसम्पर्काद्बहिः स्वस्तिकं कृत्वा धान्यानि निक्षिप्य कटाहं न्यग्बिलं न्यस्य तत्र पीठं सम्पूज्य पात्रस्य शोषणादिकं दर्भविन्यासादिकं च कृत्वा उत्तानीकृत्य प्रणवेन कूर्चं न्यस्य कलशन्यायवत् प्रपूर्य आयात्वित्यादिना वरुणमावाह्य सकलीकृत्य सम्पूज्य गङ्गे चेति तीर्थमावाह्य सम्पूज्य स्वस्वमूलेनावाह्य सकलीकृत्य सम्पूज्यार्घ्यं दत्वा पुष्पाञ्जलिं कृत्वा पञ्चवारुणं सञ्जप्य तालत्रयादिना रक्षेत्। पुनः भद्रपीठे पीठं सम्पूज्य कर्मबिम्बमानीय पूजितपीठे न्यस्य मूर्तिं सङ्कल्प्य प्रणवोपचारसहितेन मूलेन स्वहृदयाद्देवमावाह्यावाहनादिमुद्राः प्रदर्श्य व्याप्य लिपिन्यासादिभिः सकलीकृत्य स्वस्वपूजायां उक्तक्रमात् अर्घ्यादिकं पाद्यादिकं वा दत्वा पुनराचमनान्ते पाद्यादित्रयं वा दत्वा पुनः दन्तशोधनं सङ्कल्प्य दन्तकाष्ठं दत्वा गण्डूषं दत्वा एवं त्रिवारं वा दन्तशोधनार्थं दन्तकाष्ठं अन्तराऽन्तरा गण्डूषं च दत्वा त्रिवारं वा जिह्वाशोधनं, तत्राप्यन्तराऽन्तरा बहुशः गण्डूषं दत्वा पुनः पाद्यादित्रयं वा दत्वा शुद्धजलैरभिषिच्य पाद्यमाचमनं च दत्वा आपोहिष्ठादिभिःपुण्याहं वा कृत्वा मूलमन्त्रजप्तमधुघृताभ्यां अभिषिच्य हरिद्राचूर्णैः विघृष्य शुभैर्जलैः संस्नाप्य संस्कृतजलैरभिषिच्य प्राणापानादिभिः[3] पुरुषसूक्तादिभिरभिषिच्याङ्गवस्त्रं वस्त्रं उपवीतं भूषणं च दद्यात्। पुनर्मूलेन दूर्वाग्राणि पुष्पाणि अष्टगन्धं अञ्जनं अगरुरसं चन्दनं च दत्वा पुनः माल्याद्यैरलङ्कृत्य दर्पणं दर्शयित्वा गणपतेः पूजां कारयित्वा गोभ्यः यवसं दत्वा इतिहासादिकं

---

1 पुनः ताम्बूलव्यजनाद्यर्पणैर्मनोरमां प्रसन्नार्चनां कृत्वा अवसानीयार्घ्यदानात् पूर्वं स्वस्वपञ्चतत्वमनुभिः शय्यातले शाययेत्। एनं देवं संहारमार्गेण पठितैः पञ्चतत्वैर्मूलेन प्रणवेन च उत्क्रमेण पादादि केशान्तं पृथग्व्याप्य जाग्रदवस्थां स्वप्नावस्थां सुषुम्नावस्थां च क्रमात् तीर्त्वा तुरीयां दशां प्रापयेत्। तुरीयां दशामधिगम्य स्वरूपानुभवासक्तं आनन्दघनं ध्यायन् [देवदेव महादेव (जगन्नाथ) तव पूजान्तरे प्रभो। कवाटं बन्धयिष्यामि सुखनिद्रां कुरु प्रभो। इति च।] संवृत्य यवनिकामाच्छाद्य शेषरात्रिमतिवाहयेत्। 2 [ उत्तिष्ठोत्तिष्ठ देवेश उत्तिष्ठ बृषभ (गरुड) ध्वज। उत्तिष्ठ गिरिजा (कमला) कान्त त्यज निद्रां सुखं प्रभो। इति] 3 सप्तशुद्धिमन्त्रैः।

श्रावयित्वा ब्राह्मणेभ्यस्तण्डुलादिपूर्णघटं स्वर्णादिकं च दत्वा जपादिभिर्देवं यथावत्सम्पूज्य[1] हविः सम्पूज्यान्तर्गत्वा कर्मबिम्बमभिषिच्याग्रतो न्यस्य भूतसंहारादिकं कृत्वा तत्र पीठं सम्पूज्य मूर्तिं सङ्कल्प्य[2] तत्र सुब्रह्मण्ये गणपतौ च- तीर्थाभिगमनाद्यावद्देवाभिगमनं पुनः। तावत्त्वं कौतुकमिदमधिष्ठाय प्रसीद नः इति मन्त्रेण प्रार्थयेत्। अन्येषु पञ्चसु देवेषु- कर्मार्चातीर्थयात्रार्थं तवेयं कल्पिता विभो। तीर्थयात्रां कुरुष्वास्यां सङ्क्रम्यानुग्रहाय नः इति प्रार्थयेत्। पुनः मूलबिम्बे सम्पातं संस्पृश्य शङ्खे पूर्ववज्जलं सङ्गृह्य नीराज्य तेन शङ्खजलेन मूलबिम्बात् पूर्वोक्तमन्त्रैरावाह्य[3] प्रणवव्यापकादिकं सर्वं कृत्वा मूलबिम्बे तत्वन्यासादिभिः सुस्थितं कृत्वा वस्त्रादिभिः कूर्चेन वा (चा)ऽऽच्छाद्य तालत्रयादिना रक्षेत्। कर्मार्चायां सम्पातशेषं संस्पृश्य नीराज्य मूर्तिपैर्देवं सन्धार्य जगन्निर्माणसंहारस्थित्यनुग्रहहेतवः। देवानामीश्वरा देवा मङ्गलं प्रदिशन्तु नः इत्यादि कनिक्रदादि च जपन् बहिर्निष्क्रम्य प्रार्थ्य द्वारं पिधाय द्वारस्थान् परिवारान् एकपरिक्रमेण सम्पूज्य बलिं दत्वा सभाद्वास्थान् सम्पूज्य बलिं दत्वा बहिर्निष्क्रम्य संप्रार्थ्य ध्वजदेवताबल्यन्ते ध्वजचैतन्यं देवे उद्वास्य तत्तद्गण बलिपीठम-हाध्वजतत्रत्यग्रहबलिदिग्वलिशीघ्रबलिभिः सह प्रदक्षिणीकृत्य क्षेत्रपालाय बलिं दत्वा वा क्षेत्रपालेन गृ[illegible]तं ध्यात्वा गरुडाद्यात्मके रथादौ याने देवमधिरोप्य क्षेत्रपालं वर्जयित्वा अन्यपरिवारैः सह तीर्थस्नानगमनं ध्यात्वा गोपुरद्वारि द्वास्स्थान् सम्पूज्य बलिं दत्वा यजमानेन सह बहिर्निर्गत्य ये भूताः पुरःसदः इत्यादिमन्त्रैर्महासालस्य बहिः [बलिं दत्वा] प्रदक्षिणीकृत्य योजनादर्वाक् नद्यादि विशिष्टतीर्थं प्रति गच्छेत्। तत्राश्वत्थमूलादौ प्रशस्तदेशे देवायतनादौ च बलिं दद्यात्। हवींषि जलपूर्णघटं गन्धपुष्पादिकं चोद्धृतैर्विप्रैः सह नद्यादितीर्थं प्राप्नुयात्। तत्र शङ्खप्रेङ्खच्चटुलपटहोत्ताळताळोरुभेरीरङ्गच्छृङ्गोड्डमरडम-रुद्वीप्रवीणाप्रवीणाः। ढक्काढुक्काविरळमुरळीकर्मठा दीपितदीपहस्ता अलङ्कृताः पुरुषाः

---

1 शयनाद्यमुद्वास्य कर्मार्चां प्रासादान्तर्नीत्वा। 2 सम्पूज्य पूर्वोक्तप्रकारेण कौतुकगतं देवं मूलबिम्बे संयोज्य स्वस्वमन्त्रेणावाह्य सकलीकृत्य पूजादिकं कुर्यात्। अथावभृथः- पीठं सम्पूज्य मूर्तिं सङ्कल्प्य यात्राहोमं चरेत्। परिवारहोमं कृत्वा कनिक्रदत्प्रभृतिभिः षण्मन्त्रैः स्वस्त्यादिपञ्चाणुभिश्चैकैकशः आज्यं जुहुयात्। पुनर्मूलेन चत्वारि द्रव्याणि जुहुयात्। पुनर्गर्भगृहं प्रविश्य इष्टपीठे देवं संस्थाप्य पाद्यार्घ्याचमनीयानि समर्प्य आपोहिष्ठादिभिः प्रोक्ष्य तण्डुलमुद्गमाषयवहेमक्षपागन्धचूर्णैः शिवे-अघोरास्त्रेण, विष्णौ-द्रुपदया, शेषेषु-मूलेन चोद्वर्त्य सम्पूज्य तदग्रे पूर्ववच्छोधितं कर्मबिम्बं कृत्वा प्रार्थयेत्। 3 शयनविध्युक्तैरित्यर्थः।

स्त्रियश्च देवस्याग्रभागे तमभिमुखीकृत्य गच्छेयुः। वीणादिपञ्चवाद्येषु विदग्धा देवस्याग्रे गच्छेयुः। छत्राणि चामराणि तालवृन्तादीनि सङ्गृह्य पुरुषाः समन्तादगच्छेयुः। जयजयादीनि सङ्कीर्त्य पृष्ठतो गच्छेयुः। एवमाघोष्य नद्यादिविशिष्ट तीर्थं गत्वा तत्र वलिं समाप्य तीर्थस्य पुण्याहं कृत्वा तत्र तीर्थसमीपे भद्रपीठं न्यस्य देवं तत्र तीर्थसम्मुखमभिवेशयेत्। स्वयं स्नात्वा सन्तर्प्य तत्रोपविश्य देहशुद्ध्यादिकं कृत्वा पीठं सम्पूज्य मूर्तिं सङ्कल्प्यावाह्य मन्. ीकृत्य पुनराचमनान्ते तीर्थं संशोध्य पीठं सम्पूज्य वरुणं तीर्थं चावाह्य सम्पूज्यार्घ्यं दत्वा पञ्चवारुणहुतसम्पातं पञ्चतत्वहुतसम्पातं वा समर्प्य पञ्चवारुणादिकं मञ्जप्य तालत्रयादिना रक्षेत्। पुनःदेवस्य पाद्यत्रयं वा दत्वा देवेन सह जलमध्यं गत्वा कर्मबिम्बमधोमुखं कृत्वा स्वस्वपञ्चतत्वान्युक्त्वा त्रिर्मज्जयेत्। पुनस्तत्रैव पीठे देवमुपवेश्य गुरुः स्वयं पादौ प्रक्षाळ्याचम्य आपोहिष्ठादिभिः प्रोक्ष्य देवस्य पाद्यादित्रयं वा दत्वा तत्समीपे चूर्णादिकं न्यस्य आपोहिष्ठादिभिः पुण्याहं कृत्वा निशादिचूर्णस्य शोषणादि कृत्वा मूलेन सम्पूज्य देवस्य मूर्धादिपादान्तं पूर्ववदुद्वर्त्य पुनः देवेन सह नाभिमात्रजले स्थित्वा जलाभिमुखं देवबिम्बं गृहीत्वा ऋतं च सत्यं चेत्यादिभिः प्राणायामं कृत्वा अघमर्षणं स्मृत्वा तीर्थे स्नापयेत् त्रिवारं मज्जयेत्। तत्रोचितं तीर्थदानादिकं सर्वेषां कृत्वा पादौ प्रक्षाळ्याचम्य सन्तर्प्य देवस्य वस्त्रादि भूषणान्तं दत्वा देवं यथावत्सम्पूज्य निवेद्य वैश्वदेवं वलिं च कृत्वा पादौ प्रक्षाळ्याचम्य नैवेद्यं विसृज्य गण्डूषादिकं दत्वा प्रसन्नपूजां विधाय ब्रह्मार्पणं कृत्वा व्याप्य लयाङ्गं कृत्वा तीर्थेऽस्मिन्निति मन्त्रेण देवं विज्ञापयेत्। तीर्थेऽस्मिन् पावने पुण्ये स्नातोऽसि पुरुषोत्तम। अतस्त्वमनुगृह्णीष्व स्वस्थानोपाश्रयेण नः इति विष्णौ। शिवादौ परमेश्वरेत्यादि सम्बुद्ध्यन्तमन्त्रेण विज्ञाप्य तीर्थं देवे उद्वास्य व्याप्य लयाङ्गं कृत्वा नीराज्यार्घ्यं दत्वा उत्तिष्ठेत्युद्धृत्य पूर्ववन्निजवाहने देवमारोप्य शीघ्रं देवालयं प्रापय्य तस्मिन्नेवाहनि मूलबिम्बे योजयेत्। तत्र क्षेत्रपालस्य बलिं दत्वा वा स्वयं शुचिर्भूत्वा गर्भगृहं प्रविश्य तत्रोपविश्य देहशुद्ध्यादिकं कृत्वा पक्षद्वयेऽपि मूलबिम्बस्याभिषेकादिकं कृत्वाऽग्रतः भद्रपीठं न्यस्य तत्र पीठपूजां कृत्वा देवं तत्रोपवेशयेत्। मूलबिम्बस्य पीठपूजादिकं कृत्वा मूर्तिं सङ्कल्प्य नीराज्य पूर्ववत् कर्मबिम्बात् मूलबिम्बे देवमावाह्य प्रणव [प्राण] न्यासादि सर्वं कृत्वा स्वहृदय ावाह्य सकलीकृत्य सम्पूज्य निवेद्य प्रसन्नपूजां कुर्यात्। (देवेन देवः स्पृष्टश्चेत्) मूलबिम्बे सुयोज्य पुनरपि

प्राणापानादिभिः पुरुषसूक्तादिभिश्च देवमभिषिच्य मनसा क्षाळनादिकं स्मृत्वा अभिषिच्य पुनरपि पीठं सपूज्य आवाह्य पूजयेत्। तत्काले तत्र स्नानकाले पूजितैः कलशैः देवमभिषिच्य सम्पूज्य श्रीभूतवलिं कुर्यात्। अथवा परस्मिन् दिवसे पूजितैः कलशैर्द्रव्यकलशैर्वा देवं संस्नाप्य सम्पूज्य श्रीभूतवलिं कुर्यात्। अथवा पूर्वोक्तप्रकारेण द्रव्यकलशैर्देवमभिषिच्य सम्पूज्य श्रीभूतवलिं कुर्यात्।

।। इत्यनुष्ठानपद्धतिः।।

चसदप्प (1878) मिते वर्षे शालिवाहनभूपतेः।
मन्मथेऽब्दे भाद्रपदे ह्यसिते सचतुर्थिके।।
सौम्यवारे नृसिंहेन पद्धतिर्लिखिता ह्यभूत्।
अनुष्ठानस्य सप्तानां देवानां च तथाऽऽगमे।।
यथासूनुकृतं दोषं पितरौ क्षन्तुमर्हतः।
तथा मद्धस्तदोषं च सुधियः सोढुमर्हथ।।

।।श्रीः।।

उत्तरार्धम्

अनुष्ठानस्य पद्धत्याः शेषोऽयं लिख्यतेऽधुना।
वासुदेवेन विदुषा संक्षेपाद्विदुषां मुदे।।

**अथ वरणमधुपर्कादि**- यजमानः कृतनित्यक्रियः देवालयादिषु संमार्जनाद्यैर्भुवं संशोध्य स्थलशुद्धिं कृत्वा उतरदशवस्त्रयुगदर्भासनेषु दक्षिणादिक्रमेण आचार्यं मूर्तापांश्च पूर्वाभिमुखानुपवेश्य कृतगुरुवन्दनाद्यात्माराधनान्तकृत्यः गुरुं मूर्तिपांश्च नमस्कृत्य तदाज्ञापुरःसरं ईशकोणे अर्घ्यपाद्यादिकानि निदध्यात्। तद्यथा- स्थण्डिलमालिप्य दर्भान् विन्यस्य प्रोक्षणीपात्रेण सह चत्वारि पात्राणि अधोमुखानि निधाय वस्त्राङ्गुलीयककुण्डलयज्ञोपवीतभूषणादीन्यपि निधाय प्रोक्षणीसंस्कारं कृत्वा तज्जलैःप्रोक्ष्य धारणादिभिः संशोध्य उत्तानीकृत्य प्रोक्ष्य तारेण कूर्चं निधाय अर्घ्यं आचमनीयं च[1] अभिषेके उक्तरीत्या स्वस्व द्रव्यैर्योजयित्वा स्वस्वमूलमन्त्रेण मूर्त्याह्वयैरङ्गमन्त्रैर्वा[2] अभ्यर्च्य दद्यात्। पद्मपत्रैराच्छाद्य गुरुमूर्तिपान् संवन्द्य पाद्यमाचमनमर्घ्यं च क्रमात् गुरुमूर्तिपानां स्वस्वमन्त्रैः हृदयशिरः शिखामन्त्रैर्वा दद्यात्। कवचमन्त्रेण वस्त्रद्वयं स्वर्णाङ्गुलीयकं

---

1 अर्घ्यादिद्रव्याणि अभिषेकविधौ ज्ञेयानि। विष्णौ- अर्घ्यद्रव्यं माषपयोधिकंस्मृतम्।
2 स्वस्वदानकाने उक्तैर्मन्त्रैरित्यर्थः।

च, अस्त्रमन्त्रेण कुण्डलयज्ञसूत्रभूषणानि दत्वा स्वस्वमन्त्रैः[1] जलगन्धपुष्पधूपदीपाक्षतैरर्चयित्वा पुनरप्यर्घ्यं दत्वा मूर्तिपालैः सहितं गुरुं साज्यपायसेन भोजयेत्। पुनराचान्तेषु ताम्बूलादि दत्वा अवमानीयमर्घ्यं दत्वा उच्छिष्टादिकमुद्धृत्य भूमिमालिप्य तान् प्रदक्षिणीकृत्य प्रमाद्य दक्षिणकरेणालम्ब्यानेन मन्त्रेण वृणीत- मया सम्पूजितैरत्र दक्षिणाभिश्च तोषितैः। क्रियतां विष्णुयागो मे[2] प्रार्थयामि प्रसीदत इति। ते ओं तथा इति ब्रूयुः। तत्र गुरोर्मूलमन्त्रः मूर्तिपानां वासुदेवादयो मूर्तयः। तत्र शिवादिषु पाद्यार्घ्याचामकम्। शैवे- शर्वाय क्षित्यात्मने। रुद्रायाग्न्यात्मने। पशुपतये यज्ञात्मने। ईशानाय सूर्यात्मने। भवाय जलात्मने। उग्राय वाय्वात्मने। महादेवाय सोमात्मने। भीमाय व्योमात्मने इति मूर्तिमन्त्राः। गुरोस्तु शैवी गायत्री नमस्कारमन्त्रः। त्र्यम्बकायेति मन्त्रो वा[3]। मूर्तिपानां नमस्कारमन्त्राः लिख्यन्ते। क्षितिर्वै धार्यते लोकान् लोकाः क्षितिमयाः स्मृताः। सर्वगं क्षितिरूपं ते क्षितिमूर्ते नमोऽस्तु ते १। अग्निर्वै धार्यते लोकान् लोका अग्निमयाः स्मृताः। सर्वगं अग्निरूपं ते अग्निमूर्ते नमोऽस्तु ते २ । यज्ञो धारयते लोकान् लोका यज्ञमयाः स्मृताः। सर्वगं यज्ञरुपं ते यज्ञमूर्ते नमोऽस्तु ते ३। सूर्यो धारयते लोकान् लोकाः सूर्यमयाः स्मृताः। सर्वगं सूर्यरूपं ते सूर्यमूर्ते नमोऽस्तु ते ४। जलं वै धार्यते लोकान् लोकाः जलमयाः स्मृताः। सर्वगं जलरूपं ते जलमूर्ते नमोऽस्तु ते ५। वायुर्धारयते लोकान् लोका वायुमयाः स्मृताः। सर्वगं वायुरूपं ते वायुमूर्ते नमोऽस्तु ते ६। सोमो धारयते लोकान् लोका सोममयाः स्मृताः। सर्वगं सोमरूपं ते सोममूर्ते नमोऽस्तु ते ७। व्योम धारयते लोकान् लोकाव्योममयाः स्मृताः। सर्वगं व्योमरूपं ते व्योममूर्ते नमोऽस्तु ते ८। एवं चतुरः षट् अष्टौ (द्वादश) वा मूर्तिपान् वृणुयात्। स्कन्दे वरणे-वास्तुसङ्ग्रहमारभ्य तीर्थस्नानावसानिकम्। क्रियतां स्कन्दयागो मे प्रार्थयामि प्रसीदत। एवं वृतः समूर्तिपो गुरुः भूपरिग्रहादि तीर्थस्नानान्तिकं कर्म कुर्यात् ।

**भूपरिग्रहः**- यथोचितां भूमिं लब्ध्वा निशायां क्वचित्प्रदेशे उपविश्य आत्माराधनान्तं कृत्वा गुरुगणेशादीपानभ्यर्च्य स्वस्तिकस्थं कुठारादिकमस्त्रमन्त्रेणाभ्यर्च्य महाप्राकारपर्यन्तां भूमिं प्रकल्प्य देवताभ्यः पितृभयोऽथ

1 गुरोः मूलमन्त्रः इतरेषां मूर्तिमन्त्राः। 2 अन्यदेवेषु- ईशयागो मे- ईशयोर्यागः- दुर्गायागो मे- शास्तृयागो मे- गणयागो मे इति। 3 अङ्कुरारोपणप्रकरणात् ज्ञेयम्।

भूतेभ्यः सह जङ्गमैः। एतत्स्थाननिवामिभ्यः प्रयच्छामि वलिं नमः इति मन्त्रेण मध्येऽष्टदिक्षु च भूतक्रूरहविषा बलिं दद्यात्। पुनराचम्य सकलीकृतात्मा कृतात्मरक्षः रचिताञ्जलिः त्रिर्निवेदयेत्। भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन। ते सर्वे व्यपगच्छन्तु स्थानं कुर्यामहं हरेः[1]। इति मन्त्रेण भूतसमूहं वियोजयेत्।।

**गुहे प्रार्थना**- ये वसन्ति वने त्वत्र भूताः प्रेताश्च राक्षमाः। कूष्माण्डाश्च पिशाचाश्च वेताला ब्रह्मराक्षसाः। निर्गच्छन्त्वन्यतः शीघ्रमितः क्रूराः सुखं पुनः। भवनं कुर्महे तत्र गुहस्य परमात्मनः इति। शास्तरि- येऽत्राशुभकराः सन्ति भूतवेतालराक्षसाः। व्यपगच्छन्तु ते शास्तुः कुर्महे भवनन्त्विह ।

**दुर्गायां**- देवदानवगन्धर्वपिशाचा वाऽपि राक्षसाः। नागाः सर्पास्तथा कीटाः येऽत्र तिष्ठन्ति जन्तवः। ते सर्वेऽन्ये च जानन्तु प्रयान्त्वस्माद्यथासुखम्। देव्यर्थं प्रतिगृह्णामि साऽस्माकं क्षम्यतामिति। भूकर्षणादि- एवं भूमिं परिगृह्य मुहूर्तान्तरे कृतसकलीकरणात्माराधनः असनवृक्षादिकृतहलयुगलाद्यः समानाभ्यां वृषाभ्यां द्वादशाक्षरं जपन् त्रिः पञ्चधा वा भूमिं कृष्ट्वा मुद्गादि बीजानि मूलमन्त्रेण समुप्य जितन्त इति मन्त्रेण सिञ्चेत् सुदर्शनेन वृतिं कृत्वा फलिते गोब्राह्मणसात्कृत्य गोनिवासं कृत्वा भूमिं साधयेत् इति विष्णौ। ईशे- सद्योजातवामदेवाघोरेशानतत्पुरुष- मन्त्रैः क्रमेण कर्षणं बीजवापनं उक्षणं रक्षणं दानं च विदध्यात्। इतरदेवेषु- निजमूलेन कुर्यात्। हरीशे तु- पञ्चतत्वैः पञ्चक्रियाः कुर्यात् मूलेन वा। सर्वदेवेषु तां क्षितिं पुरुषप्रमाणं खात्वा पादोनं परिपूर्य मार्जनलेपनादिभिर्विशुद्धायां भूमौ वास्तुं यजेत्। पूर्वोक्तवास्तुपूजां बल्यन्तां विधाय तत्प्राकारवलयं वास्तुदेवताकृतावलम्बं ध्यायेत्।

**निधिकलशप्रकारः**- विशोधिते गर्ते स्थापिताया आधारशिलाया मध्यस्थे गर्ते धान्यादिभिः पीठं विरचय्य ताम्रमयमश्ममयं वा निधिकलशं मूलेन प्रणिधाय तत्र पीठे रत्नादिपूर्णं कलशं संस्थाप्य लिपिपङ्कजं सम्पूज्य भुवनेशीमावाह्य सम्पूज्य "त्वमेव परमाशक्तिस्त्वमेवासनधारिका। सन्तृप्तया त्वया देवि स्थातव्यमिह सर्वदा" इति प्रार्थ्य तद्दक्षिणे धान्यादिकृतविष्टरे दर्भमृदादि शोधितं शिलापद्मं शिलाकूर्मं रजतकूर्मं रजतपद्मं स्वणपद्मं स्वर्णकूर्मं च निधाय गोषणादिभिर्विशोध्य आत्ममन्त्रेण[2] सम्पूज्य वस्त्रेणाच्छाद्य अधिवास्य निधिकलशोपरि शिलापद्मं निधाय लिपिपङ्कजं सम्पूज्य पद्मे शिलाकूर्मं

**1 स्थानं कुर्या कपर्दिनः, कुर्या हरीशयोः, कुर्या गणेशितुरित्यूह्यम्। 2 ओं अकूबाराय नमः इति कूर्ममन्त्रेण।**

ओं अकूबाराय नमः इति मन्त्रेण निधाय अनेनावाह्य प्रणवकृताङ्गं यजेत्। तदुपरि रजतपद्मं निधाय लिपिपङ्कजं सम्पूज्य रजतपद्मं तदुपरि निधाय तेनैव मन्त्रेण सम्पूज्य पूर्ववत्सुवर्णपद्मं निधाय पूजितलिपिपङ्कजे तेनैव मन्त्रेण स्वर्णकूर्मं निधाय पूर्ववत्सम्पूज्य नमस्ते कूर्मरूपाय विष्णवे विश्वधारिणे। करिष्यमाणं प्रासादं इह त्वं धर्तुमर्हसि इति प्रार्थ्य एवमेव दक्षिणद्वारप्रदेशे गणपतिदक्षिणामूर्तिपूजां विधाय कूर्माग्रतः स्वस्तिकोपरि देवं सम्पूज्य निवेद्य पूजाहोमं विधाय कूर्मोपरि नपुंसकशिलापर्यन्तं योगनालं विधाय गर्त्तं मृत्तिकया अभिपूर्य दार्ढ्यमापाद्य रक्षेत्। पुनारात्र्यन्तरे दक्षिणद्वारशाखाया उत्तरस्मिन् भागे अग्निं प्रतिष्ठाप्य तद्दक्षिणे पञ्चगव्याष्टगन्धलिप्ता अष्ट इष्टकाः धारणादिभिः शोधिताः संस्थाप्य तद्दक्षिणे कलशं च रत्नजलपूर्णं संस्थाप्य विधिवत् परिधिस्थापनादिहोमतन्त्रं विधाय शिवदुर्गाशङ्करनारायणेषु पक्वात् प्राक् ओं स्वाहा, नं स्वाहा इत्यादिमूलाक्षराङ्गैश्च होमं विदध्यात्। गणपतौ- पक्वान्ते ओं वज्रदन्ताय स्वाहा इत्यदिद्वादशनामभिराज्यं जुहुयात्। शङ्करनारायणे- पक्वान्ते पञ्चतत्वैः जुहुयात्। विष्णौ- मूलमन्त्राक्षरैः, शिवे पञ्चब्रह्ममन्त्रैराज्यं जुहुयात्। पुनः विष्णौ- द्रव्याहुतेः प्राक् भूरादिव्याहृतिभिःइन्द्रादिलोकपालैः[1] पुनः अग्नये, सोमाय, ग्रहेभ्यः, नक्षत्रेभ्यः, भूतेभ्यः, नागेभ्यः, सर्वाभ्यो देवताभ्यः, विश्वेभ्यो देवेभ्यः, विष्णवे च हुत्वा व्याहृतिभिश्चाज्यं जुहुयात्। इतरदेवेषु द्रव्यहोमादूर्ध्वं एता आहुतयः, तत्र विष्णुपदस्थाने तत्तन्मूलमन्त्रः इति विशेषः। पुनः दुर्गां विना सर्वदेवेषु गायत्र्या समिदाज्यचर्वाज्याहुतीरष्टशतं जुहुयात्। दुर्गायां- मूलेन द्रव्यचतुष्टयं जुहुयात्। स्कन्दस्य पक्वान्ते द्वादशनामभिराज्यं हुत्वा इन्द्राद्यैः भूतैः महद्भिश्च, चन्द्रार्काभ्यां कालेन वह्निना ग्रहैः दिग्भिः नक्षत्रैश्च नाममन्त्रेण एकैकामाहुतिं जुहुयात्। मूलतश्चतुर्द्रव्यहोमः। शास्तरि पक्वान्ते रेवन्तादिषण्मन्त्रैराज्यं गायत्र्या द्रव्यचतुष्टयं च हुत्वा गोप्त्रादिद्वादशनामभिरिन्द्रादिनक्षत्रान्तैः स्कन्दोक्तैराज्यं जुहुयात्। स्विष्टकृदन्ते सम्पातं इष्टकासु कलशे च समर्प्य रक्षेत्। सुमुहूर्ते प्रासादस्य दक्षिणद्वारशाखाधोभागे इष्टकानां क्षेत्रं विरचय्य चतुरस्रक्षेत्रे अग्निवायुपदयोः प्रागग्रे शिष्टयोरुदगग्रे रेखे प्रणवेन लिखेत्। शिवे अस्त्रतो वा लिखेत्। तत्र इष्टका द्वादशाङ्गुलदिर्घाः। अष्टाङ्गुलविस्तृताः चतुरङ्गुलोत्सेधाः एवं सति मध्ये चतुरङ्गुलसमविस्तारगर्भपात्रस्य

1 ओं इन्द्राय स्वाहा इत्यात्मकैः।

गर्तं भवति तत्र कवचेनाभ्युक्ष्य पीठं परिपूज्य अन्तस्थितः कृताञ्जलिर्देवं संस्मरन् ईशे एकादशवारं अन्यत्राष्टवारं मूलं सञ्जप्य वह्निचैतन्यमिष्टकासूद्वास्य सद्योजाताभिरष्टाभिः कलाभिः अग्न्यंशादीशावसानं अष्ट इष्टका उपदध्यात्। विष्णुशङ्करनारायणयोर्मूलमन्त्रस्याक्षरैरितरेषु मूलेनोपदध्यात्। मूलेन देवमावाह्य साङ्गमिष्ट्वा मृदा विवरमालिप्य कलशजलेन गर्भावटमापूर्य ओमिति जपन् अक्षतपुष्पं तत्र निक्षिप्य जलावर्तं वीक्षेत। वामावर्ते अस्त्रेणाज्यं हुत्वा तत्सम्पातं समर्पयेत्। देवमभिपूज्य अस्त्रेणाभिरक्ष्य अन्याश्चतस्र इष्टकाः विनिधाय धान्यैर्मृद्भिश्चावटं परिपूर्य साधु रक्षेत्। **गर्भन्यासः**- पुनः शुभरात्रौ कृतवास्तुपूजाबलिः गर्भाधानसाधनानि सम्पाद्य अग्निं प्रतिष्ठाप्य अग्नेर्दक्षिणभागे व्रीह्यादिभिर्विरचितपीठे पिधानसहितं ताम्रमयं गर्भपात्रं न्यग्बिलं न्यस्य पीठाराधनादिना संस्कृतं गर्भपात्रमुत्तानीकृत्य हिरण्मयपवित्रसहितेन दोष्णा परितः सागरमृदा आवृतिं कुर्यात्। गर्भपात्रे प्रागग्रोदगग्ररेखाद्वयसम्पातेन नवखण्डानि सम्पाद्य लिपिपङ्कजं परिपूज्य तस्य देवस्योक्तानि द्रव्याणि तेन तेन क्रमेण तेन तेन मन्त्रेण न्यसेत्। सर्वेषु देवेषु मृत् मूल धातु रत्नबीजलोहवाहक्रमेण न्यासः। स्कन्दे तु वाहरत्नलोहधातु बीजमृत् मूलक्रमेण न्यसेत्। आर्ये स्कन्दोक्तक्रमेण वा न्यस्यतु। स्कन्दभिन्नेषु देवेषु पर्वत तीर्थ नदी ह्रद कर्कटकगुहा वल्मीकभूखलगजशृङ्गेक्षशृङ्गखाता मृदः क्रमात् पूर्वादिदिक्षु अग्न्यादिविदिक्षु मध्ये च न्यसेत्। दिक्षु पद्मकुवलय[1] कैरवकुमुद[2] मूलानि न्यसेत्। स्कन्दभिन्नेषु पूर्वादीशपर्यन्तं मनश्शिलाहरितालाञ्जनश्यामसीससौराष्ट्रीरोचनगैरिकानि मध्ये पारदं च न्यसेत्। स्कन्दभिन्नेषु षट्सु देवेषु पूर्वादीशान्तं मध्ये च वज्रं मौक्तिकं वैडूर्यं शङ्खं स्फटिकं पुष्यरागं चन्द्रकान्तं महानीलं पद्मरागं च न्यसेत्। तथा- शङ्करनारायणशास्तृदुर्गाहरिषु व्रीहिर्नीवारकङ्गुमाषकुलुत्थनिष्पा- वतिलमुद्गसिद्धार्थकाख्यानि न्यसेत्। हरौ दिक्षु सुवर्णं रजतं आ[illegible] त्रपु च निधाय कोणेषु सुवर्णमयानि गरुडकूर्मशङ्खचक्राणि मध्ये सौवर्णधनु[illegible]ङ्गानि न्यसेत्। दुर्गायां तु सुवर्णादि हरिवत् गरुडस्थाने सिंहं इति विशेषः। शास्तृशङ्करनारायणयोर्दिक्षु सुवर्णं रजतं आयसं त्रपु च निधाय कोणेषु शूलं कुठारं शङ्खं चक्रं च न्यसेत्। शङ्करनारायणे मध्ये हेमनिर्मितखट्- वाङ्गार्धचन्द्रऋषभगरुडकूर्माक्षमालागदापद्मधनूंषि न्यसेत्। शास्तरि मध्ये

1 नीलोत्पलम्। 2 रक्तोत्पलम्

तोमरशरपद्मानि न्यसेत्। शिवे बीजात्पूर्वं सर्वं न्यस्य बीजन्यासे शालिनीवारश्यामाककङ्गुमाषकुलित्थनिष्पावतिलमुद्गबीजानि न्यसेत्। लोहन्यासे पूर्वादीशावसानं सुवर्णरजतताम्रायसत्रपुकूर्मपद्मशूलाख्यानि मध्ये हेमनिर्मितं खट्वाङ्गं अर्धचन्द्रं वृषभं धनुः कुठारं च न्यसेत्। विघ्नराजे शिववत् बीजानि लोहानि च न्यस्य सुवर्णकृतमूषकस्वदन्तपद्माङ्कुशाख्यानि दिक्षु न्यस्य मध्ये हैमं गजं न्यस्यतु। गुहे पूर्वादि चतुर्दिक्षु सुवर्णकृतमयूरशक्तिकुक्कुटवज्राणि मध्ये गजं च न्यसेत् अथ मध्यादीशान्तं पद्मरागवज्रमौक्तिकवैडूर्यस्फटिकशङ्ख नीलपुष्यरागप्रवालाख्यानि न्यसेत्। तद्बाह्ये पूर्वाद्यष्टदिक्षु सुवर्णरजतताम्रायस्त्रपुनागपित्तलकांस्यानि,- अन्तरष्टलोहानि च न्यसेत्। तद्बाह्ये मध्यादीशान्तं रसमनः-शिलाहरितालाञ्जनमाक्षिकश्यामसौराष्ट्रीराजावर्तगैरिकानि न्यसेत्। तदबाह्ये मध्यादीशान्तं सिद्धार्थशालियवगोधूमतिलमाषप्रियङ्गुमुद्गनीवाराख्यानि न्यसेत्। पूर्वाद्यष्टदिक्षु सागरशैलनदीतीर्थह्रदकेदारदन्तिखलजाता मृदः मध्ये ताः सर्वाश्च न्यसेत्। नीलोत्पलरक्तोत्पलपद्मकैरवाणां मूलानि दिक्षु, मध्ये च सर्वाणि न्यसेत्। अथ गुहे अस्त्रतः प्रोक्ष्य कवचेनावगुण्ठ्य तद्द्रव्यजातं सुरभिमुद्रया अमृतीकृतमातनोतु इति। हरादिसर्वेषु समानमेतदिति सम्प्रदायः। शिवे विष्णौ च स्वस्वगायत्र्या द्रव्याणि विन्यसेत्। शेषेषु मूलाक्षरैर्मूलेन च विघ्नगुहयोर्मूलेनैव न्यस्यतु। शिवे व्योमव्यापिदशाक्षरस्य नवभिरक्षरैर्मृदः, तत्पुरुषकलाभिर्मूलानि, अघोरकलाभिर्धातून्, सद्यकलाभिः रत्नानि, वामकलाभिर्बीजानि स्वर्णादीनि च ईशकलाभिः खट्वाङ्गादीनि च न्यसेद्वा। विष्णौ द्वादशाक्षरेण इतरेषु मूलेन गव्येन उक्षेत्। सकलेषु मूलमन्त्रेणाभ्यर्च्य अधिवास्य परिध्यादिपक्वान्तं इष्टकाहोमवद्विधाय[1] प्रणवपुटितद्वादशाक्षरैः स्वाहान्तैरेकैकाहुतिं इन्द्रायेत्यादिदिगाधिपेभ्यः, नारायणाय, सर्वबीजेभ्यः, सर्वधातुभ्यः, सर्वलोहेभ्यः, सर्वपर्वतेभ्यः, सर्वसमुद्रेभ्यः, सर्वतीर्थेभ्यः, सर्वनदीभ्यः, सर्वह्रदेभ्यः, सर्वपातालेभ्यः, सर्वनागेभ्यः, सर्वदिग्गजेभ्यः, सर्ववृषभेभ्यः स्वाहा इति प्रतिनाममन्त्रैरेकैकामाहुतिं च हुत्वा व्याहृतिभिः प्रणवेन च जुहुयात्। एतैर्मन्त्रैः पूर्वं घृतं हुत्वा विष्णौ नारायणाय विद्महे इति गायत्र्या चतुर्द्रव्यहोमं विधाय सम्पातस्पृष्टे गर्भपात्रे अग्निं प्रोद्वास्य मूलमन्त्रजपं कुर्यात्। दुर्गाशास्तृगणपतिशिवनारायणेषु चतुर्द्रव्यहोमान्तं स्विष्टकाहोमवत् कृत्वा, इन्द्रायेत्यादिपूर्वोक्तहोमे नारायणपदस्थाने

1 ईशदुर्गाविष्णुषु पक्वात् प्राक् इत्यादि समानम्।

स्वस्वमूलं प्रयुज्य अन्यत् सर्वं पूर्ववत् जुहुयात् शिवे- द्रव्यहोमान्ते मूलेन एकादशाज्याहुतिं विधाय इन्द्रायेति पूर्वोक्ताहुतीर्जुहुयात्। तत्र नारायणपदस्थाने शङ्करेभ्यः स्वाहा इति विशेषः। स्कन्दे- स्वेष्टकाहोमोक्तमार्गेण द्वादशनामादिनक्षत्रान्तैर्होमं कृत्वा ओं हेतिभ्यः, रत्नेभ्यः, लोहेभ्यः, धातुभ्यः, बीजेभ्यः मृत्तिकाभ्यः, मूलेभ्य आहुतिं हुत्वा मूलमन्त्रेण द्रव्यचतुष्टयं जुहुयात्। शास्तरि- गुहोक्तन्यासपक्षे मयूरशक्तिवज्रस्थानेषु अश्वक्षुरिकाखड्गाः स्युः। निजेष्टकाहोमीयनक्षत्राहुत्यनन्तरं हेत्यदीनां स्कन्दोक्तानां होमः स्यात्। एवं होमानन्तरं इष्टकागर्तं मृदादि परिहारेण संशोध्य मार्जनादि कृत्वा गव्याष्टगन्धाप्लुते विष्टरे पीठं सम्पूज्य निजां शक्तिमावाह्य यजेत । विप्रैरनुज्ञातः पिधानसहितं गर्भपात्रमञ्जलिना गृहीत्वा, तिष्ठन् मूलमष्टोत्तरशतं जप्त्वा अखिलं जगत् गर्भत्वेन कांक्षमाणां शक्तिं ध्यात्वा, गर्ते स्वस्वोक्तमन्त्रं जपन् निशायां निदध्यात्। सर्वभूतालये भद्रे सागराम्बरभूषिते। उत्तुङ्गादिस्तनभरे देवि गर्भं समाश्रय इति स्कन्दशास्त्रोः। सर्वभूतधरे कान्ते पर्वतस्तनमण्डिते। समुद्रपरिधाने त्वं देवि गर्भं समाश्रय इति तदितरदेवेषु स्थापनमन्त्रः। प्रासादरूपतया परिणामिनि इह गर्भे मूलेन देवमभिवाह्य किञ्चिन्निवेद्य परितोष्य सुरक्ष्य तक्ष्णा प्रासादं मन्त्रविम्वञ्च कारयेत्। अत्र अवश्यलिखितव्यशस्त्रपूजाशिलापरिग्रहबिम्बरचनादिक विस्तरभयान्न लिख्यते। सिद्धे गर्भगेहे मूर्त्यादौ,[1] अधिवासदिवसात् द्वादश नव सप्त पञ्चभ्यो वा दिवसेभ्यः पूर्वं निशायां सुरालये उदग्भागे कल्पितपश्चिमद्वारे संवृते कृतसंस्कारे मण्डपे अङ्कुरारोपणं कुर्यात्। तत्प्रकारःउत्सवे उक्तः। कृतस्याङ्कुरस्य अधिवाससमये प्रतिमायाः परितः स्थापनं कुर्यात्। अत्र कर्तव्यध्वजप्रतिष्ठा उत्सवे उक्ता। **प्रतिमाधिवासः**- अधिवासदिवसात् प्राक् चतुर्थेऽहनि कारुकरतः प्रतिमां[2] परिगृह्य अपराह्णे अप्सु अधिवासयेत्। तद्यथा- स्नात्वा मन्त्राचमनं विधाय शुद्धे प्रदेशे उपविश्य सकलीकरणशङ्खपूरणात्माराधनान्तं कर्म कृत्वा गणेशमभ्यर्च्य अग्रतः स्वस्तिके विरचितपीठे सुवर्णमयं चषकं संस्थाप्य

1 गेहादि स्वीकृत्य। गेहस्वीकारक्रमो यथा- दारुभिर्निर्मितं गेहं दृढं रम्यं शिलामयम्। देहि मे शिल्पिराजेन्द्र स्थापनार्थं शिवस्य च (हरेरथ इत्याद्यूहः)। त्वया संस्थापितं पुण्यं दशांशं देहि मे विभो। तद्गृहीत्वा मुदा गेहं प्रदास्यामि नरोत्तम। शम्भोः (प्रभोः) संस्थापितं पुण्यं न दास्यामि कदाचन। त्वयेप्सितं धनं रत्नं गृहाणालयकारक। मया कृतमिदं गेहं दृढं रम्यं शिलामयम्। गृहाणाहं प्रदास्यामि प्रतिष्ठायै शिवस्य च (हरेरथ गणेशितुः इत्याद्यूहः।) 2 प्रतिमा उक्ताः- एकबेरं शिलालोहमणिजं सर्वदेष्यते।

कूर्चं विन्यस्य मधु आज्यं च समासिच्य मूलेनार्चयित्वा विप्रान् सन्तर्प्य मण्डपं गत्वा नेत्रोन्मीलनं कुर्यात्। **नेत्रोन्मीलनम्**- सुवर्णचषकस्थं ,मधु मधुवाता इति मन्त्रत्रयेण जप्त्वा प्रासादाभिमुखशय्यायां न्यस्तस्य विम्बस्याक्षिणी आज्यमधुयुक्तेन सूच्यग्रेण विलिख्य तक्ष्णा ते अक्षिणी समुत्कीर्य जलेन प्रोक्ष्य साज्यमधुना नेत्रे आपूर्य सुवर्णचषकादिकं तक्ष्णे अर्पयेत्। शिवस्कन्दयोः- नेत्रोल्लेखनात्पूर्वं शय्यायां शयितस्य विम्बस्य परितः सर्षपाज्ययुक्तेन पायसेन देवताभ्यः पितृभ्योऽथ भूतेभ्यः सह जङ्गमैः। एतत्स्थाननिवासिभ्यः प्रयच्छामि बलिं नमः। इति मन्त्रेण बलिं दद्यात्। गुहे पूर्वोक्तवत् नेत्रोल्लेखनादि कुर्यात्। तत्र शिवे शिरसि अक्षत सर्षपयुक्तं श्वेतपुष्पं न्यसेत्। ततश्चन्दनचर्चितसूत्रं- ओं नमो भगवते रुद्राय हिरण्यरेतसे महात्मने शिवाय शिवरूपाय उमाप्रियाय नमो नमः इति मन्त्रेण मणिरेखायां क्षिपेत्। शिवे अघोरेणाज्यमधुनी सुयोज्य मधुवातेति मन्त्रत्रयं जपित्वा मधु वातेति मन्त्रत्रयेण साज्यमधुना सूच्यग्रेण मणिरेखापार्श्वरेखान्वितं लक्ष्म विलिख्य तक्ष्णा विरचय्य मध्वाज्येन सम्पूरयेत्।

अथ गुरुस्तुष्टेन तक्ष्णा तत उद्धृत्य प्रासादो यन्मुखस्तद्दिङ्मुखं भद्रासने स्थापितं यजमानेन तत्पुरतः प्रगृह्य प्रार्पितं तत् मनुविम्वं तारेण प्रविलोक्य तारं प्लुतं प्रोच्चरन् ऊर्ध्वगतदर्भाग्राभ्यां कराभ्यां तच्चरणयोः[1] गृह्णीयात्। विष्णौ- स्वमूलमनुना अस्त्रेण वा जलेनाभिषिच्य दर्भैः सङ्घृष्य धेनुवालेन च सङ्घृष्य घृतेनाभिषिच्य मासूरपिष्टैरुद्वर्त्य जलैः क्षालयेत्। एवं सर्वत्र योजनीयम्। सर्वत्र अस्त्रं मूलं वा शोधनमन्त्रः। शिवे-आज्यसहितमधुना त्वग्भिः मृत्तिकाभिः भसितेन चूर्णेन गन्धतोयैः, शङ्करनारायणे- जलमध्वाज्यदर्भवल्कमृत्तिकाजलैः, दुर्गायां जलदर्भधेनुवालमधुघृतमासूराम्बुभिः, गुहे- दर्भमृत्त्वग्जलपशु- वालाज्यमासूरजलगोमयजलैः, विघ्ने-[2] जलमृत्त्वग्दर्भजलमध्वाज्यमासूरपिष्टैः, शास्तरि-जलदर्भकुशमृत्त्वग्गव्यैः शालिपिष्टैश्च क्षालयेत्। शिवे - मुद्गहरिद्रायवशालिगोधूमसुवर्णजानि चूर्णानि । सर्वत्र मृदादि

---

मृद्दारुजं तथाऽऽलेख्यं बहुबेरमिति स्थितिः।

1 दक्षिणेन करेण दक्षिणपादं, वामेन करेण वामपादं गृह्णीयादित्यर्थः। ईश्वरेऽपि तद्भावनया कार्यमित्यर्थः। 2 अजितगिरिशयोः प्लक्षहीनक्षीरिवृक्षत्वचः। स्कन्दे- न्यग्रोधोदुम्बरा श्वत्थप्लक्षरसालद्विजशिरीषमधूकत्वचः। शास्तरि-क्षीरिवृक्षत्वचः। स्कन्दे- वेदीक्षेत्रगजोक्षशृङ्गगिरिवल्मीकोद्भवाः सरिदब्धिजाश्च मृदः शिष्टमुत्तरत्रोच्यते। हरिहरे-

बिम्बकलशादवगन्तव्यम्। शिवे शास्तरि च अलङ्कृत्य नीराजनं कुर्यात्। विष्णुदुर्गास्कन्देषु निजाक्षतहोमान्ते, विघ्नशिवनारायणयोः कौतुकबन्धनानन्तरं नीराजनम्। गुहे कौतुकबन्धनमत्र कार्यम्। अक्षतहोमः- दुर्गागुहविष्णुषु प्रतिमाया अग्रभागे अग्निं प्रतिष्ठाप्य शमीपत्रमिश्रैराज्ययुक्तैरक्षतैः सप्तव्याहृतिभिः ओं सत्यं स्वाहा इत्यन्तैर्मन्त्रैः प्रत्येकमष्टोत्तरशतं जुहुयात्[1]। तत्समपातं क्रमात् पादजानुगुह्यनाभि हृन्मुखमूर्धसु प्रार्पयेत्। विघ्नशर्वश्रीशेषु शोधनानन्तरं मूलतः कौतुकं बध्नीयात्। स्कन्दे- अक्षतहोमात्प्राक् प्रणवपुटितोपचारमन्त्रेण, दुर्गायां- उक्ताहुतेः पूर्वमनन्तरं वा सुदर्शनमन्त्रेण, शास्तरि- बिम्बशुद्धिकलशाभिषेकात् प्राक् बीजमन्त्रेण[2] कौतुकं बध्नीयात्। शिवे- कौतुकं नास्ति। दर्भाग्रद्वयविशिष्टाञ्जलिं बध्वा अग्रतः स्थित्वा नमस्ते इति मन्त्रद्वयेन प्रार्थ्य क्षौमखण्डे क्षिप्तेन मुक्तासर्षपसहितेन सुवर्णेन उज्वलं ऊर्णासूत्रसहितं कौतुकं अङ्गुष्ठसहितानामिकया सप्तधा सुवर्त्य स्वमन्त्रेण परिजप्य दक्षिणकरे बध्नीयात्। नमस्तेऽर्चे सुरेशानि प्रतीके विश्वकर्मणः, प्रभाविताशेषजगद्धात्रि तुभ्यं नमो नमः। त्वयि सम्पूजयामीशं नारायणमनामयम्। रहिता योनिदोषैस्त्वमृद्धियुक्ता सदा भव। इति विष्णौ, त्वयि सम्पूजयामीशौ शम्भुनारायणौ सदा इत्याद्यूहः अन्यत्र कर्तव्यः। दुर्गायां- नमस्तेऽर्चे सुरेशानि विश्वावासेऽसुरारिणि। प्रभाविताशेषजगद्धात्रि तुभ्यं नमो नमः । त्वयि सम्पूजयामीशे देवीं नारायणीं सदा। रहिता योनिदोषैस्त्वमृद्धियुक्ता सदा भव इति। सदर्भवस्त्रवेष्टितं बिम्बं रथादियानमारोप्य बहुवाद्यहृद्यं कनिक्रदादि सूक्तं जपन् तीर्थं नीत्वा बिम्बमवतार्य स्वस्य सकलीकरणादि कृत्वा ओं वां (वं?) वरुणाय नमः इति वरुणं, मूलेन देवं सम्पूज्य पञ्चवारुणं[3] सञ्जप्य अश्वत्थनिर्मितां सकूर्चां फलकां विन्यस्य तत्र पीठं न्यसेत्। पूर्ववेष्टितवस्त्रादीन्यपास्याभिषिच्यालङ्कृत्य ह्लां नमः पराय[4] पृथिव्यात्मने हुं फट् इति पञ्चविंशतिसंख्यान् पञ्चप्राणायामान् कृत्वा ह्लां नमः पराय पृथिव्यात्मने नमः इति पादादि नाभ्यन्तं व्याप्य ह्लीं नमः परायाबात्मने हुं फट्

---

कषायवृक्षत्वक्करीषदग्धं भस्म। 1 शिवे-अधिवासहोमात् प्राक् प्रतिष्ठाहोमत्वेनोच्यते। विघ्नादौ विकल्प इति तद्व्याख्यात्रभिप्रायः। 2 ओं श्रीं ह्रीं क्ष्मीं (क्ष्म्रीं) हूं (ह्रं) घ्रूं शम्बरकुमाराय पद्मिने स्वाहा। 3 तत्वायामि- इमं मे वरुण- अवते हेळो- त्वन्नो अग्ने- उदुत्तममिति। सुधा कुमुदिनी पूर्णा वारुणी विश्वतोमुखी। तरङ्गिणी च सुरसा सुशीलाऽऽप्यायिनी क्रमात् नवशक्तयः सर्वशक्तिकमलासनाय नम इति समष्टिमन्त्र इति विवरणे। 4 शिवे- तु ह्रां नमः शिवायेत्यादि।

इति पञ्चविंशतिसंख्यान् चतुः- प्राणायामान् कृत्वा ह्लीं नमः परायावात्मने नमः इति नाभ्यादि हृदयान्तं व्याप्य ह्लूं नमः पराय तेज आत्मने हुं फडिति पञ्चविंशतिसंख्यं प्राणायामत्रयं कृत्वा ह्लूं नमः पराय तेज आत्मने नमः इति हृदयादि कण्ठान्तं व्याप्य ह्लैं नमः पराय वाय्वात्मने हुं फडिति पञ्चविंशतिसंख्यं प्राणायामद्वयं सम्पाद्य ह्लैं नमः पराय वाय्वात्मने नमः इति कण्ठादिताल्वन्तं व्याप्य ह्लौं नमः परायाकाशात्मने हुं फडिति पञ्चविंशतिसंख्यं प्राणायामं कृत्वा ह्लौं नमः परायाकाशात्मने नमः इति ताल्वादिमूर्धान्तं व्याप्य भूतसंहारं कृत्वा शोषणदाहने स्वस्वबीजेन कृत्वा अग्निरुपां प्रतिमां वस्त्रादिभिराछाद्य प्रणवेन प्राक्शिरस्कामुदके वासयेत्। दिक्षु ऊर्ध्वे च पञ्चतत्त्वैरस्त्रेण च रक्षां कृत्वा तद्बहिर्दिक्पालान् रक्षणार्थत्वेन न्यस्य दीपान् अग्निं जागरूकान् पुरुषांश्च स्थापयित्वा त्रिरात्रमारक्षेत्। अथाधिवासात्पूर्वदिने कर्त्ता कारु करतः दत्तं प्रासादं परिगृह्य, रात्रिसमये परितो निरीक्ष्य, सङ्गृह्य, संशोध्य, दक्षिणत उपविश्य, प्रासादशुद्धिं विदध्यात्। वास्तुबलिकलशमार्जनतण्डुलकलशविकिरणवास्तुपुण्याहान्तं कर्म कृत्वा शुद्धे उदग्देशे सप्तदशद्रव्यक्रमात् क्षेत्रं कृत्वा विष्णौ अन्तर्नवके अङ्कुरादि नवकं, **दैविकावरणे** - दिग्विदिक्खण्डानामन्तःस्थितघटेषु गन्धोदकेन, शेषेषु शुद्धोदकेन पूरयेत्[1]। शिवशास्त्रोः दिग्विदिङ्मध्यान्तः क्रमेण द्रव्याणि विन्यसेत्। दुर्गागणपत्योः प्रदक्षिणतया वहिः, मध्ये च, षण्मुखे मध्यदिग्विदिक्क्रमात्, हरिहरे- मध्यदिग्विदिक्क्रमात्, नवद्रव्याणि पूरयेत्। वहिः खण्डानामन्तस्थखण्डेषु हेमाम्बु विन्यसेत्। तत्र विष्णौ मध्यस्थपद्मस्य आग्नेयदले क्षीरिश्रीवकुलाम्रचम्पकपलाशाशोकनीपार्जुनप्रोत्थानि पल्लवानि, नैर्ऋतिकोणस्थदले पद्मचन्दनरक्तचन्दनजातीकुसुमदर्भस्तम्भकुन्दनन्दीदूर्वारोचनामर्षपांश्च, वायव्यकोण कलशे यवव्रीहिस्वर्णरत्नरजततिलनदीकूलद्वयमृद्गोमयानि, ईशकोणस्थकलशे सहाविष्णुक्रान्तिमधुकरगुलूच्यार्द्रकशमीशतावरीश्यामाकानि, पश्चिमे फलोदकं, दक्षिणे गव्यं, प्राग्भागे कषायं, उत्तरे शतमूल्यमृताकुमारीः व्याघ्रीवचाबहुसुतासहासिंहीश्च, मध्ये सप्तवल्मीकेभ्य आहृता मृदः। ओं सोमाय वनस्पत्यन्तर्गतये नमः इति पल्लवादिमृदन्तद्रव्येषु पूरणमन्त्रः। गन्धोदके अष्टाक्षरः शुद्धोदके द्वादशाक्षरश्च। शिवे - पूर्वोक्तक्रमेण कषायपञ्चगव्यभस्मजलमृज्जलगोमूत्रक्षीरदधिकुशोदकगन्धोदकानि न्यसेत्।

1 **विष्णौ हरिहरे सप्तदशद्रव्यं ईशादिषु नव द्रव्यमिति विवरणे।**

शास्तरि- पूर्वोक्तक्रमेण मृज्जलं कषायं व्यस्तं पञ्चगव्यं समस्तं च गन्धजलं च न्यसेत्। दुर्गायां- पूर्वोक्तक्रमेण व्यस्तं पञ्चगव्यं मृज्जलं कषायं रत्नजलं गन्धोदकं च न्यसेत्। गणपतौ- पाद्यमर्घ्यं गव्यं क्षीरं दधि कषायं मृज्जलं **कुशजलं गन्धोदकं** च न्यसेत्। स्कन्दे- कुशोदकगव्यकषायदूर्वोदकसर्षपोदकमृज्जलरत्नजल-शुद्धजलगन्धजलानि न्यसेत्। हरिहरे मृज्जलकषायव्यस्त पञ्चगव्यफलजलाखिलौषधानि न्यसेत्।अत्र शिवे द्रव्यपूरणं दिक्षु तत्पुरुषाद्यैः, कोणेषु हृदयशिखाकवचशिरोमन्त्रैः, मध्ये ईशानेन च कर्तव्यम्। अन्येषु देवेषु मूलेन द्रव्यं पूरयेत्। शिवे- वल्मीकवृषभश्रृङ्गस्थतीर्थस्थगज शृङ्गस्थपर्वतस्थनदीगतवेदिकास्थचत्वरस्था मृदः। विघ्ने- पूर्वोक्तासु चत्वरनदीमृदः परित्यज्य क्षेत्रजाखुजमृदौ योजनीये। दुर्गायां-पूर्वोक्ता मृदः वल्मीकचत्वरस्थमृद्रहिताः सूकरदारितमृत्सहिताश्च। हरिहरे सरिदुभयतटक्षेत्रवल्मीकमृदः वृषभश्रृङ्गजाता मृदश्च। शास्तरि- गजवराहवृषदन्तजाता वल्मीकनदीसमुद्भवाश्व मृदः। दुर्गायां- क्षीरिवृक्षपलाशशमीखदिराणां कषायम्। हरिहरे- खदिररहितं तदेव। विघ्ने- क्षीरिवृक्षकपित्थमधूकबिल्वानां कषायम्। हरिहरे- तिलमाषयवप्रियङ्गुगोधूम-शाल्यणुसमाह्वयानि ग्राम्याणि सप्त, नीवारगार्मुकगवीधुकजर्तिलश्यामाक-वेणुफलवास्तुकसंयुतानि आरण्यकानि सप्त सर्वौषधानि। शेषद्रव्याणि कलशस्नपने उक्तानि गृहीतव्यानि। एवमुक्तक्रमात् कलशान्सम्पूर्य सम्पूज्य मूलेनाष्टोत्तरशतमाज्यं हुत्वा तत्सम्पातं कलशेषु समर्प्य हरौ मध्यखण्डस्थकलशेषु हिरण्यवर्णमन्त्रं, अन्येषु खण्डगतकलशेषु अन्तर्बहिश्च स्वस्वमूलमेव, इतरेषु सर्वत्र स्वस्वमूलमेव परिजप्य नवैर्वस्त्रैराच्छाद्याधिवास्य रक्षेत्। अथाधिवासदिने प्रातः मार्जनलेपनाभ्यां शोधितं मण्डपं संस्कुर्यात्। अनन्तरमग्निजननं कुर्यात्।

**शय्याकल्पनम्**- शुद्धायां वेद्यां दक्षिणार्धे मूलप्रासादसम्मुखं[1] शय्यास्थानं प्रकल्प्य महत् स्वस्तिकं प्रकल्प्य द्रोणाष्टकाद्युन्मितं धान्यनिचयं तण्डुल (सिद्धार्थ) कुशादिसहितं मूलेन प्रकल्प्य कम्वलवस्त्रपट्टादिभिः कल्पितां शय्यां विष्णौ-द्वादशाक्षरेण, अन्यदेवेषु- मूलेन, आस्तीर्य उत्तरच्छदोपधानादिसहितायां शय्यायां स्थिराधिष्ठात्रीं रमोमाद्यां, विष्णौ- श्रीं बीजेन अन्यत्र ह्रीं बीजेनावाह्य यजेत। अथ सर्वदेवेषु शय्याशिरोदेशे, शास्तरि- ऐशान्यां दिशि वा, शिवे आपोहिष्ठादिमन्त्रैः, कुमारे- आपो देवीरिति मन्त्रेण, इतरेषु मूलेन निद्राकुम्भं

1 प्राग्द्वारे प्राक् शिरस्कं, प्रत्यक् द्वारे प्रत्यक् शिरस्कं सामान्यतः, स्कन्दे दु विशेषो वक्ष्यते।

गन्धजलेनाभिपूर्य कलातत्वावाहनादिभिर्यजेत। शय्याममीपे परितोऽष्टदिक्षु विद्येशकुम्भानप्यभिपूर्य पूजयेत्। विष्णौ- मूलमन्त्राक्षरयुतान् चक्रपूजायामुक्तान् विष्णुमधुसूदनादीन् पूर्वादिदिक्कोणेषु पूजयेत्। ईशे अनन्तसूक्ष्मादीन् पूजयेत्। हरिहरे- ताभ्यां द्वाभ्यामपि मन्त्राभ्यां अनन्ताय विष्ण्वात्मने नमः इत्यादिक्रमेण पूजयेत्। शास्तरि- मण्डपसंस्कारे उक्ता गोप्त्रादयः। दुर्गायां- जयाद्याः शक्तयः। स्कन्दे- सनत्कुमाराद्या मूर्तयः। विघ्नेशे- गणञ्जयाद्याः मूर्तयः। षण्मुखे- चतसृष्वाशासु मूलमेव वा। **कौमारकलशः**- कुमारे- वेदिमध्ये षड्दले वक्ष्यमाणक्रमेण निर्मिते मण्डले कुमारदैवतं कलशं प्रतिष्ठाप्य प्रपूज्य तस्य पूर्वभागे दक्षिणोत्तरदीर्घां निद्राकलशविद्येशकलशयुक्तां शय्यां प्रकल्पयेत्। कौमारमण्डले पीठपूजानन्तरं पूर्वादिदिग्दलमारभ्य ब्रह्माणं भद्रकालीं गणेशं विष्णुं ईश्वरं शास्तारं च चतुर्थ्यन्तं नमोयुक्तं यजेत। सुवर्णमयं पद्मं गजं मयूरं शक्तिं वज्रं च निधाय पूजितलिपिपङ्कजघटे गुहमावाह्य परिवारैः सहार्चयेत्। वज्राद्यावरणात्प्राक् दिक्पालानन्तरं ईशेन्द्रयोर्मध्याद्यन्तरालेषु ओं आदित्येभ्यो नमः, अश्विभ्यां, पितृभ्यो, गणपतये, मातृभ्यो, अप्सरोभ्यो, वसुभ्यो, रुद्रेभ्यो नमः इतिक्रमादिष्ट्वा प्रीणयेत्। विष्णौ- शिरोभागे पादयोः समीपे पार्श्वयोरग्रभागे च आज्यमधुक्षीरशान्तिजलपञ्चगव्यपूरितानि क्रमात् सौवर्णरजतताम्रकांस्य-मृन्मयपात्राणि निजपञ्चतत्वैः क्रमेण संस्थाप्य स्पृष्ट्वा जपेत्। शिवे- तद्वत् पादसमीपे पात्रयोरर्घ्यपाद्ये, पार्श्वयोः पात्रयोः क्षीरमधुनी मूलेन न्यसेत्। शास्तरि- शिरःसमीपे पादसमीपे च मूलेन घृतं मधु च, कुमारे पादयोः समीपे रजतपात्रयोः ओं नमः षण्मुखाय इति मन्त्रेण अर्घ्यं पाद्यं च न्यसेत्। अत्र विशेषद्रव्यं कलशपटलादवगन्तव्यम्। दुर्गायां- शिरोदेशे हैमपात्रे इषेत्वेति मन्त्रेणाज्यं, पादसमीपे रौप्यपात्रे मधुवातेति मन्त्रेण मधु न्यसेत्। पार्श्वयोः कांस्यताम्रपात्रयोः अर्घ्यपाद्ये मूलेन न्यसेत्। हरिहरे- वैष्णवोक्तं ग्राह्यम्। गणपे शिवोक्तं ग्राह्यम्। अष्टमङ्गलानि मङ्गलपालिकाः प्रदीपादींश्च परितो विन्यस्य मण्डपोदरमलङ्कुर्यात्। शिवे-[1]दिक्षु[2] शङ्खं चक्रं ध्वजं आदर्शं वृषभं अङ्कुशं चामरं मत्स्ययुग्मं (यज्ञियवृक्षैः कृतानेतान्) स्वस्तिकेषु न्यसेत्। विष्णौ शङ्खं चक्रं ध्वजं श्रीवत्सं आदर्शं वृषभं मत्स्यद्वन्द्वं पूर्णकुम्भं च न्यसेत्। हरिहरे- स्वस्तिकं पद्मं शङ्खं पूर्णकुम्भं आदर्शं उत्पलं नन्द्यावर्तं श्रीवत्सं दुर्गायां - श्रीवत्सं कुम्भं भेरीं आदर्शं मत्स्यद्वयं

1 पृथगष्टमङ्गलान्याह। 2 पूर्वस्थापितविद्येशकलशघृतमध्वादिपात्रावरणबाह्ये।

अङ्कुशं शङ्खं नन्द्यावर्तं च न्यसेत्। स्कन्दे- पूर्णघटं ध्वजं वज्रं स्वस्तिकं शक्तिं चामरद्वितयं गजं मयूरं च न्यसेत्। विघ्नेशे शास्तरि च- दर्पणं पूर्णकुम्भं वृषभं चामरद्वयं श्रीवत्सं स्वस्तिकं शङ्खं दीपं च न्यसेत्। एवं मण्डपं विधाय तद्बाह्ये ईशभागस्थापरमण्डपे भद्रपीठं निधाय पीठपूजां कृत्वा दर्भपुष्पवस्त्रगन्धादिसहितः भद्रपीठे प्रतिमां नेतुं तीर्थं गच्छेत्। बिम्बरक्षणाय कृतावस्थान देवतागणं सलिलस्थबिम्बे उद्वास्य बिम्बं जलादुद्धृत्य पूर्ववेष्टितं वासो विसृज्य दर्भैर्विघृष्य सलिलेन विशोधयेच्च। लावनादिकं भूतसृष्टिं[1] च कृत्वा तत्तन्मन्त्रेण साङ्गीकृतं गन्धादिभिरलङ्कृतं मन्त्रबिम्बं[2] वस्त्रवेष्टितं द्विजैः कल्पिते रथे आरोप्य वाद्यघोषादिमङ्गलध्वनिभिः साकं कनिक्रददादि जपन् पूर्वकल्पितभद्रपीठे नीत्वा इष्टपीठे प्रासादसम्मुखतया विनिधाय भद्रंकर्णेभिरिति ऋचं जपेत्। विष्णौ- पूर्वाभिमुखं त्रीणिपदाविचक्रमे इति ऋचा न्यसेत्, अग्रे स्थित्वा भद्रंकर्णेभिरिति जपेच्च। हरौ हरिहरे च- घृतवती सवितुरिति ऋचा घृतेनाङ्क्त्वा हरीशे नमस्ते रुद्र मन्यव इति मन्त्रेण, विष्णौ मूलेन मासूरपिष्टेन शोधयेत्। अथवा हरौ तेजोसीति मन्त्रेण घृताञ्जनम्। स्कन्दगणपयोर्मूलेनाञ्जनं शोधनं च कुर्यात्। शेषेषु स्वकल्पविधिना एतद्द्वयं कुर्यात्। ततो दुर्गायां- दर्भमृद्त्वग्भिः क्रमात् परिघृष्य शोधयेत्। शिवे त्वक्शकृत्मृद्भस्मभिः, शास्तरि मृत्वक्शकृद्भिः, गणपे मृत्त्वग्भ्यां, गुहे स्वकलशोक्तद्रव्यकैः सर्वैः सर्वैः स्वाणुभिश्च, श्रीशहरीशयोः स्वविहितमृद्भिः वक्ष्यमाणक्रमात् शोधयेत्। **दुर्गागणेशगुहेषु-** बिम्बशुद्धिस्नानात्पूर्वं नयनमोक्षणं, श्रीशहरीशयोः बिम्बशुद्धिकलशस्नानमध्ये, आर्ये स्नानात्पूर्वं जलाधिवासात्पूर्वं वा **नयनमोक्षणं** कुर्यात्। पुरतः वस्त्रं प्रसार्य नेत्रोन्मीलनं कुर्यात्। शास्तृगणपगुहेषु- हैमचषके घृतं मधु च निक्षिप्य मधुवाता इति मन्त्रं प्रजप्य सुवर्णसूच्या सङ्गृह्य नेत्रमन्त्रेण नेत्रोन्मीलनं, मूलेन तारकं, तत्रस्थं तेजः प्रणवेन च तनुयात्। दुर्गायां- जातवेदसे मन्त्रेण नयनोन्मीलनं मूलप्रणवाभ्यां तारकतेजसोरुन्मीलनं च कुर्यात्। विष्णौ- हिरण्यगर्भ इति मन्त्रेण मध्वाज्यं प्रगृह्य चित्रं देवानामिति मन्त्रेण दक्षिणनेत्रं आप्यायस्वेति मन्त्रेण वामनेत्रं उन्मीलयेत्। तारकतेजसी मूलप्रणवाभ्यां च सन्तनुयात्। हरिहरे- मधुक्षीरघृतानि हिरण्यगर्भ इति मन्त्रेण प्रगृह्य चित्रं देवानामित्यृचा वामनेत्रं, विश्वतश्चक्षुरिति मन्त्रेण दक्षिणनेत्रं, ललाटनेत्रं हिरण्यगर्भ इति मन्त्रेणोल्लिखेत्। इत ऊर्ध्वं समानम्।

---

1 पूर्वोक्तविपरीतक्रमात्। 2 विष्णौ- अत्रैव कौतुकमुपचाराष्टाक्षराभ्यां बध्नीयात्।

नयनमोक्षणात्पूर्वं प्रसारितं पटं हृत्वा अग्रे गां प्रदर्श्य तां गां गुरवे दद्यात्।

**बिम्बशुद्धिस्नपनम्** - विघ्नार्यदुर्गास्कन्देषु मूलेनावाह्य सकलीकरणादि कृत्वा उपहारान् दत्वा बिम्बशुद्धिस्नपनं कुर्यात्। शिवविष्णुहरिहरेषु स्नपने कृते आवाहनं कुर्यात्। विष्णौ- स्वसप्तमृत्तिकाभिः " मूर्धानं दिव" इति मन्त्रेण विलिप्य तन्मृत्पूर्णघटेन समुद्रज्येष्ठा इति मन्त्रेणाभिषेचयेत्। प्रागादिदिग्घटैः क्रमेण यज्ञायज्ञावः, पयः पृथिव्यां, याः फलिनीर्या, या दिव्या आपः, इति चतुर्भिर्मन्त्रैरभिषिच्य नेत्रोन्मीलनमत्र कृत्वा अग्न्यादि कोणघटैः क्रमात् हंसः शुचिषत्, विष्णोरराटमसि, सोमं राजानं, विश्वतश्चक्षुरिति चतुर्भिर्मन्त्रैः स्नपयेत्। द्रुपदादिवेदिति मन्त्रेण मासूरपिष्टैराकण्ठं देहे उद्वर्त्य मूर्ध्नि मुरामांसीक्षीरपिष्टामलकैर्मानस्तोके इति मन्त्रेणालिप्याथ बहिष्ठगन्ध-सलिलैर्दिक्कोणसंस्थैर्विष्णोरराटमसीति मन्त्रेण, तत्तद्दिक्कोणगतैरुपघटैः "इमा आपः" इति मन्त्रेणाभिषिञ्चेत् । एवमभिषेकं कृत्वा "एह्येहि भगवन् विष्णो लोकानुग्रह कारक। यज्ञभागं गृहाणेमं वासुदेव नमोऽस्तु ते" इति मन्त्रेणान्ते मूलमुक्त्वा नारायणमावाहयामीत्यावाह्य मूलाङ्गन्यासव्याप-कन्यासादिकमारचयेत्। तस्मै विष्णवे हिरण्मयादिमनुना? अर्घ्यं पाद्यं च दत्वा, गायत्र्या आचमनं मधुपर्कं च दत्वा, बृहस्पते अतीतिमन्त्रेण पीतवस्त्रं, वेदाहमन्त्रेण उत्तरीयं, प्रणवेन हैममुपवीतं च दत्वा, "इदं विष्णुरिति" मन्त्रेण गन्धं पुष्पं हिरण्मयपवित्रं च दत्वा "विश्वतश्चक्षुरि"ति मन्त्रेण सृष्टिसंहारक्रमेण व्यापय्य तेजोमयमादधीत। ओषधयः समिति मन्त्रेण पुष्पैरवकीर्य "धूरसि" इति मन्त्रेण धूपं "तेजोऽसि" इति मन्त्रेण दीपं च प्रदाय "समिद्धो अञ्जन्" इति मन्त्रेण नेत्रे अञ्जनरञ्जिते कृत्वा "येनाकस्य" इति मन्त्रं जपन् गोरोचनेन तिलकं कृत्वा " वनस्पतेः पुष्प" इति मन्त्रेण पुष्पं मालां च समर्प्य अर्घ्यपाद्याचमनानि दत्वा अर्घ्यधारां मूलेन दत्वा प्रसूनैर्विकिरेत्। रथन्तरवैराजगायत्रैः स्वयोनिजैः, (अभित्वाशूर, पिबासोममिन्द्र, अग्न आयूंषि इत्याद्यैः) सामभिः स्तुत्वा सम्प्रीणयेत्। तण्डुलपूरिते तैजसे पात्रे घृतपूर्णं परितः वर्तिभिर्ज्वलद्भिर्युतं शरावमुपधाय, तस्य दिक्षु गोमयेन क्लृप्तानि श्वेतरक्तादिरजोभिश्चित्रितानि दिक्पालानां वज्राद्यायुधानि विरचय्य दूर्वाग्रयुक्तैरश्वत्थदलैर्विभूष्य प्रणवेन दूर्वाक्षतं मूर्धनि पादयोश्च कृत्वा अस्त्रसमर्चितेन नीराजनीयेन निजास्त्रं जपन् नीराजयेत्। ओं विष्णुः प्रीयतामिति विशेषयुक्तं पुण्याहं कुर्यात्। हरिहरे- शिरसि प्रणवेन वृषविषाणनदीद्वितीरमृद्भिर्विलिप्य प्रणवेन शुद्धजलैरभिषिच्य शरीरे प्रणवेन

वल्मीकक्षेत्रोत्थमृदा विलिप्य प्रणवेन शुद्धजलैरभिषिच्य मध्यस्थमृद्घटेन मानस्तोकेति मन्त्रेण संस्नाप्य पूर्वदलस्थकषायकलशेन "अवोचाम" इति मन्त्रेण, दक्षिणपश्चिमोत्तराग्नेयनैर्ऋतदलस्थैः_गोमूत्रगोमयक्षीरदध्याज्यपूर्णघटैः प्रणवेन, मूलेन वायव्यदलस्थफलोदककलशेन, मध्ये मध्ये आपोहिष्ठादिभिः शुद्धजलैरभिषिञ्चेत्। ततः नेत्रत्रयोन्मीलनं कुर्यात्। ततः ईशदलस्थसर्वौषधिकलशेन नमः शम्भवे, इषेत्वा, नमो वः किरिकेभ्यः इति मन्त्रैरभिषिच्य दिक्खण्डस्थकलशैः तत्त्वायामि, समुद्रं गच्छ, आपोहिष्ठा, गायत्री इति चतुर्भिर्मन्त्रैः, प्रणवपुटितगायत्र्या कोणखण्डस्थकलशैरभिषिच्य तारेणावाह्य तेनैव सकलीकृत्य सोमारुद्राविवृहतं इति मन्त्रेण अर्घ्यं पाद्यं गन्धं पुष्पं पवित्रं च, 'युवं वस्त्राणीति' मन्त्रेण वस्त्रं च बृहस्पते अतीतिमन्त्रेण उत्तरीयं वेदाहं इति ऋचा उपवीतं मूलेनालङ्करणानि, धूरसीति धूपं उद्दीप्यस्वेति दीपं समिद्धो अञ्जन् इत्यञ्जनं तारेण गोरोचनं च दत्वा सोमारुद्रा युवं इति मन्त्रेण दर्पणं दर्शयित्वा, अग्नाविष्णू इति मन्त्रेण स्तुत्वा, युवमेतानीति मन्त्रेण प्रार्थ्य ओषधय इति मन्त्रेण पुष्पाणि विकीर्य ओं शिवनारायणः प्रीयताम् इति विशेषयुक्तं पुण्याहं विदध्यात्। तारेण पादुकां चामरं छत्रं वाहनं च दद्यात्। महेशे-बिम्बशुद्धौ पुरुषाघोरसद्योजातवामदेवमन्त्रैः दिक्खण्डस्थघटैः, हृदयशिखाकवचशिरोमन्त्रैर्विदिक्खण्डस्थघटैः, ईशानमन्त्रेण ब्रह्मकलशेन परिकुम्भसहितेन चाभिषिञ्चेत्। अथ देवं यथोक्तं ध्यात्वा आवाह्य सकलीकृत्य पाद्यमाचमनं च दत्वा अघोरमन्त्रेण गन्धं वामेन वस्त्रं ईशानेन पुष्पाणि तत्पुरुषेण धूपं दीपं अर्घ्यं च दत्वा नमस्कृत्य सुगन्धचर्चितकरो भूत्वा दिशासु चतुरस्रभागं ब्रह्मगायत्र्या, दिशासु अष्टास्रभागं विष्णुगायत्र्या, दिशासु वृत्तभागं रुद्रगायत्र्या च संस्पृशेत्। तत्पुरुषाय विद्महे पितामहाय धीमहे। तन्नो ब्रह्मा प्रचोदयात् इति ब्रह्मगायत्री। तत्पुरुषाय विद्महे जनार्दनाय धीमहे। तन्नो विष्णुः प्रचोदयात् इति विष्णुगायत्री। तत्पुरुषाय विद्महे महादेवाय धीमहे। तन्नो रुद्रः प्रचोदयात् इति रुद्रगायत्री आवाह्य सकलीकृत्य पाद्याद्यैः सितमाल्यादिभिः परिपूज्य श्रीशिवः प्रीयताम् इति विशेषयुक्तं पुण्याहं कुर्यात्। दुर्गायां आवाहनादि सकलीकरणादि कृत्वा स्नानकाले सें दुर्गायै नमः इत्यादि पञ्चमन्त्रैः क्रमात्पृथक्स्थितैः पञ्चगव्यैः स्नपयेत्। स्वोक्तमृद्भिरालिप्य मृज्जलकलशेन तत्वायामि, इमं मे वरुण, अवते हेळ, त्वन्नो अग्ने, उदुत्तमं इति पञ्चवारुणैरभिषिच्य पावमानीः स्वस्त्ययनीरिति पावमानमन्त्रेण

कषायोदकैरभिषिच्य शालीतण्डुलभुवा चूर्णेनोद्वर्त्य रत्नोदगन्धोदकलशाभ्यां पञ्चदुर्गामन्त्रैरभिषिञ्चेत्। ओं दुर्गा प्रीयतां इति विशेषयुक्तं पुण्याहं विधाय शेषसलिलैस्तैरेव पञ्चदुर्गामन्त्रैरभिषिच्य द्वे रक्ते वस्त्रे परिधाप्य तैः पञ्चदुर्गामन्त्रैर्गन्धं पुष्पं धूपं दीपं अलङ्कारं वितानं चामरयुगं छत्रं च दद्यात्। पुनः अयं पुरो हरिकेशः इति पञ्चमन्त्रैः प्रागाद्यूर्ध्वान्तं पञ्चदिक्षु नीराज्य स्वागमोक्तैर्मन्त्रैः स्तुतिं कुर्यात्। स्कन्दे- मूलेनावाह्य सकलीकृत्य ध्यानाद्युपहारान् दत्वा स्नानकाले पूरणक्रमेण कौशादिगन्धान्तिमैर्नवघटैः परिकलशैः सह क्रमात् मूलेन स्वास्त्रमन्त्रेण कवचमन्त्रेण मूलेन हृदयमन्त्रेण "अग्निमीळे" इति मन्त्रेण "इषेत्वे"ति मन्त्रेण शन्नो देवीरिति मन्त्रेण उपचारमन्त्रेण चाभिषिञ्चेत्। पुनः स्वगायत्र्या बहुजलैः संस्नाप्य युवं वस्त्राणीति मन्त्रेण वस्त्रद्वयं दत्वा उपवीतगन्धपुष्पस्रग्धूपदीपचामरद्वयछत्राञ्जनदर्पणपादुकायुगं च उपचारेण दद्यात्। अथ नीराज्य ओं स्कन्दः प्रीयताम् इति विशेषयुक्तं पुण्याहं कुर्यात् इति स्कन्दे बिम्बशुद्धिः। गणेशे- आवाह्य सकलीकरणादि कृत्वा स्नानकाले गणञ्जयाद्यष्टमूर्तिमन्त्रैः क्रमात् बहिः प्रदक्षिणक्रमेण कलशैः, अन्ते मूलेन ब्रह्मकलशेन च स्नपयेत्। उपहारदानसमये, जलगन्धपुष्पधूपदीपान् मूलेन दद्यात्। अन्यत् पूर्वोक्तवत्। नीराजनानन्तरं ओं विघ्नेशः प्रीयतामिति विशेषयुक्तं पुण्याहं कुर्यात्। आर्ये- स्नपनकाले दिक्विदिक्क्रमेण ब्रह्मकलशेन च मूलेन स्नपयेत्। उपहारदानसमये जलगन्धपुष्पधूपदीपदर्पणानि मूलेन दद्यात्। अन्यत्समानम्। नीराज्य ओं शास्ता प्रीयतामिति विशेषयुक्तं पुण्याहं च कुर्यात् इति शास्तरि बिम्बशुद्धिः। एवं सर्वत्र उपहारपुण्याहानन्तरं अर्घ्यं दत्वा "उत्तिष्ठ ब्रह्मणस्पते" इति मन्त्रं जपन् बिम्बं प्रोत्थाप्य, "रथे तिष्ठन्" इति मन्त्रं प्रजपन् रथे आरोप्य, कनिक्रदत् स्वस्त्यादि जपन्, हरिहरे उदुत्यं जातवेदसं इति जपन्, हरौ- पुरुषसूक्तं जपन्, प्रदक्षिणक्रमात् बिम्बं मण्डपमानीय अखिलेषु द्वारि उपचारेणार्घ्यं दत्वा, उदुत्यं, आकृष्णेन इति मन्त्रद्वयमुच्चरन् शिवं यानात्समवनार्य अन्तर्नयेत्। गुहे- आसत्येन रजसा इति मन्त्रं, हरिहरे-यस्मिन्वृक्षे इत्यादि मन्त्रं, हरौ-द्वादशाक्षरं, शेषेषु निजं मूलं चोच्चरन् अन्तर्नयेद्बिम्बम्। यथावकाशमितरान् शोभनान् मन्त्रान् जपेत्। अथ ईश्वरे वामदेवेन शय्यायां न्यस्य स्वमूलेन व्याप्य सकलीकरणं कृत्वा वामदेवेन प्रासादसम्मुखं शाययेत्। हरिहरे-नमो हिरण्यवाहवादिना, दुर्गाया ... स्तुभा तारेण च, शेषेषु मूलतः,

विष्णौ- द्वादशाक्षरेण शय्यायां न्यस्य विष्णौ विश्वतश्चक्षुरिति मन्त्रेण, अन्येषु स्वमूलेन व्याप्य सकलीकरणं कृत्वा शय्यान्यासोक्तमन्त्रैः प्रासादसम्मुखं शाययेत्। स्कन्दे तु- पीठे संस्थाप्य पाद्यार्घ्यासनैरुपचारैरुपचर्य शय्यायां प्रासादे प्राग्द्वारे सति उदक्शीर्षं, प्रत्यग्द्वारे दक्षिणशिरस्कं च बिम्बं शाययेत् इति विशेषः। इति बिम्बशुद्धिः शय्यायां शयनं च।

**अधिवासकर्म**- कृतेन स्वास्त्रमयाग्निना करतले पृष्ठे च दहनबुद्ध्या व्याप्य उत्पादनबुद्ध्या मूलेन तयोः परितश्च व्याप्य मूलमन्त्रस्याक्षराणि अङ्गानि च यथास्थानं विन्यसेत्। सूक्ष्ममध्यमहाशव्दाः दक्षसव्योभयोद्भवाः। बोधासेचनकोद्दीप्तिकरा वह्नेस्त्रितालकाः। दक्षिणकरताडनेनाग्निमुद्बोध्य वामकरताडनेनासिच्य उभयकरताडनेनोद्दीप्तं कुर्यात् इति तालत्रयम्। पुनः सुदर्शनादिस्वास्त्रेण अस्त्रमुद्रया दशदिशो बध्वा उद्बुद्धमग्निं चक्रमुद्रया त्रिः परिभ्रमन् दिक्षु विकिरेदिति दिग्बन्धनाग्निप्राकारौ विधाय कलशपटलारम्भप्रोक्तमार्गेण नाडीशोधनं कृत्वा पूजापटलोक्तमार्गेण रेचकपूरककुम्भकान्कृत्वा ओं हंसः इति मूलाधारस्थजीवं सुषुम्नामार्गेण द्वादशान्तस्थपरमात्मनि संयोज्य तत्वसंहारं कृत्वा शोषणदाहनप्लावनानि कृत्वा लं हं बीजाभ्यां काठिन्यसुषरीकरणे च कृत्वा जीवं हृदये सोऽहं इति ब्रुवाणः आयोज्य तत्वसृष्टिं विधाय संवत्सरपरिपाकाण्डभेदनादिभावनां विदध्यात्[1]। पुनः लिपिन्यासं विधाय मातृकान्यासं कृत्वा ओं अं कं खं गं घं ङं आं हृदयाय नमः इत्यादिना अङ्गानि कुर्यात्। ब्रह्मा ऋषिः, गायत्री छन्दः, सरस्वती देवता इत्यादि च। अत्र पूजापटले उक्तक्रमेण मन्त्रप्राणायामादिमन्त्रोक्तभावनां कुर्यात्। दुर्गायामत्राधिवासे स्वमन्त्रभावनानन्तरं विष्णूक्ताष्टाक्षरमन्त्रभावनां च कुर्यात्। अथ सर्वदेवेषु शङ्खपूरणं आत्माराधनं गणपतिपूजां चादधीत। अथ पाणितले जलं कृत्वा अष्टवारं प्रणवमावृत्य ओं फडिति बिम्बं प्रोक्ष्य अस्त्रेण तालत्रयादिना परिरक्ष्य भूयश्च प्रोक्ष्य हृदयेऽभिमृश्य अष्टवारं प्रणवं जप्त्वा बिम्बस्थस्य जीवस्य व्याप्तिमखिलाङ्गतो विकृष्य हृदये आनयेत्। गुरूक्तक्रमेण स्वेन सह तद्बिम्बस्य नाडीसन्धानं कुर्वन् पुष्पयुक्तेन हस्तद्वयेन प्लुतेन प्रणवेन मन्त्रबिम्बात् तच्चैतन्यं सुषुम्नया उत्क्रामय्य स्वात्मनि प्रणयेत् । तारेण वायुमायम्य इदं चैतन्यं स्वात्मनि एकत्वं प्राप्तमाकलयेत्। अथ तद्बिम्बे स्वाश्रयतत्वसमूहस्य संहारं शोषणादिकं

1 लघुतरप्रयोगे रेचकपूरककुम्भकैः परमात्मभावमालम्ब्य शोषणदाहनप्लावनानि कृत्वा लिपिप्राणायामं कुर्यात्।

च विदध्यात्। यथा कलशारम्भे उक्तक्रमेण बिम्बे पादाग्रादि स्थानं दर्भादिना स्पृशन प्राणायामं विधाय घ्राणोपस्थशब्दस्पर्शरूपरसगन्धयुक्तां पृथिवीं पृथिवीतन्मात्रे विलाप्य संहारक्रमस्थपञ्चतत्वबीजैः[1] पादाग्रादि नाभ्यन्तं व्याप्य तन्मात्रां अप्तत्वे संहरेत्। पुनरप्तत्वं जिह्वापायुयुतं शब्दस्पर्शरूपरसैर्युक्तं तन्मात्रे प्रविलाप्य द्वितीयतत्वेन व्याप्य तेजस्तत्वे संहरेत्। एवं क्रमेण ताल्वन्तं पञ्चभूतानि संहृत्य व्याप्य नेत्राङ्घ्रिशब्दस्पर्शरूपयुतं तेजस्तत्त्वं, त्वक्क्पाणियुतं शब्दस्पर्शगुणयुतं वायुतत्वं, श्रोत्रवाग्युतं शब्दगुणयुतं आकाशं संहरेदिति विशेषः। ओं हुं फट् इति सकृत्प्राणायामं विधाय आकाशं मनासि संहृत्य ओं नमः इति चतुरङ्गुलान्तरेषु व्यापयेत्। एवमेवोत्तरोत्तरं प्राणायामव्यापनाभ्यां मनः अहङ्कारे, अहङ्कारं बुद्धितत्त्वे, तत्प्राणतत्वे, प्राणं जीवतत्वे च क्रमेण संहृत्य त्रिभिः प्रणवप्राणायामैः क्रियां ज्ञानं इच्छां च संहृत्य जीवं आनन्दस्वरूपं भावयेत्। एवं सर्वदेवेषु संहारक्रमः। शिवे तु बुद्धितत्वान्तं संहृत्य बुद्धिं गुणप्रकृतौ तां पुरुषे पुरुषं रागतत्त्वे तमशुद्धविद्यायां तां कलायां तां नियतितत्त्वे तत्काले तं मायायां तां शुद्धमायायां तामीश्वरे तं सदाशिवे तं शक्तौ तां शिवे च संहृत्य प्रणवप्राणायामत्रयेण क्रियादित्रयं संहृत्य शिवं केवलानन्दस्वरूपं भावयेदिति विशेषः। एवं संहृत्य ईशहरिहरषण्मुखशास्तृगणपेषु पञ्चसु देवेषु तत्वानि संहृत्य, बिम्बे वाय्वग्न्यमृतबीजैः प्राणायामं विधाय शोषणदाहनप्लावनानि कुर्यात्। हरिकुमार्योस्तु भूतानि शोधयित्वा अनुक्रमेण परमे आत्मनि संयोजयेत्। यथा पृथिव्याः शोषणदाहनप्लावनानि, अपां शोषणदाहने, वह्नेः शोषणं, वायोः सुषरीकरणं। आकाशादीनां संहारसमये स्वस्वकारणैरैक्यं प्रणवप्राणायामेन भावयेत् सृष्ट्यारम्भे विष्णुदुर्गयोः त्रिभिः प्रणवप्राणायामैः आत्मनःसकाशादिच्छां ज्ञानं क्रियां च शक्तीर्विभावयेत्। परेषु शिवादिषु तिस्रः शक्तीः जगदण्डकल्पनात् पूर्वं विभावयेदिति विशेषः। लक्ष्मीशे (दुर्गायां) वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनारायणावसानैः ओं षों नमः पराय परमेष्ठ्यात्मने, 'ओं वासुदेवाय नमः' इत्यादि रूपैः पञ्चतत्त्वैः पञ्चमूर्तीः सृष्ट्वा प्रजापतिनाम्नो नारायणात् जगत्सृष्टेः कारणभूतं अपूर्वमयं जलं प्रणवप्राणायामेन सृजेत्। विष्णुदुर्गयोरपूर्वाम्भसि, शिवादिपञ्चसु प्लावनवारिणि पृथिवीबीजप्राणायामेन तस्याम्भसः बुद्बुदाकारं जगदण्डमुत्थितं भावयेत्। तत्पञ्चभूतात्मकं कान्तिमद्भावयेत्।

---

1 विमर्शिनीसम्मतमिदं, विवरणपर्यालोचने सर्वत्र लां नमः परायेत्यादिभिरेवेति भाति।

पुनः प्रणवप्राणायामेन तदेतज्जगदण्डं विम्बं प्रकल्प्य तेनैव प्लुतप्रणवेन गुरोः स्वस्यात्मनि नीतां जीवशक्तिं विम्बस्य वीजशक्तिं प्रति संक्रमय्य सप्रणवभुवनेश्वरीप्राणायामेन तद्बिम्बेनैकयं प्रणयेत्। सकलेषु देवेषु जीवतत्वाद्यैः, शिवे शिवाद्यैः तत्त्वैःसृष्टिक्रमेण सृष्टिवुद्ध्या पृथक्प्राणं नियम्य विम्बस्थं जीवं प्राप्तसर्वावयवोन्मेषं विभाव्य षष्ट्यधिकत्रिशतप्रणवप्राणायामेन प्राप्तसंवत्सरपरिपाकं भावयेत्। ओं फडिति तदण्डं परिभिद्य उभे तच्छकले द्यावापृथिव्यौ भावयेत्। द्यावापृथिव्योरन्तरे विराजमानं प्रजापतिं सर्वजनहितकारिणं पुरुषमेवं ध्यात्वा, लिप्या प्रणानायम्य लिपिन्यासं कृत्वा पूजापटलोक्तक्रमेण मन्त्रोदयादि पीठन्यासान्तं कुर्यात्। मूलमन्त्रेण प्राणायामं विधाय प्रणवपुटितेन मूलेन त्रिवारं व्याप्य लिपितत्त्वमन्त्राक्षरतदङ्गानि न्यस्य तस्मिन्बिम्बे पीठपूजां कुर्यात्। तत्र मूर्त्यावाहनं कृत्वा बिम्बे पुष्पैस्तानि सर्वाणि तत्वानि सृष्टिक्रमेण पृथगावाह्य[1] तत्तत्तत्त्वमनुना व्यापय्य तत्तत्तत्वमन्त्रेण पुष्पाञ्जलिं कुर्यात्। अखिलतत्वहृत्पुण्डरीक-मण्डलत्रयपञ्चतत्वानि न्यस्य विष्णुदुर्गाशङ्करनारायणेषु कोपतत्वेन, स्कन्दे-क्षेत्रज्ञतत्त्वेन च व्यापकं कुर्यात्। व्यष्टिसमष्ट्यात्मकैः पञ्चमन्त्रैः लिङ्गदेहं सूक्ष्मदेहं च परिकल्प्य आवाह्य व्यापय्य मन्त्रावाहनं कुर्यात्। तारोपचारसहितेन मूलेनावाह्य मुद्राः प्रदर्श्य मूलेन व्याप्य षडध्वन्यासं कुर्यात्। अन्ते अखिलेषु देवेषु निजमूलमन्त्रोक्तान्, अष्टाक्षरे दशाङ्गादीन्, षडक्षरे गोलकन्यासादींश्च समाचरेत्। येन येन मन्त्रेण मनुबिम्बे देवपूजनं कृतं तेन तेन मन्त्रेण तस्योत्तरभागे कल्पितमण्डले तं देवं यजेत्। विष्णौ- चक्राब्जे, दुर्गायां- शक्तिदण्डे भद्रके, अन्येषु केवलभद्रके, सेनान्यां प्रागुक्तप्रत्यग्भागगतषड्दलमण्डले च तं तं देवं यजेत्।

**तत्र चक्राब्जपूजा**- तत्र पूजापटलोक्तक्रमेण अनन्तान्तं वैष्णवं पीठमभ्यर्च्य तन्मण्डलं कालचक्रं परिकल्प्य चक्राम्भोजे प्रागाद्येषु नेमिषु भं नमः पराय प्राणात्मने नमः इत्यादीनि कं नमः पराय पृथिव्यात्मने नमः इत्यन्तानि चतुर्विंशतितत्वानि अन्तर्बाह्यक्रमेण- पूर्वमन्तर्गतप्राड्नेम्यां पुनर्दक्षिणगतबहिर्नेम्यां, पुनर्दक्षिणगतान्तर्नेम्यां, पुनस्तदन्तर्गतबहिर्नेम्यामिति क्रमेण यजेत्। पुनरराणां

---

**1 अनेन आवाहनरीतिः प्रदर्शिता भवति। पुष्पाञ्जलिना आवाहनमुद्रया स्वहृदयस्थचैतन्यस्य सुषुम्नामार्गेण बिम्बादौ स्थापनमावाहनं, आवाहितस्यापनयनमुद्वासनम्। तदपि पुष्पाञ्जलिनैव। तदुक्तं- देवं सुषुम्नामार्गेण आनीय ब्रह्मरन्ध्रकं। वामनासापुटे ध्यात्वा नितान्तं स्वाञ्जलिस्थितं। पुष्पमारोप्य तत् पुष्पं प्रतिमादौ निधापयेदिति। संहारमुद्रया देवं संहरेत् हृदये निजे इति।**

मध्ये विगतनपुंसकद्वादशस्वरयुतेन हं वीजेन हं हां इत्यादिभिः मेषादिराशिसहितैरात्मने इत्यन्तैः पूजयेत्। तद्यथा हं नमः पराय सूर्याय मेषात्मने धात्रे नमः, हां नमः पराय सूर्याय वृषभात्मने अर्यम्णे नमः इत्यादि धात्रर्यममित्रवरुणांशुभगविवस्वदिन्द्रपूषपर्जन्यत्वष्टृविष्णवः द्वादशमूर्तय योज्याः। तत्र अरे अरे च उभयोः पार्श्वयोः अधोभागमारभ्याग्रभागपर्यन्तं अकाराद्यनुस्वारपर्यन्तस्थपञ्चदशस्वरसहितेन सं बीजेनानुक्रमेण शुक्लप्रतिपदादिकं, अग्राद्यधोभागपर्यन्तं विसर्गाद्याकारान्तपञ्चदशस्वरैः व्युत्क्रमस्थितैः सहितेन सं बीजेन कृष्णप्रतिपदादिकं च न्यसेत्। यथा- सं नमः पराय सोमाय शुक्लप्रतिपदात्मने नमः सां नमःपराय शुक्लद्वितीयात्मने इत्यादि पुनः सः नमः पराय सोमाय कृष्णप्रतिपदात्मने नमः इत्यादि च। अरमध्येषु अकारान्वितसंबीजेन अमाकलात्मशब्दयुक्तेन न्यसेत्। यथा सं नमः पराय सोमाय अमाकलात्मने नमः इति। पुनः नाभित्रये- अं नमःपराय प्रातः सवनात्मने नमः, उं नमः पराय माध्यंदिनसवनात्मने नमः, मं नमः पराय तृतीयसवनात्मने नमः इति सम्पूज्य चक्रस्याक्षप्रदेशे कोपतत्त्वं सम्पूज्य पुनश्चक्रे पद्मादिकं पीठमन्त्रशेषं सम्पूज्य तत्कर्णिकायां जीवतत्त्वं प्रपूज्य मूलेन देवमावाह्य यजेत् सकलीकृताय तस्मै अर्घ्यादि दत्वा अङ्गावरणान्तं सम्पूज्य तत्परितः अरस्थिता द्वादशविष्ण्वादिका मूर्तीः द्वादशाक्षरबीजैः सह यजेत्। विष्ण्वादि गोविन्दान्ता द्वादश मूर्तयः। पुनः गरुडादि शेषावृतिं यथोक्तं परिपूज्य निवेदनं प्रसन्नपूजां च विदध्यात्। इति चक्रिणि चक्राब्जपूजा।

**पीठनपुंसकशिलाधिवासः**- तस्यामेव रात्र्यां नपुंसकशिलायुतं पीठं कृतजलाधिवासावसानसंस्कारं गन्धजलाभिपूर्णकलशै र्बिम्बोक्तक्रमेण[1] सिक्त्वा अन्यस्मिन्शयने न्यस्य भूषणादिभिर्भूषयेत्। पीठादेः गुरुत्वे तु गर्भालये यथा स्वस्थाने स्थिरा भवति तथा तक्ष्णा स्थापयित्वा जलाधिवासं समुद्दिश्य कटाहस्थे जले वरुणमभिवाह्य सम्पूज्य तज्जलेन सिञ्चेत्। ह्लां हुं फट् इति स्वगुणसंख्यया प्राणायामं ह्लां नमः इति व्यापनं च कुर्वन् पञ्चभूतानि परमात्मति संविलाप्य

1 गन्धजलेन नवकं पञ्चकं वा पूर्वेद्युः साधनीयम्। पञ्चगव्यैर्वा पञ्चकं, बिम्बशुद्धिकलशोक्तद्रव्यैरेकं वा कलशं साधयेत्। वैष्णवे तु व्यस्तैर्गव्यैः, समस्तेन, कषायेण, आमलकोदकेन, दिग्विदिक्कलशैः, मध्ये स्वर्णोदकपूर्णकलशेनेति विशेषः। तथा ब्रह्मशिलार्थमपि गन्धजलेन, पञ्चगव्येन वा एककं पञ्चकं वा साधयेत्। पीठार्थकलशे पीठशक्त्या पूजनं ब्रह्मशिलार्थकलशे प्रणवेन ब्रह्मावाहनमित्यर्थः।

शोषणदाहनप्लावनकाठिन्यमुपर्गीकरणानि च कृत्वा पृथिव्यन्तानि भूतानि सृष्ट्वा लिपिन्यासं कुर्यात्। लिपिन्यासे मध्ये तारं तत्परितः षोडशस्वरान् तद्बहिःपर्जन्यकोष्ठमारभ्य द्वात्रिंशद्व्यञ्जनानि मध्ये हळक्षाक्षराणि च न्यसेत्। तत्पीठशक्तिबीजेन कृतप्राणायामेन मन्त्रदेवतात्मकत्वं सम्पाद्य पीठमन्त्रान् स्वस्वस्थाने न्यसेत्। तत्र तत्तत्पीठपूजां कुर्यात्। अस्मिन्पीठे शक्तिबीजेन शक्तिमावाह्य स्वस्वशक्त्यङ्गैः सकलीकृत्य स्वशक्तिबीजेनार्चयेत्[1]। नपुंसकशिलाया भूतशुद्ध्यादि कृत्वा तारेणावाह्य तेन पूजयेत्। उभयोरपि निवेद्यकाले अर्घ्यं दत्वा प्रसन्नपूजां च विधाय नव्येन पटद्वयेनाच्छाद्य उक्तप्रकारेणाधिवास्य रक्षेत्। अथ[2] तत्त्वहोमं च कूर्यात्। तत्सम्पातं मन्त्रबिम्बे समर्प्य तत्त्वमन्त्रन्यासं कुर्यात्।

**शिवे प्रतिष्ठाहोमः**- शिवेऽधिवासहोमात्प्राक् आज्यमधुदुग्धाक्तान् पलाशोदुम्बराश्वत्थसमिधः तिलांश्च चतसृभिः व्याहृतिभिः क्रमादष्टोत्तरसहस्रं जुहुयात्। स्वपीठमन्त्रैः, मूलेन, शर्वाद्यष्टभिः, सकलैः स्वावरणमन्त्रैः घृतेन जुहुयात्। अथ सर्वेषु अधिवासहोमान् कुर्यात्[3]। **शांतिहोमः**[4]- महेशे- मृत्युञ्जयमन्त्रेण दधिमध्वाज्यानि अष्टोत्तरशतं जुहुयात्। गणेशे- "गणानान्त्वे"ति ऋचा मधुघृतक्षीराणि अष्टोत्तरशतं जुहुयात्। शेषेषु भूराद्यैश्चतुर्भिः क्रमात् घृतं दधि पयः मधु च अष्टशः, मूलेन सर्वद्रव्याणि च जुहुयात्। गुहे-भूरादिभिः क्रमेण पयो दधि मधु आज्यं चाष्टशः जुहुयात्। अयं शान्तिहोमः गुरुमूर्तिपैः सर्वैः गुरुणैव वा होतव्यः। पञ्चद्रव्यसम्भवं सम्पातं पादनाभिहृदयशिरस्सु सकलाङ्गेषु च स्रुवेण समर्पयेत्। चतुर्द्रव्योद्भवं पादगुह्यहृदयमुखेषु, द्रव्यत्रयोद्भवं आधारहृदभ्रूमध्येषु च पृथगर्पयेत्। पृथक्स्रुवं च क्षालयेत्।

**पीठाधिवासनपुंसकशिलाधिवासहोमः**- पीठाद्यधिवासार्थं सर्वेषु देवेषु

---

1 विष्णौ श्रीं बीजेन इतरत्र ह्रीं बीजेनेत्यर्थः। 2 पूजामन्त्रहोमान्तेसंहारक्रमेण सकलतत्वमन्त्रैः सकृत्सकृदाज्यं हुत्वा तत्सम्पातं मन्त्रबिम्बे संयोज्य पुनः सृष्टिक्रमेण अखिलतत्वमन्त्रैः प्रत्येकं अष्टोत्तरशतं अष्टाविंशतिकं अष्ट वा हुत्वा हृत्पुण्डरीकादिभिः। पञ्चतत्वैः हुत्वा शिवे- पञ्चतत्वे उद्घातवृत्या शान्त्यतीतादीनां क्रमेण पञ्चविंशति, पञ्चाशत् पञ्चसप्तति शतं, पञ्चविंशत्युत्तरशतसंख्याकं हुत्वा विष्ण्वादौ कोपतत्वेन, स्कन्दे क्षेत्रज्ञतत्वेन च जुहुयात्। अत्र ओं नमः पराय जीवात्मने नमः स्वाहा इत्यादि नत्यन्ते स्वाहाकारयोग इति विवरणे। 3 अधिवासहोमाः पूर्वमुक्ताः।

स्वस्वशक्तिबीजेन, शिवे- औमेयाष्टाक्षरेण[1] वा घृतमष्टोत्तरशतादि हुत्वा तत्सम्पातं पीठे समर्प्य प्रणवेन घृतमष्टशतादिसंख्यं हुत्वा तत्सम्पातं नपुंसकशिलायां समर्प्य तद्द्वयमधिवासयेत्। **रत्नन्यासहोमः**- पुनराचार्यः अत्रैवाग्नौ अग्न्यन्तरे[2] वा स्वस्वपक्वहोमार्थमुक्तेन मन्त्रेणाष्टशतादिसंख्यं घृतं जुहुयात्। **शक्तिहोमः**- तथाष्टबन्धकरणे स्वस्वनवशक्तिमन्त्रैराज्यं जुहुयात्। तत्सम्पातद्वयं रक्षेत्। गुहे- गायत्र्या आज्यहोमान्ते ब्रह्मणे स्वाहा, सोमाय, वसुभ्यः, रुद्रेभ्यः, रत्नेभ्यः, बीजेभ्यः, लोहेभ्यः, धातुभ्यः, ओषधिभ्यः एकैकामाहुतिं जुहुयात्। एवं सर्वत्र होमानन्तरं स्विष्टकृदादि कृत्वा देवं प्रसाद्य अन्ते ते सर्वे परिसमूहनपर्युक्षणपूर्विकाः क्रियाः कुर्युः।

**गोदोहनं कुर्यात्**- विष्णौ- मण्डपबाह्ये दक्षिणस्यां दिशि गङ्गां यमुनां गोदावरीं सरस्वतीं च धेनू आस्थाप्य नामभिः गङ्गायै नमः इत्यादिभिरिष्ट्वा गायत्र्या दुहेत्। दुर्गायामप्येवं संस्थाप्य सम्पूज्य प्रणवेन दुहेत्। विष्णुदुर्गयोराचार्यकुण्डस्थाग्नौ दोहनोक्तमन्त्रेण पायसं पाचयेत्। बिम्बे मण्डले च गायत्र्या विष्णुं, प्रणवेन च दुर्गां चेष्ट्वा हविषोऽर्धं निवेदयेत्। तदर्धेन च पूजाहोमं कृत्वा मण्डपोदग्भागे विप्रान् दक्षिणादानसहितं भोजयेत्[3]। पुनरनयोर्विष्णुदुर्गयोर्मम्डपस्य बहिर्दिक्षु आद्यश्चेति मन्त्रेण, विदिक्षु वृक्षेष्विति मन्त्रेण, पुनः पूर्वाद्यष्टदिक्षु विनायका इति मन्त्रेण च तदंशेन बलिं हरेत्। "आद्याश्च कर्मजाश्चैव ये भूताःप्राग्दिशि स्थिताः। प्रसन्नाः परितुष्टास्ते प्रतिगृह्णन्त्विमं बलिं" अन्यासु दिक्षु प्राग्दिशीति स्थाने दक्षिणे, पश्चिमे, उत्तरे इति पदं योजयेत्। "वृक्षेषु पर्वताग्रेषु ये विदिक्षु च संस्थिताः। भूमौ व्योम्नि स्थिता ये च तेऽपि गृह्णन्त्विमं बलिम्। " "विनायकाः क्षेत्रपाला ये चान्ये बलिकांक्षिणः। पूर्वाद्याः पार्षदाः सर्वे तेऽपि गृह्णन्त्विमं बलिम्" इति। अन्येषु देवेषु- बिम्बे मण्डले च मूलेन देवमिष्ट्वा सामान्यक्षीरे सामान्याग्नौ श्रपितं पायसं निवेद्य स्वाग्नौ हुत्वा विप्रानपि सम्भोज्य वक्ष्यमाणक्रमेण बलिं कुर्यात्। देवं रुद्रं पुरस्कृत्य इमं बलिं प्रतिगृह्णन्तु सर्वभूतानि पैशाचान्तं यजामहे इति। महेशे- एकैनैव प्रदक्षिणेनाष्टदिक्षु बलिं किरेत्। अन्यदेवेषु रुद्रपदस्थाने

1 अधिवासहोम एव स्विष्टकृतः प्राकुर्यादिति शङ्करः। 2 ओं ह्रीं ऐं क्लीं हसौः प्रों हं सः इत्यौमेयाष्टाक्षरो मन्त्रः। 3 अग्न्यन्तरे होमे द्रव्यचतुष्टयहोमोऽपि कार्यः। 4 शिवे- एकादश, विष्णौ- द्वादश, दुर्गायां- नव, स्कन्दे- द्वादश षट् वा, हरिहरे- द्वादश, विघ्नार्ययोरष्टौ च विप्रा भोज्याः।

तत्तद्देवतापदं योजयेत्। स्कन्दे तु- "इमं स्कन्दं पुरस्कृत्य ये देवा ये च राक्षसाः। ये भूता येऽसुराः सर्वे पिशाचाः किन्नरास्तथा। गन्धर्वाः पन्नगा नागाः ऋषयश्च खगा अपि। यक्षाश्च मातरः सर्वे चारका परमात्मनः। ते सर्वे प्रतिगृह्णन्तु तेभ्यस्ताभ्यो नमो नमः" इति मन्त्रेणाष्टदिक्षु बलिं विकिरेत्। सर्वदेवेषु बलिदानानन्तरं आचम्य अन्तः प्रविश्य नैवेद्यविसर्जनाद्यं निर्वर्त्य प्रसन्नपूजां विधाय स्वीयान् मन्त्रान् प्रजप्य रक्षां कुर्यात्। रत्नन्यासद्रव्यगणं देवस्य शयने एव विधाय वाय्वादिबीजैः शोषणादिकं कृत्वा विशोध्य स्वस्वरत्नहोमोपदिष्टमन्त्रेण प्रणवेन वा, सम्पूज्याधिवास्य रक्षेत्। मण्डपस्य समन्तात् इतिहासपुराणादिभिर्महोत्सवमाघोष्य देवलग्नचित्तः जाग्रद्रात्रिं नयेत्। एवमधिवासपरदिने उषसः पूर्वमेवोत्थाय स्नानादि कृत्वा पूर्वेद्युः पीठाधिवासानन्तरं भूतसंहारादिभिः शोषणादिभिश्च संशोध्य भूतानि सृष्ट्वा मन्त्रन्यासादिभिः सकलीकृत्य सम्पूज्य सम्पातशेषं समर्प्य वस्त्रेणाच्छाद्याधिवासितं प्रासादं सम्प्रति सृष्ट्यादिभिः संशोध्य प्रासादरूपिणं पुरुषं विभूष्य[1] पूजां कुर्यात्। ईश्वरे पूर्वं मनुलिङ्गे मण्डले चार्चयित्वा दधिमधुघृतमिश्रं पायसं निवेद्य परितः पूर्वाद्यष्टदिक्षु क्रमात् बलिं सम्प्रदाय देवदेवं प्रसाद्य प्रसन्नपूजानन्तरं प्रासादस्थापनादिकं कुर्यात्। "देवभूतपिशाचाश्च गन्धर्वा यक्षसंज्ञकाः। पिशिताशाश्च नागाश्च कांक्षन्ते मातरोबलिम्।" देवग्रहेभ्यो नमः, भूतग्रहेभ्यो इत्यादयो वा मन्त्रा उन्नेयाः।

**रत्नन्यासः**- ईशे- नववसनधृक् गर्भगेहोपविष्टः गुरुगणपतिवन्दनसकलीकरणशङ्खपूरणानन्तरं कृतात्माराधनः गुरून् गणपतिं च सम्पूज्य नान्दीमुखं कृत्वा रत्नाष्टबन्धाः प्रीयन्तामिति विशेषयुक्तं पुण्याहं विधाय नपुंसकशिलाया अधो भागे पीठपूजां कृत्वा ततः नपुंसकशिलां प्रणवेनेष्ट्वा रत्नपीठबिम्बादेराधारभूतां नपुंसकशिलां ध्यायन् प्रणवेन न्यस्य "त्वमेव परमा शक्तिस्त्वमेवासनधारिका। देवाज्ञया त्वया देवि स्थातव्यमिह सर्वदा।" "स्थितं चराचरं यस्यां रत्नानां निधिरव्ययः। सा त्वं ब्रह्मशिलारूपा तिष्ठात्र धरणी स्थिरा।" इति मन्त्राभ्यां प्रार्थयेत्। प्रथममन्त्रेण प्रार्थ्य द्वितीयमन्त्रेण स्थापयेत्। स्थापितां पुनः त्वमेव परमा इति मन्त्रेण प्रार्थयेद्वा[2]। अथ नपुंसकशिलागतगर्तान् मूलेन गव्यैर्गन्धजलैश्च शोधयेत्। तत्र नपुंसकाश्मनि परितोऽष्टदिक्षु द्रव्यसङ्ख्यावरणक्रमात् गर्तान्, मध्ये अपरं गर्तं प्रविधाय

1 ईशे- प्रासादमन्त्रेण इतरेषु मूलेन पूजयेत्। 2 यदा ब्रह्मशिलापीठयोर्मण्डपेऽधिवासनं तदा स्वशय्योद्वासनार्घ्यदानादिपूर्वकमानीय गर्भगृहे निधाय सर्वं कार्यम्।

होमसिद्धसम्पातोज्वलं यथा भवति तथा द्रव्याणि निदध्यात्। ईशे- रत्न, धातु, बीजानि, वृषसहितास्त्रसमूहांश्च लोहांश्च न्यसेदन्तरन्तः क्रमेण। तद्यथा- अष्टाभिःसद्योजातकलाभिः[1] पूर्वाद्यष्टदिक्षु वज्रं, मौक्तिकं, पुष्यरागं, इन्द्रनीलं, स्फटिकं, वैडूर्यं, मरकतं, नीलरत्नं, मध्ये सद्योजातमन्त्रेण पद्मरागं च न्यसेत्। तदन्तः वामदेवकलाभिः, वामदेवेन च मनश्शिलां हरितालं सौराष्ट्रिकां विद्रुमं गोरोचनां प्रवालं अञ्जनं माक्षिकं रसं पूर्वाद्यष्टदिक्षु मध्ये च न्यसेत्। अघोरकलाभिः अघोरमन्त्रेण च व्रीहिं, यवं, गोधूमं, प्रियङ्गुं, माषं, तिलं, नीवारं, निष्पावं, सर्षपञ्च अष्टदिक्षु मध्ये च क्रमात् न्यसेत्। तत्पुरुषकलाभिश्चतसृभिः दिक्षु वृषं, परशुं, रुद्राक्षवलयं, त्रिशूलं च, मध्ये तत्पुरुषमन्त्रेण सुवर्णकमलं च न्यसेत्। विदिक्षु ईशानकलाभिः रजतं, अयः, त्रपु, ताम्रं, ईशानमन्त्रेण मध्ये सुवर्णं च न्यसेत्। तद्द्रव्यमणिमाद्यष्टैश्वर्यात्मकं भावयित्वा सम्पातलिप्तदोष्णा रत्नन्यासहोममन्त्रेणाभिमृश्य प्रणवेनेष्ट्वा पूजितायां नपुंसकशिलायां पीठपूजां कृत्वा यन्त्रोपरि स्थिते पीठे स्वपीठीयशक्तिं सङ्कल्प्यावाह्य शक्तिपुठितपञ्चतत्त्वैः संस्थाप्य ध्रुवाद्यौरित्यभिमृश्य सम्पूज्य अस्त्रतालत्रयादिना रक्षेत्।[2]

**विष्णौ** - मूलतः गन्धजलमार्जनानन्तरं नपुंसकाश्मनि गर्तान् विधाय मूलाक्षरैर्मूलेन च यवं, व्रीहिं, निष्पावं, प्रियङ्गुं, तिलं, माषं, नीवारं, शालिं, सर्षपं च दिक्षु मध्ये च न्यसेत्। तदन्तः पूर्वादीशान्तं मध्ये च मूलाक्षरैः मूलेन च वज्रं, मौक्तिकं, वैडूर्यं, शङ्खं, स्फटिकं, पुष्यरागं, चन्द्रकान्तं, महानीलं, पद्मरागं च न्यसेत्। तदन्तः दिक्षु मूलाक्षरैः मनश्शिलां, हरितालं, अञ्जनं, श्यामं, सीसं, सौराष्ट्रीं, गोरोचनां, गैरिकां, मध्ये मूलेन पारदं च न्यसेत्। तदन्तः दिक्षु सुवर्णं, रजतं, ताम्रं, अयः, त्रपु, सीसं, सुवर्णकृतं कूर्मं, शङ्खं च न्यस्य मध्ये सुवर्णपद्मं च न्यसेत्। दुर्गायां- दिक्षु त्रिष्टुभा, मध्ये मूलेन च न्यसेत्। यवं, व्रीहिं, निष्पावं, प्रियङ्गुं, तिलं, माषं, नीवारं, शालिं, सर्षपं च दिक्षु मध्ये च न्यसेत्। तदन्तः वज्रं, मौक्तिकं, वैडूर्यं, शङ्खं, स्फटिकं, पुष्यरागं, चन्द्रकान्तं, महानीलं, पद्मरागं च दिक्षु मध्ये च न्यसेत्। तदन्तर्दिक्षु पुलकं विद्रुमं अञ्जनं श्यामं सीसं मनश्शिलां हरिताळं गैरिकां मध्ये रसं च न्यसेत्। तदन्तः दिक्षु सुवर्णं

---

1 षडध्वन्यासे कला उक्ताः। 2 उक्तबीजरत्नलोहाभावे सर्वबीजस्थाने शालिं, सर्वरत्नस्थाने मुक्तां, सर्वधातुस्थाने हरितालं, सर्वलोहस्थाने सुवर्णं च न्यसेदित्युक्तमाकरे- बीजादीनामलाभेऽपि तत्स्थानेषु यथाक्रमम्। शालिमुक्ताहरीतालसुवर्णानि न्यसेद्बुधः इति।

रजतं ताम्रं अयः त्रपु सीसं गरुडशिलां आरकूटं मध्ये शङ्खं चक्रं इषुं चापं असिं शूलं पाशं दण्डं च न्यसेत्। गणेशे- सर्वद्रव्याणि क्रमेण तारेण सङ्गृह्य मूलेन न्यसेत्। तत्र पूर्वादिदिक्षु मध्ये च वज्रं मौक्तिकं वैडूर्यं शङ्खं स्फटिकं पुष्यरागं चन्द्रकान्तं महानीलं पद्मरागं च न्यसेत्। तदन्तः यवं व्रीहिं निष्पावं प्रियङ्गुं श्यामाकं माषं नीवारं शालिं सर्षपं च न्यसेत्। तदन्तः दिक्षु मध्ये च मनश्शिलां हरिताळं अञ्जनं श्यामं सीसं सौराष्ट्रीं गोरोचनां गैरिकं पारदं च न्यसेत्। तदन्तः ताभ्यामेव प्रणवमूलाभ्यां दिक्षु सुवर्णं रजतं ताम्रं अयः त्रपु आरकूटं पित्तलं कांस्यं च मध्ये हैमं स्वदन्तं कूर्मं मूषिकं पद्मं च न्यसेत्।

**शास्तरि**- मूलेन बीजरत्नधातुलोहानि न्यसेत्। यवं व्रीहिं निष्पावं प्रियङ्गुं तिलं माषं नीवारं वैणवं चाष्टदिक्षु, मध्ये सर्वाणि बीजानि न्यसेत्। तदन्तः दिक्षु मध्ये च वज्रं मौक्तिकं वैडूर्यं शङ्खं स्फटिकं पुष्यरागं चन्द्रकान्वं महानीलं पद्मरागं च न्यसेत्। तदन्तः दिक्षु मध्ये च पुलकं विद्रुमं अञ्जनं श्यामं सीसं मनश्शिलां हरितालं गैरिकं रसं च न्यसेत्। तदन्तः दिक्षु मध्ये च सुवर्णं रजतं ताम्रं अयः त्रपु सीसं आरकूटं कांस्यं स्वर्णं च न्यसेत्। हरिहरे- रत्नान्येव न्यसेत्। तारेण दिक्षु इन्द्रनीलं माणिक्यं गरुडशिलां वैडूर्यं मौक्तिकं विद्रुमं वज्रम् पुष्यरागं न्यस्य मध्ये सुवर्णं न्यसेत्।

**सेनान्यां**- रत्नधातुलोहवीजास्त्राणि मूलेनैवान्तरन्तःक्रमात् न्यसेत्। पूर्वादिदिक्षु मध्ये च क्रमेण वज्रं वैडूर्यं इन्द्रनीलं शङ्खं स्फटिकं पुष्यरागं मौक्तिकं विद्रुमं पद्मरागं च न्यसेत्।तदन्तः दिक्षु मध्ये च मनश्शिलां हरितालं अञ्जनं श्यामं सौराष्ट्रीं गोरोचनां माक्षिकं गैरिकं रसं च न्यसेत्। तदन्तः दिक्षु स्वर्णं रजतं ताम्रं पित्तलं त्रपु सीसं अयः कांस्यं मध्ये स्वर्णाद्यष्टलोहानि च न्यसेत्। तदन्तः पुनरष्टदिक्षु यवं गोधूमं माषं तिलं मुद्गं प्रियङ्गुं सर्षपं शालिं मध्ये च यवाद्यष्टवीजानि न्यसेत्। तदन्तःसुवर्णकृतं पद्मं गजं मयूरं शक्तिं वज्रं कुक्कुटं च न्यसेत्। एवं सर्वदेवेषु अणिमाद्यष्टैश्वर्यरूपं द्रव्यजातं भावयित्वा सम्पातलिप्तदोष्णा स्वस्वरत्नहोममन्त्रेण स्पृशन् जप्त्वा प्रणवेनेष्ट्वा एवम्भूताया नपुंसकशिलाया उपरि पीठमन्त्रानुच्चार्य शक्तिपुटितपञ्चतत्वैः पीठं न्यसेत्। पुनः स्वशक्तिबीजेन पुष्पार्पणेन शक्तिमावाह्य पूर्ववत् लिपिपीठमन्त्रान् यथाशक्ति बीजं तदङ्गानि च न्यस्य ध्रुवाद्यौरिति सञ्जप्य बिम्बप्रतिष्ठापनार्थं पीठं परिपूज्य स्वशक्तिबीजेनार्चितं वस्त्रेण परिवृतं पीठं अस्त्रत्रितालादिना रक्षेत्। **विष्णौ परिहोमाः**- विष्णौ-

रत्नन्यासानन्तरं प्रासादस्य परितोऽष्टदिक्षु कृतस्थण्डिलेषु वैष्णवाग्निमाधाय कलशपूजासहितं अग्निमुखं कृत्वा मूलेनाष्टशतं पलाशसमिधो जुहुयुः[1]। गायत्र्याऽष्टोत्तरशतं घृतं च जुहुयुः। एवं परिहोममिद्धसम्पातघटैरष्टाक्षरवर्णैः क्रमात् अन्यस्मिन् ताम्रमये कुम्भे परिपूर्य तस्मिन्नेकीभूतचितिं मूलेन मङ्कल्प्यावाह्य प्रार्च्य नवांशुकेन संवेष्ट्य वामकरे स्थितं दक्षिणकरेणाच्छादितं तं कलशं मण्डपान्तर्नीत्वा क्वचित्स्थापयेत्। तत्र बिम्बे पीठं परिपूज्य मूलेनावाह्य सकलीकरणं कृत्वा अर्घ्यादि दत्वा स्नपनकाले परिहोमसिद्धकलशेन प्रणवेन सिञ्चेत्[2]। अथ सर्वेषु. देवेषु बिम्बं स्वस्वविद्येशकलशैः स्वस्वविद्येशमन्त्रैः समुक्ष्य संस्नाप्य वा अंशुकाद्यैः परिभूष्य उपहारैः सम्पूजयेत्। ततो निवेद्य मण्डले वह्नौ च प्रसूनाञ्जलिं विधाय प्रीणयित्वा तयोः स्थितं देवं प्रसाद्य तोरणध्वजद्वारकलशादिषु स्थितं कुण्डस्थं मण्डलस्थं च चैतन्यं बिम्बे समुद्वासयेत्। अथ कुम्भेशनिद्राघटयोः पुष्पाञ्जलिं विधाय कुम्भेशनिद्राघटस्थितपीठशक्तिं तयोः समुद्वास्य लयाङ्गं कृत्वा नीराज्य मूर्तिपाभ्यां तौ धारयित्वा अपरैर्द्विजैः घृतादिपात्राणि विम्बस्य परितः स्थापितानि द्रव्याण्यपि धारयित्वा ततो मङ्गलाङकुरगतां, शय्यागतां च शक्तिं विम्बे विलाप्य नीराज्य अर्घ्यं प्रदाय उत्तिष्ठमन्त्रं जपन् प्रतिमां शयनादुत्थाप्य "रथे तिष्ठन्" इति मन्त्रं जपन् गुरुः ब्राह्मणैः कल्पिते रथादिके याने निधाय तस्मात् मण्डपाद्विनिर्गत्य शङ्खादिसर्वविधवाद्यैः सह कनिक्रदादि, प्रदक्षिणिदादि द्वे सूक्ते स्वस्तिनोमिमीतामिति सूक्तं तथा अतो देवेत्यादि निजसूक्तं[3] च परिजपन् प्रदक्षिणगतिर्भूत्वा प्रतिमां गर्भगृहं नयेत्। तत्रायं क्रमः- अग्रतो नीराजनं ततःकरकधारा पुनरर्घ्यं वहन् देशिकः[4] ततो विम्बं ततो निद्राघटः तस्य पृष्ठतः कुम्भेशः[5] ततो यजमान इति। द्वारि स्वस्वोपचारमन्त्रेणार्घ्यं दत्वा पीठसमीपं नीत्वा[6] पीठस्य पृष्ठभागे भद्रपीठे विन्यस्य बिम्बं तत्पीठं च करकधारया त्रिः परिषिञ्चेत्। गुरुस्तत्रोपविश्य स्वस्य सकलीकरणाद्यात्माराधनान्तं कर्म कृत्वा गुरून् गणपतिं च यथाविधि सम्पूज्य सुवर्णगोभूम्यादिदानैर्विप्रान् सन्तर्प्य

1 प्रायश्चित्तहोमवत् समिद्भेदो वा ग्राह्यः। पलाशखदिराश्वत्थप्लक्षन्यग्रोधबिल्वजाः। औदुम्बराः सकार्ष्मर्यः सर्वाः पालाश्य एव वा। 2 सति सम्भवे हरिहरादिष्वपि परिहोम इष्यते। "परिहोमेषु मूलेन गायत्र्या च सकृद्घृतम्" इत्यादिः, तथा स्कन्दे- बहुबेरविधौ वक्ष्यति- अभितः प्रासादमष्टासु दिक्षु इति। 3 शिवे- पञ्चब्रह्माणि, हरीशे- उभयमपि. तथा अन्यदेवेष्वपि ऊह्यम्। 4 बिम्बं स्पृशन्। 5 स्कन्दे- ततः कौमारकलशः। कलशप्रकरणे बिम्बस्थाने कुम्भः। 6 पादपूर्वकं द्वारशाखाद्यस्पर्शेनेति, बिम्बोद्धारे शिरः- पूर्वकम्।

मौहूर्तिकोक्तसुलग्ने परावाहनेन,[1] अवस्थावाहनेन, मूलमन्त्रावाहनेन, लिपिन्यासेन, तत्त्वन्यासेन, षडध्वादिन्यासेन, मूलमन्त्रस्योक्तविशेषन्यासैश्च पूजितं, तारोपचारमूलतदक्षराङ्गभूषणादिभिः विग्रहपूजया सुमहितं, पञ्चोपचारैः पूजितं बिम्बं विराड्रूपं ध्यात्वा आकाशात्मकं च ध्यात्वा शक्तिबीजावाहनपूजितं पीठं प्रकृतिरूपं पृथिवीरूपं च ध्यात्वा तदुभयं स्वतेजसा अन्योन्यं मेलयित्वा तिष्ठन् आप्रलयं स्थीयमानं ध्यात्वा स्वयमग्रभागे स्थित्वा अस्त्रमन्त्रेण पीठवस्त्रं परित्यज्य उभयत्र नीराज्य तत्तद्देवस्योक्तप्रतिष्ठामन्त्रं जपन् आयतनस्योपरि त्रिपरिभ्रमणं कृत्वा दोर्भ्यां गृहीतं मनुबिम्बं स्वपीठे नपुंसकशिलाकलितावज्जनालं न्यसेत्। त्रिवारं प्रणवोपचारमूलमन्त्राः पृथिव्यन्ताखिलतत्वमन्त्राः प्रतिष्ठामन्त्रः (यज्ञायज्ञादिः) , मूलपुटितपञ्चतत्त्वानि मूलमन्त्रः प्रणवश्च त्रिवारं इति क्रमः। मूलमन्त्रस्य तारादिबीजानि, ततः सृष्टिक्रमेण निजनिजपञ्चतत्वानि अनन्तरं चतुर्थ्येकवचनान्ताः स्वस्वमूर्तयः, ततः आत्मने इत्यन्ताः प्रणवस्यांशाः शान्तशक्तिनादबिन्दुबीजशब्दाः, ततः तुरीयातीततुरीयसुषुप्तिस्व-प्रजाग्रत्पदैरुपलक्षिताः स्वरूपीतिचतुर्थ्यन्ताःबीजोपरिगतमूलमन्त्राः, नमोन्विताश्च अवस्थामन्त्रः। तथा च विष्णौ- ओं षों नमः पराय परमेष्ठ्यात्मने वासुदेवाय शान्तात्मने तुरीयातीतस्वरूपिणे नमो नारायणाय नमः। ओं यं नमः पराय पुरुषात्मने सङ्कर्षणाय शक्त्यात्मने तुरीयस्वरूपिणे नमो नारायणाय नमः इत्यादिः। शिवे- ओं हौं नमः शिवाय शान्त्यतीतात्मने ईशानाय शान्तात्मने तुरीयातीतस्वरूपिणे नमः शिवाय नमः इत्यादिः। एवं हरिहरादिष्वापि योज्यम्।[2]

1 मूलपुटितप्रणवत्रयेण। 2 अवस्थावाहनं- ओं हौं नमः शिवाय शान्त्यतीतात्मने ईशानाय शान्तात्मने तुरीयातीतस्वरूपिणे नमः। शिवाय नमः ओं ह्यैं नमः शिवाय शान्त्यात्मने तत्पुरुषाय शक्त्यात्मने तुरीयस्वरूपिणे नमः शिवाय नमः। ओं हूं नमः शिवाय विद्यात्मने अघोराय नादात्मने सुषुप्तिस्वरूपिणे नमः शिवाय नमः। ओं ह्रीं नमः शिवाय प्रतिष्ठात्मने वामदेवाय बिन्द्वात्मने स्वप्नस्वरूपिणे नमः शिवाय नमः। ओं ह्लां नमः शिवाय निवृत्यात्मने सद्योजाताय बीजात्मने जाग्रत्स्वरूपणे नमः शिवाय नमः इति शिवे। ओं षों नमः पराय परमेष्ठ्यात्मने वासुदेवाय शान्तात्मने तुरीयातीतस्वरूपिणे नमो नारायणाय नमः। ओं यं नमः पराय पुरुषात्मने सङ्कर्षणाय शक्त्यात्मने तुरीयस्वरूपिणे नमो नारायणाय नमः। ओं रां नमः पराय विश्वात्मने प्रद्युम्नाय नादात्मने सुषुप्तिस्वरूपिणे नमो नारायणाय नमः। ओं वं नमः पराय निवृत्त्यात्मने अनिरुद्धाय बिन्द्वात्मने स्वप्नस्वरूपिणे नमो नारायणाय नमः। ओं लां नमः पराय सर्वात्मने नारायणाय बीजात्मने जाग्रत्स्वरूपिणे नमो नारायणाय नमः इति विष्णौ । ओं ह्रं हों षों नमः पराय ईशानाय परमेष्ठ्यात्मने

[ईशानाय वासुदेवात्मने]शान्तात्मने तुरीयातीतस्वरूपिणे शिवनारायणाय नमो नमः। ओं ह्रं हों यं नमः पराय तत्पुरुषाय पुरुषात्मने [तत्पुरुषाय सङ्कर्षणात्मने] शक्त्यात्मने तुरीयस्वरुपिणे शिवनारायणाय नमो नमः। ओं ह्रं हुं रां नमः परायाघोराय विश्वात्मने [अघोराय प्रद्युम्नात्मने] नादात्मने सुषुप्तिस्वरूपिणे शिवनारायणाय नमो नमः।। ओं ह्रं हिं वं नमः पराय वामदेवाय निवृत्यात्मने [वामदेवायानिरुद्धात्मने] बीजात्मने जाग्रत्स्वरूपिणे शिवनारायणाय नमो नमः। इति शङ्करनारायणे।

ओं ह्रीं दुं षौं नमः परायै श्रेष्ठाशक्त्यात्मन्यै सें दुर्गायै शान्तात्मन्यै तुरीयातीतस्वरूपिण्यै दुर्गायै नमो नमः। ओं ह्रीं दुं यौं नमः परायै पौरुषीशक्त्यात्मन्यै दं आर्यायै शक्त्यात्मन्यै तुरीयस्वरूपिण्यै दुर्गायै नमो नमः। ओं ह्रीं दुं रौं नमः परायै विश्वरुपाशक्त्यात्मन्यै वें देव्यै नादात्मन्यै सुषुप्तिस्वरूपिण्यै दुर्गायै नमो नमः। ओं ह्रीं दुं वौं नमः परायै निवृत्तिनीशक्त्यात्मन्यै तं भगवत्यै बिन्द्वात्मन्यै स्वप्नस्वरूपिण्यै दुर्गायै नमो नमः। ओं ह्रीं दुं लौं नमः परायै सर्वरूपाशक्त्यात्मन्यै जां कन्यकायै बीजात्मन्यै जाग्रत्स्वरूपिण्यै दुर्गायै नमो नमः इति दुर्गायाम्।

स्कन्दे- ओं नं नमः पराय शान्त्यतीतात्मने षष्ठाय (षष्ठिने) शान्तात्मने तुरीयातीतस्वरूपिणे वचद्भुवे नमो नमः। ओं वें नमः पराय शान्त्यात्मने विशाखाय (विशिखाय) शक्त्यात्मने तुरीयस्वरूपिणे वचद्भुवे नमो नमः। ओं दभुं नमःपराय विद्यात्मने इन्द्राय नादात्मने सुषुप्तिस्वरूपिण्ये वचद्भुवे नमो नमः। ओं चं नमः पराय प्रतिष्ठात्मने स्कन्दाय बिन्द्वात्मने स्वप्नस्वरूपिणे वचदभुवे नमो नमः। ओं वं नमः पराय निवृत्त्यात्मने सनत्कुमाराय बीजात्मने जाग्रत्स्वरूपिणे वचद्भुवे नमो नमः।[1] इति स्कन्दे।

ओं गं गों नमः पराय शान्त्यतीतात्मने वरदाय शान्तात्मने तुरीयातीतस्वरूपिणे गणपतये नमो नमः। ओं गं गों नमः पराय शान्त्यात्मने शूराय शक्त्यात्मने तुरीयस्वरूपिणे गणपतये नमो नमः। ओं गं गुं नमः पराय विद्यात्मने वीराय नादात्मने सुषुप्तिस्वरूपिणे गणपतये नमो नमः। ओं गं गिं नमः पराय प्रतिष्ठात्मने विनायकाय बिन्द्वात्मने स्वप्नस्वरूपिणे गणपतये नमो नमः। ओं गं गं नमः पराय निवृत्त्यात्मने विघ्नाय बीजात्मने जाग्रत्स्वरूपिणे गणपतये नमो नमः। इति गणपतौ। शास्तरि- ओं घ्रूं घ्रों नमः पराय शान्त्यतीतात्मने दीप्त्रे शान्तात्मने तुरीयातीतस्वरूपिणे नमः पराय गोप्त्रे नमः। ओ घ्रूं घ्रें नमः पराय शान्त्यात्मने प्रभवे शक्त्यात्मने तुरीयस्वरूपिणे नमः पराय गोप्त्रे नमः। ओं घ्रूं घ्रुं नमः पराय विद्यात्मने गोप्त्रे नादात्मने सुषुप्तिस्वरूपिणे नमः पराय गोप्त्रे नमः। ओं घ्रूं घ्रिं नमःपराय प्रतिष्ठात्मने महाशास्त्रे बिन्द्वात्मने स्वप्नस्वरूपिणे नमः पराय

---

1 अत्र सनत्कुमारादीनां मूर्तीनां व्युत्क्रमपाठो विचारणीयः। शान्त्यतीतात्मने सनत्कुमाराय इति युक्तः पाठः। क्रियासारव्याख्यानुसारिप्रयोगोऽत्र उक्तः। एवमुत्तरत्र गणपतौ शास्तरि च मूर्तीनां व्युत्क्रमपाठो विचारणीयः।

**प्रतिष्ठामन्त्राः- शङ्करनारायणे**- "यज्ञायज्ञावः" इत्यादिः पुरुषसूक्तं च प्रतिष्ठामन्त्रः। विष्णौ- पुरुषसूक्तं त्रैलोक्यमन्त्रः। गायत्री द्वादशाक्षराष्टाक्षरपञ्चाक्षरादिः। षण्मुखे- प्रणवः ध्रुवाद्यौरिति च। दुर्गायां- गणपतौ- स्वबीजं गणानान्त्वा इति ऋक्। ईश्वरे- पञ्चब्रह्माणि। शास्तरि- गोप्तारमित्यादि, तारोपचारमूलाखिततत्वमुखः अणुरुद्धशरतत्वमूलध्रुवान्तः इत्यत्रापि योज्यः।

**शिवे**- यथोक्तन्यायेन सकलीकृतं यथोक्तप्रकारेण पूजितं च शिवलिङ्गं सद्योजातमन्त्रेणादाय वामदेवमन्त्रेण नपुंसकशिलायामास्थाप्य अघोरेण स्थिरीकृत्य निरोधमुद्रां च दर्शयित्वा पुरुषेण प्रणमन् सान्निध्यं प्रार्थ्य सान्निध्यमुद्रां दर्शयित्वा ईशानेन पुष्पाञ्जलिं कुर्यात् इति विशेषः। ओं त्रैलोक्यविक्रान्ताय त्रिविक्रमाय विष्णवे नमः इति त्रैलोक्यमन्त्रः। गोप्तारं विश्वगोप्तारं शास्तारं शाम्भवं प्रभुम्। अमेयमद्भुतं शान्तं स्थापयाम्यहमच्युतम् इति गोप्तृमन्त्रः। अथ बिम्बस्य नासिकाग्रे स्थापितं पीठस्य पुरोभागकोणद्वये स्थापितं सूत्रं लम्बसूत्रं तेन समं बिम्बं यथा भवति तथा वलनं परिहृत्य दोर्भ्यां बिम्बपदाम्बुजं पीठं च स्पृशन् " ध्रुवाद्यौ" रित्यादि जपन् निश्चलं कृत्वा अग्रतः स्थित्वा "विश्वतश्चक्षुरि"ति मन्त्रं पठेत्। शिवे तु-ब्रह्मग्राण्यि लिङ्गं स्थापयित्वा तत्रोङ्कारः, भुवनेश्वरीपञ्चतत्त्वानि आदौ, मध्ये औमेयाष्टाक्षरः, अन्ते वामदेवमन्त्रः, ध्रुवाद्यौरिति मन्त्रः प्रणवः एभिः पीठं स्थापयेत्। अथ स्वहृदयाम्बुजात् सद्योमन्त्रेण शिवमयं तेज आदाय वामदेवमन्त्रेण स्थापितलिङ्गे प्रसूनाञ्जलिं कुर्वन् योजयित्वा अघोरमन्त्रेण निरोधमुद्रामाकलयन् निरोधनं स्थिरीकरणं चाधाय तत्पुरुषेण सान्निध्यमुद्रया सन्निधिमाधाय ईशानमन्त्रेण समर्चयेत्। अथ सर्वेषु देवेषु प्रकृतिस्वरूपं पीठं स्वस्वशक्तिवीजेनेष्ट्वा पुरुषात्मकं बिम्बं मूलेनेष्ट्वा तेजसोरन्योन्यसङ्कलनस्य स्थिरतायै अष्टवन्धं कुर्यात्। पूर्वं नवशक्तिहोमसम्पादितं सम्पातं नवशक्तिभिः पूजितेऽष्टवन्धे सिक्त्वा हेम्ना सिकताभिः रत्नैश्च तन्नालरन्ध्रमापूर्य तत्रापि च सम्पातं सिक्त्वा शक्तिपुरुषात्मकौ पीठदेवौ वस्त्राद्यैः परिभूष्य प्रणवोपचारपीठमन्त्रपूजामन्त्रशक्तिमन्त्रमूलमन्त्रप्रणवैः पीठबिम्बसन्धौ निश्चलं यथा भवति तथा अष्टवन्धं कलयेत्। ध्रुवाद्यौरित्यादिमन्त्रैरभिमर्शनं स्थिरीकरणं

---

**गोप्त्रे नमः। ओं घ्रूं घ्रं नमः पराय निवृत्यात्मने रेवन्ताय बीजात्मने जाग्रत्स्वरूपिणे नमः पराय गोप्त्रे नमः। इति शास्तरि।**

च कृत्वा प्रणवेन पीठमूलादिविम्वाग्रान्तं, विम्वाग्रादि पीठमूलान्तं अभिव्याप्य प्रकृतिपुरुषयोरन्योन्यसङ्कलनं ध्यात्वा मूलमन्त्रेणावाहनं सकलीकरणं उपहारदानपुजां च कृत्वा पुनर्नीराज्य विम्बमूर्ध्नि हिरण्यं न्यस्य त्रितत्वमनुभिः घटेश्वरेणाभिषिच्य न्यासं कृत्वा पूजां विधाय नीराजनादिपुरः सरं अखिलतत्त्वमन्त्रैर्निद्राघटेनाभिषिच्य तत्तन्न्यसनमूलमन्त्रसम्बन्धिन्यासांश्च कृत्वा पूजयेत्। शिवे मधुक्षीरसुसम्भृताभ्यां घटाभ्यां[1] मूर्ध्नि नीराजयेत्। विष्णौ शय्यानिकटस्थापितसर्पिगदीन् मूर्धास्यहृदयगुह्यपादेषु पञ्चतत्त्वैर्दूर्वाङ्कुरैः समर्पयेत्। इतरेषु स्वस्वस्थाननिहितैरुपहारैः स्वस्वमन्त्रैः समर्पयेत्। द्वादशपटलसूचितजीवावाहनं,[2] प्राणन्यासादिकं[3] च कृत्वा तदनन्तरं प्रणवपुटितेन मूलेन स्थूलात्मकं च रूपं मनुबिम्बे आवाह्य[4] तत्तन्मन्त्रोक्तषडध्वन्यासादिकं कृत्वा स्वस्वमन्त्रेण पूजितं कुर्यात्। स्तोत्रावाहनम्- शिवे- यस्य सिंहा रथे युक्ता व्याघ्रभूतास्तथानुगाः। ऋषयो लोकपालाश्च देवस्स्कन्दस्तथा वृषः। प्रियागणो मातरश्च सोमो विष्णुः पितामहः। नागा यक्षाः सगन्धर्वा ये च दिव्या नभश्चराः। तमहं त्र्यक्षमीशानं देवं स्थाणुमुमापतिम्। आवाहयामि सगणं सपत्नीकं वृषध्वजम्। आगच्छागच्छ भगवन् स्थिरो भव शिवो भव ध्रुवो भव प्रसन्नो भव नमोऽस्तु ते। ओं ह्रौं नमः शिवाय। ओं जूं सः। शिव शर्व सर्वदात्र सान्निध्यं कुरु कुरु। अधिष्ठाय तिष्ठ स्वाहा। निरोधनं च नो भव पूजां प्रतिगृह्णातु भवान्। मन्त्रपूतमिदमर्घ्यमिदं पाद्यमिदमाचमनीयकं एतदासनं ब्रह्मणा विहितं स्वयं स्वाहा इति। **स्कन्दे**- शीघ्रमायातु भद्रं ते सुकुमार सुपद्मज। मयूररथयुक्तश्च वारणानुचरो गुहः। अन्नाद्यप्रियशीलस्तु शक्तितोमरवज्रधृक्। कार्तिकेय सुरश्रेष्ठ असुरेन्द्रप्रमर्दन। **शास्तरि**- पूर्वोक्तप्रतिष्ठाविधेः पूर्वमिदानीं वा- आयातु शास्ता सगणो मुदे नो ह्येन नागानुचरेण शीघ्रं। भवात्मजो वारिनिधीश्वारोऽयं स्वकेतुना कृष्णनिभेन गोप्ता। ओमावाहयामि इति। **विष्णौ**- बिम्बशुद्धिविधानानन्तरमिदानीं वा- आवाहयाम्यमरवृन्दनताङ्घ्रियुग्मं लक्ष्मीपतिं भुवनकारणमप्रमेयम्। आद्यं मनाननतनुं प्रणवासनस्थं पूर्णेन्दुभास्करहुताशसहस्रभासम्। ध्येयं परं सकलतत्वविदां च वेद्यं वाराहकापिलनृकेसरिसौम्यमूर्तिम्। श्रीवत्सकौतुभमहामणिभूषिताङ्गं

---

1 मण्डपादागमनसमये मूर्तिपैर्धारितघृतादिपात्राणां विनियोगमाह। 2 जीवावाहनं गुरूपदेशादवगम्यम्। 3 एकादशपटले सर्वदेवेषु गायत्री मूलप्रणवैः स्थूलसूक्ष्मपररूपावाहनं कुर्यात्। गायत्रीस्थाने स्थुलावाहने स्वस्वोपचारो वा मनुः। हरौ- अष्टाक्षरद्वादशाक्षरप्रणवैर्वा, हरे- षडक्षरप्रासादप्रणवैर्वा स्थूलसूक्ष्मपररूपाणि चावाहयेदित्युक्तम्।

कौमोदकीकमलशङ्खरथाङ्गहस्तम्। सर्वत्रगोऽसि भगवन् किल यद्यपि त्वां आवाहयामि हि यथा व्यजनेन वायुम्। गूढो यथैव दहनो मथनादुपैति ह्यावाहितोऽपि हि तथा त्वमुपैषि चार्चाम्। मालाधराच्युत विभो परमार्थमूर्ते सर्वज्ञ नाथ परमेश्वर सर्वशक्ते । आगच्छ मे कुरु दयां प्रतिमां भजस्व पूजां गृहाण मदनुग्रह काम्ययाऽद्य इति। अन्येषु आगमान्तरादवगन्तव्यानि[1]। एवं सर्वेषु देवेषु प्रतिष्ठां कृत्वा विश्वतश्चक्षुरादिभिः स्वागमोक्तैर्मन्त्रैः " लोकानुग्रहहेत्वर्थं स्थिरो भव सुखाय नः। सान्निध्यं च तथा देव प्रत्यहं परिवर्धय। मा भूत् प्रजाविरोधोऽस्मिन् यजमानः समृध्यताम्। सभूपालं तथा राष्ट्रं सर्वोपद्रववर्जितम्। क्षेमेण वृद्धिमतुलां सुखमक्षय्यमश्नुताम्। पूजां गृहाण सततं मामुद्धर नमोऽस्तु ते । " इत्यादिभिरुपतिष्ठेत।

**शिवे**- सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया। अत्र लिङ्गे महादेव सन्निधौ भव सर्वदा। यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी। तावत्त्वयाऽत्र लोकेश स्थातव्यं सर्वदा विभो। इति मन्त्राभ्यां चोपतिष्ठेत[2]।

**दुर्गायां**- श्रीसूक्तं जातवेदा इति ऋचं तामग्निवर्णामिति सूक्तं पुरुषसूक्तं रथन्तरं गायत्रं शाक्वरं साम येनेदं भूतमित्यादि, शिवसङ्कल्पं प्रतिष्ठासि[3] प्रतिष्ठां गच्छ इति यजुषा युतान् मन्त्रान् स्वयं पठेत्। मूर्तिपैः पाठयेच्च[4]।

**मन्त्रावाहनम्**- प्रणवोपचारान्वितेन मूलेन मन्त्रावाहनं विदध्यात्। मातृकातत्त्वन्यासवर्गाङ्गन्यासादिभिः तस्य तस्य देवस्य सकलभावं कल्पयेच्च। पूजापटलोक्तप्रकारेण पाद्यादितत्तदुपहारान् स्वस्वक्रमेण समर्प्य देवं समर्च्य पायसं निवेद्य भक्त्या तं परितोषयेच्च। अथ नित्यपूजार्थं योगपद्मपीठं समभ्यर्च्य

---

1 गणपतौ स्तोत्रावाहनं- ध्यायेत्तं सकलं देवं पद्मस्थं गजवक्त्रकम्। रक्ताम्बरानुलेपादिरक्तमाल्यादि भूषणम्। हस्ताग्राक्लृप्तपाशं च सृणिस्वरदसंज्ञकान्। बीजापूरं चतुर्भिः स्वैस्तुन्दिलं त्रिदशं परम्। गणाधिपं परानन्दमिक्षुसागरमध्यगम्। आस्वादयन्तं शुण्डाग्रे कदळीक्षुरसं सदा। एवं भूतं सशक्तीक कालमेघसमप्रभम्। मुक्तिप्रदं कारुणिकं कटाक्षविलसद्दिशम्। आगच्छ भगवानग्रे शिवो भव नमोऽस्तु ते। ओं स्थिरो भव। 2 गणपतौ प्रार्थने- विनायक नमस्तुभ्यं वंशवृद्धिकरोत्तम। शिलामये नवागारे सदा सन्निहितो भव। यावद्देवाश्च तिष्ठन्ति ऋषयो वसवस्तथा। तावत् त्वं शैलबिम्बेऽस्मिन् तिष्ठ तिष्ठ गणेश्वर। सर्वमन्त्रादिसंयुक्तो लोकानुग्रहकाम्यया। अत्र बिम्बे महादेव सन्निधौ भव सर्वदा इति। 3 प्रतिष्ठासि प्रतिष्ठावन्तो भूयास्म इत्यादि। 4 पाठयेदिति रथन्तराद्यभिप्रायेण इति विवरणे।

मूलेनावाह्य सकलीकृत्य पूजापटलोक्तक्रमेण यजेत्। पायसाद्यं हृद्यं वहु देवाय निवेद्य अग्निहोमं विधाय परिवारेषु मुख्यानभ्यर्च्य तेभ्यो वलिं विकिरेत्। यथा द्वारस्थवाहनगणपतीशानलोकपालदुर्गाषण्मुखनिर्माल्यधारिसभाद्वारस्थान् वलिना क्रमेण समर्च्य बहिरष्टध्वजनायकान्, महाबलिपीठे तदीयावरणपूजान्ते परिषदाधिपं च यजेत् इति लघ्वी प्रक्रिया। पुनः प्रदक्षिणीकृत्य कृतप्रणामः अग्रतः स्थितः- यावदत्र जगन्नाथो बिम्बमाश्रित्य तिष्ठति। तावदत्रैव रक्षार्थं यूयं तिष्ठत सर्वदा। इति मन्त्रेण परिवारमुख्यान् प्रार्थ्य, अभ्यर्च्य, अन्तःप्रविष्टो निवेद्यं विसृजेत्। ततोऽस्य गण्डूषादिसमर्पणं कृत्वा प्रार्च्य देवं परितोष्य तन्मूर्धनि न्यस्तमन्त्रेण करेण संस्पृश्य स्वकल्पसिद्धान् मन्त्रान् जपेत्। तत्र विष्णौ- पूरुषसूक्तं श्रीसूक्तं पञ्च तत्त्वानि द्वादशाक्षराष्टाक्षरषडक्षराणि जपेत्। हरिहरे- श्रीरुद्रं पुरुषसूक्तं च, गुहे मूलं गायत्रीं च जपेत्। दुर्गायां- श्रीसूक्तादिप्रार्थनोक्तमन्त्रान् जपेत्। अथ स्वस्वमूलमन्त्रान् यथाशक्ति जपेच्च। शिवे प्रासादं पञ्चाक्षरं पञ्चब्रह्माणि व्योमव्यापिदशाक्षरं चतुःशताक्षरं च स्वम्वाङ्गसहितं मृत्युञ्जयं, त्र्यम्बकं, श्रीरुद्रं, पाशुपतास्त्रं[1] च आवर्तयेत्। अथ सर्वेषु देवेषु द्विद्वयेकक्रमेण[2] भेदितैः पञ्च तत्वैः चैतन्यबिम्बयोः प्रतिमापीठयोः पीठतद्गतस्थानयोश्च सम्यगन्योन्यमेलनं क्रमेण विभाव्य स्थापय्य प्रणवेन ऊर्ध्वगतेनाधोगतेन च व्यापय्य सुषुम्नायां दीप्तचैतन्येन अखिलं ब्रह्माण्डमपि तत्प्रसारेणाभिपूर्य तद्ब्रह्माण्डमपि महामर्यादात्मनावस्थितं परिकल्पयेत्। इति चिद्बिम्वसम्मेलनेन सुदृढं कृत्वा तस्य लयाङ्गादि कृत्वा संरक्ष्य अनश्वरं दीपं अक्षतकुसुमगन्धजलादिपूजासाधनं चान्तः समास्थाप्य बहिर्गत्वा द्वारं बध्वा यजमानेन सह नित्यपूजार्थं क्षेत्रधनादि व्यवस्थां विधाय प्रादक्षिण्यप्रणामादि कुर्यात्। एवं प्रतिष्ठां विधाय निजपूजादिकं कुर्यात्।

अथ दक्षिणां दद्यात्। स्वर्णानां शतकं ददातु गुरवे सद्यः प्रतिष्ठाकृते दात्रादातृमनःप्रसादजननी या दक्षिणा सोत्तमा। गोभूम्यादिसमर्पणप्रमुखतोऽप्येतं समाराध्नुयात्। मूर्तीशानपि तद्दशांशपरिदत्त्याऽन्यांश्च तद्भागतः। इत्युक्तक्रमेण

---

1 प्रोमिति श्रीकण्ठीयबीजं अघोरास्त्रं प्रणवपुटितं हुं फट् कारं (वज्रमन्त्रं) रमासूक्तं शाकुनं कनिक्रदादि स्वस्ति नो मिमीतामित्यादि स्वस्ति सूक्तानि शिवसङ्कल्पं मूलं च।

2 विष्णौ-परमेष्ठिपुरुषतत्वाभ्यां सकृदबिम्बे व्यापयन् तदगतचैतन्यस्य बिम्बेन तादात्म्यलक्षणसंयोगं भावयेत्। विश्वनिवृत्तितत्वाभ्यां बिम्बाग्रादि पीठमूलान्तं सकृद्व्यापयन् बिम्बपीठयोः पुरुषप्रकृत्यादिभावतः अर्थसिद्धं तादात्म्यलक्षणं संयोगं भावयेत्। पुनः सर्वतत्वेन (एकेन) पीठाग्रादिगर्भगृहादिरूपप्रासादप्रान्तधिया व्यापयन् तयोराश्रयाश्रयिलक्षणं

गुरवे शतसुवर्णानि गोभूम्यादिसहितानि मूर्तिपेभ्यस्तद्दशांशद्रव्याणि परिकर्मिभ्य तद्दशांशद्रव्याणि दद्यादित्यर्थः। अथवा स्वसम्पादितद्रव्यनिचयं त्रेधा विभज्य प्रथमं भागं नित्यपूजार्थं प्रकल्प्य द्वितीयभागं गुरवे दक्षिणात्वेन दत्वा तृतीयभागं स्वकुटुम्बरक्षणार्थं आत्मसात् कुर्यादित्याह- कृत्वा त्रेधा स्वसम्पादितवसुनिचयं नित्यपूजादिसिद्ध्यै भागं देवाय भागं प्रदिशतु गुरवे दक्षिणां स्थापनार्हाम्। तस्मै तत्रोपयुक्तं सकलमपि समर्प्याथ तार्त्तीयमंशं तत्कर्ता पुत्रभार्याद्यनुगतपरिपुष्ट्यै स्वयं चाददीत इति। एतत्पक्षे गुरुः होमादिकर्तॄन् परिकर्मिणश्च सदस्यपारायणिकादिकांश्च स्वदक्षिणांशैः, वस्त्रादिनाऽन्यानपि सन्धिनुयात्।

अथ प्रतिष्ठानन्तरं दिवसत्रयपर्यन्तं द्वारं नोद्घाटयेत्। अग्रतः स्थण्डिलं कृत्वा स्वयोग्यपूजादिना सह नित्यार्चनमादधीत। चतुर्थे दिवसे कलशपटलोक्तक्रमेण कलशैरभिषिच्य यजेत्। इति सप्तदेवप्रतिष्ठाविधिः[1]।

**परिवारप्रतिष्ठा**- सा चतुर्थदिवसात्प्रागेव कर्तव्या। तत्र प्रथमं पूर्वदिग्द्वारे अन्यदिग्द्वारे वा देवालयेऽपि इन्द्रादीनां दिगीशानां पीठिकाः कारयित्वा परिगृह्य सदर्भमृत्वक्सलिलैर्विशोध्य सङ्घृष्य संक्षाल्य धारणादिभिः प्राणायामैः संशोध्य स्वस्वमन्त्रेण प्राणायामाङ्गन्यासादिकमपि कुर्यात्। ततः स्वस्वस्थानस्य उत्तरे स्थण्डिलमारचय्य अग्निं प्रतिष्ठाप्य तद्दक्षिणे पूर्णघटे पीठपूजापुरःसरं स्वस्व मन्त्रैः[2] तं तं दिगीशं स्वस्वाङ्गैः लोकपालैस्तदस्त्रैश्च युतं यजेत्। पुनः परिधिस्थापनादि कृत्वा पञ्चप्रणवादिकेन तत्तद्दिग्भवमन्त्रेण[3] पक्वं जुहुयात्। प्राग्दिशि होमे इन्द्रक्रतुमिति, अग्निदिशि अग्निं दूतं, यमदिशि नाके सुपर्णं, नैर्ऋते मोषुणःपरापरा, वारुणे यं रक्षन्ति, वायौ वायवायाहि, सोमे सोमं राजानं, ईशाने त्र्यम्बकं यजामहे इति पक्वमन्त्राः। पूजाहोमान्ते तस्य तस्य

---

संयोगं भावयेदिति रहस्यम्। एवमितरेष्वपि। शिवे- पञ्चब्रह्मभिः, स्कन्दे- अन्ते क्षेत्रज्ञयुतेन तत्त्वद्वयेन चैतन्यबिम्बसंयोजनं भावयेदिति। 1 लघुप्रतिष्ठायां प्रतिष्ठादिने स्नपनं सम्प्रदायसिद्धम्। सङ्ग्रहे पक्षान्तरे तथैवोक्तेः, तथाहि- लिङ्गाग्रे वृषभं पश्चात् स्थापयेद्देशिकोत्तः। निरीक्षार्थं [क्षां च ] चतुर्थेऽह्नि त्रिदिने द्विदिनेऽपि वा। सद्यो वाऽथ प्रकुर्वीत विधिवद्रुद्रसूक्ततः। निरीक्षादिनसम्प्राप्ते तदन्ते स्नापयेद्गुरुः। तन्त्ररत्नेऽपि- अङ्कुरं प्रथमं प्रोक्तं ध्वजं स्थाप्यं द्वितीयकम्। तृतीयं तु प्रतिष्ठाख्यं चतुर्थे चोत्सवक्रिया इति। 2 ओं इन्द्राय सुराधिपतये नमः इत्यादयो दिगीशमन्त्राः। ओं हृदयाय। इन्द्राय शिरसे। सुराधिपतये शिखायै। नमः कवचाय। ओमिन्द्राय नेत्राभ्यां। सुराधिपतये नमः अस्त्राय इत्यङ्गानि। 3 इन्द्रक्रतुं न आभरेत्यादि मन्त्रेण।

देवस्याधिवासहोमोक्तानि द्रव्याणि, समिदाज्यचर्वाज्यानि चतुर्द्रव्याणि वा दिगधीशमन्त्रैः मूर्तिपाः जुहुयुः। अत्र सर्वदेवेषु शिवाधिवासोक्ताः, पालाश्यो वा समिधः स्युः। होमान्ते द्वितीयपटलोक्तस्वस्वस्थाने पद्मपर्यन्तं पूजितपीठे स्वस्वदिगीशमन्त्रेण संस्थाप्य तेनैव मन्त्रेणावाह्य प्रणवाङ्गैर्वा सकली कृत्य ध्रुवाद्यौरिति सञ्जप्य सम्पातयुक्तघटजलेनाभिषिच्य पुनरङ्गानि न्यस्य समर्च्य स्विष्टकृदवदानानन्तरं पात्रान्तरस्थापितेन हविषा बलिं दत्वा प्रसन्नपूजां कुर्यात्।

**वीरभद्रादि प्रतिष्ठा**- वीरभद्रविघ्नेश्वरमातॄ रपि संशोध्य अग्निमाधाय[1] तद्दक्षिणे नवकं वीरभद्रगणपति ब्राह्म्यादीन् मध्यक्रमेणावाह्य सम्पूज्याग्नौ गायत्र्या पक्वहोमानन्तरं वीरभद्रादि[2]-तत्तन्मन्त्रैरष्टाष्टशः चतुर्द्रव्याणि पृथक् हुत्वा तत्तत्सम्पातं तत्तत्कलशे सिक्त्वा अर्चयित्वा बलिं दत्वा तोषयेत्। वीरभद्रगणपत्योर्मध्ये ब्राह्मीमाहेश्वरीकौमारीवैष्णवीवाराहीन्द्राणीचामुण्डीति सप्तमातॄः प्रतिष्ठापयेत्।

**निर्माल्यधारिप्रतिष्ठा**- निर्माल्यधारिणं जलाधिवासबिम्बशुध्यादिभिः शुद्धं भूतसंहारशोषणादिभिः संस्कृतं स्वमन्त्रप्राणायामादिभिः कृताधिवासं स्वमन्त्रेण हुतद्रव्यचतुष्टयं उदितिस्थाने उत्तरभागगतजलमार्गयुतं यथा भवति तथा प्रतिष्ठां कृत्वा स्वस्वमन्त्रसाधित कलशेनाभिषिच्य देवपूजावशिष्टपुष्पगन्धादिभिः समर्च्य निवेद्य बलिं दत्वा परितोष्य तस्मै निर्माल्यधारिणे देवोपभुक्तमखिलं समर्प्य पुनः प्रार्थयेत्। " यावदत्र जगन्नाथो विम्बमाश्रित्य तिष्ठति। तावदत्रैव रक्षार्थं त्वं तिष्ठस्व प्रतर्दन" इति मन्त्रेण। विष्णौ- विष्वक्सेनः, कुमारे- धूर्तसेनः, शर्वे चण्डेश्वरः, दुर्गायां- मूण्डिनी, विघ्ने- कुम्भोदरः, हरिहरे चण्डसेनः, आर्ये- घोषवान् निर्माल्यधारिणः।

**महाबलिपीठप्रतिष्ठा**- महाबलिपीठरचनात्पूर्वं ताम्रपात्रे पञ्चगव्यं परिपूज्य अग्निमाधाय अष्टोत्तरशतमाज्यं तेनैव मन्त्रेण हुत्वा अस्मिन्गर्भपात्रे अग्निचैतन्येन सह सम्पातं संयोज्य महापीठस्य मध्यस्थाने भुवि पीठपूजानन्तरं शक्तिमावाह्य सम्पूज्य तस्याः गर्भस्थाने गर्भपात्रं यथोपदेशं न्यस्य पीठाधिपं तस्मिन्नावाह्य सम्पूज्य ततो निवेद्य प्रसाद्य संरक्ष्य तक्ष्णा पीठं कारयेत्। निर्मितं बलिपीठं परिगृह्य दर्भमृत्वग्भिः संशोध्य आज्येनाभ्यज्य चुर्णैरुद्वर्त्य अभिषेकं कृत्वा जलाधिवासकाले जलैः स्नापयित्वा सप्तशुद्धिभिः विम्बशुद्धिकलशैर्वा अभिषिच्य पुण्याहान्तं कृत्वा

---

1 इन्द्रादीनामुक्तक्रमेण। 2 उत्सवपटलोक्तैः।

तत्स्थभूतसंहारादि निजमन्त्रावाहनन्यासान्तं कुर्यात्। पुनः पीठपूजां विधाय स्वनाममन्त्रेण बलिपीठाधिपमावाह्य, पीठाधिपममकालं संस्कृतैः स्वपरिवारैरावृतं तमर्चयित्वा अन्नाद्यं निवेद्य तदनन्तरं तस्मै तेभ्यश्च बलिं विकिरेत्। नैवेद्यं विसृज्य निर्माल्यं परिशोध्य आराध्य प्रसन्नपूजां कृत्वा रक्षेत्। तस्याग्रतःकुण्डे अग्निं जनयित्वा तद्दक्षिणे नवघटान् सर्पिषा धान्यैः गन्धजलैर्वा स्वस्वाधिपमन्त्रेण परिवारमन्त्रैश्च सम्पूर्य सम्पूज्य पीठाधिपगायत्र्या[1] पक्वं हुत्वा पीठाधिपमन्त्रेणाष्टोत्तरशतं परिवारपीठमन्त्रैरष्टाष्टशः आज्यं जुहुयात्। पाञ्चरात्रादि वैष्णवागमविधौ पीठाधिपमन्त्रेण समिद्घृतचरुलाजसर्षपसक्तु-यवतिलदधिक्षीरमधुपुष्पफलानि[2] अष्टोत्तरशतं परिवारपीठमन्त्रैः अष्टशः जुहुयात्। पाशुपतादि शैवागमविधौ समिच्चरुघृतधाना- लाजतिलापूप-विशेषदधिमधुघृतोडुम्बापूपपृथुकपयांसि पीठाधिपमन्त्रेणाष्टोत्तरशतं परिपीठाधिपमन्त्रैरष्टशश्च जुहुयात्। बलिपीठतद्घटेषु सम्पातं समर्प्य बलिपीठे सावरणं पीठाधिपं परिपूज्य तस्मै दिग्गणेभ्यश्च बलिमपि दद्यात्। तत्र विष्णौ बलिदाने ओं नमः प्राच्येभ्यो भूतेभ्यो विश्वभूतेभ्यो नमोऽस्तु विश्वरूपेभ्यो विविधरूपेभ्यश्च वो नमो नमः। ओं नमो दक्षिणेभ्यो[3] शार्ङ्गधन्वनो हाहाभ्यश्च सर्वेभ्यो भूतेभ्यो नमो नमः। ओं नमः पाश्चात्येभ्यो भूतेभ्यो भैरवेभ्यो विष्णुपालकेभ्यो वियद्ग्रहोदरवर्तिभ्यो हुं फट्[4] गच्छत स्वाहा। विष्णुगणानामतो बलिमुपहरामि भद्रं नो ददत प्रीणयत स्वाहा। ओं नमो विष्णुभूतेभ्यः उदीच्येभ्यः सकलजन्तुहितकरेभ्यः[5] स्वाहा इति चतसृषु दिक्षु विष्णौ बलिं दद्यात्। ईश्वरे-अष्टदिक्षु द्विविधा मन्त्राः। दशमूर्तिपार्षदेभ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमःस्वाहा। प्राग्गणेभ्यो बहुरूपेभ्यो विरूपेभ्यो विश्वरूपेभ्यःसद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा एवं आग्नेय्यां गणेभ्यो बहुरूपेभ्यो विरूपेभ्यो विश्वरूपेभ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा इत्याद्यूह्यम्। अथवा इह सर्वदेवेषु उत्सवबल्युक्ता ये भूताद्याः मन्त्राः प्रयोज्याः। पुनः पीठगतं निर्माल्यं व्यपनीय प्रार्च्य रक्तेन वस्त्रेणाच्छाद्य रात्रावधिवासयेत्। देवस्य प्रातःकालपूजान्ते बलिपीठस्थापनाय

---

1 पीठाधिपगायत्र्यभावे तदीयमन्त्रो ग्राह्यः। देवस्य गायत्र्या वा पक्वहोमः होममन्त्रेणैव पूर्णाहुतिः। 2 पद्मादि पुष्पं कदल्यादि फलम्। 3 भूतेभ्यः इत्यधिकमाकरे 4 ओमित्यधिकमाकरे। 5 विश्वपालकेभ्यो वो नमः इत्यधिकं आकरे।

देवं प्रार्थ्य पुनर्निर्माल्यमपनीय सम्यगभिषिच्य पद्मान्तं पीठमिष्ट्वा वलिपीठं मन्त्रमयं परिकल्प्य तत्र पूजितपीठे तन्मन्त्रतः संस्थाप्य ध्रुवाद्यौरिति मन्त्रजपं कृत्वा आवाह्य सकलीकृत्य पूजितनवकमध्यस्थब्रह्मकलशेनाभिषिच्य प्रणवेनाङ्गानि कृत्वा पुनः परितः स्थिताः अष्टमूर्तीर्यथाक्रमं प्रागादिप्रादक्षिण्येन स्वस्वमन्त्रैरभिषिच्य आवरणसहितं पीठाधिपं प्रार्च्य बलिपीठे पूर्वं निवेद्य पीठोपरिभागे उपपीठेषु च बलिं स्वस्वमन्त्रैर्दत्वा निर्माल्यमखिलं नीत्वा सम्पूज्य प्रसाद्य प्रणिपत्य यावदत्र जान्नाथ इत्यादि पूर्वोक्तमन्त्रेण प्रार्च्य तालत्रयादिकं कुर्यात्। पुनःदेवप्रतिष्ठायाश्चतुर्थदिवसे देवं यथोक्तकलशैरभिषिच्याभिपूज्य देवस्य कलशाभिषेकशिष्टमवस्रावं सम्पाद्य तेनावस्रुतेन बलिपीठस्य प्रोक्षणं कृत्वा स्थापितपीठिकास्थपरिवारेभ्यः बलिं दद्यात् महापीठप्रतिष्ठां चतुर्थदिवसादूर्ध्वमेव यदा कदा कु**र्याच्चे**त् प्रतिष्ठाचतुर्थदिने यथोक्तकलशैर्देवमभिषिच्य तच्छेषेण प्रोक्षणादिकं कुर्यादिति विशेषः। **ध्वजप्रतिष्ठा**- ध्वजप्रतिष्ठां कर्तुमादौ यथोक्तदिवसे अङ्कुरारोपं बीजावापं च कृत्वा लोहमयं वाहनं अधिवासदिवसात्पूर्वेद्युः गृहीत्वा जले अधिवासयेत्। देवाधिवासमण्डपवत् मण्डपं कृत्वा संस्कृत्य तत्र निद्राकलशसहितां शय्यां च कृत्वा विधिवत् पीठपूजां कृत्वा प्रकृतिमावाह्य पूजयेत्। विष्णौ कलशपूजायां- शयनस्य चतुर्दिक्षु ईशकोणे च क्रमात् वज्रगरुडशिलामौक्तिकशङ्खाख्यरत्नपद्मरागैश्च युक्तेषु पञ्चसु कलशेषु इन्द्रादिदिक्पालान्, ईशकोणस्थकलशे गरुडं चावाह्य पूजयेत्। शिवे तु- शय्याग्रे हेमरत्नगन्धसहितैर्जलैर्नव कलशानापूर्य मध्ये घटे वृषभं परिघटेषु इन्द्रदिदिक्पालान् यजेत्। दुर्गायां- विष्णुवत्, इतरेषु शिववत् कलशस्थापनादिकं कार्यं, तेषु प्रधानकलशे स्वं स्वं वाहनं यजेत्। विष्णौ- अन्यस्मिन् गृहे पञ्च कुम्भान् संस्थाप्य मध्याद्युदगन्तं क्रमात् कषायमृज्जलधान्यजलगव्यगन्धजलैरापूर्य यजेत। इतरेषु देवेषु यथोक्तप्रकारेण गन्धोदकेन स्वस्वोक्तबिम्बशुद्धिकलशद्रव्यैर्वा नवकं प्रपूर्य यजेत्। वाहनबिम्बं देवबिम्बवत् जलात्समुपनीय स्नानमण्डपं नीत्वा पूजितपीठे सर्वेषु स्वायतनसम्मुखतया, विष्णौ प्राङ्मुखतया वा संस्थाप्य यथोक्तप्रकारेण मधुमन्मन्त्रजप्तेन मध्वाज्येन सुवर्णशलाकया निजनेत्रमन्त्रेण नेत्रोल्लेखनं मध्वाज्यपूरणं च कृत्वा नेत्रपटं हृत्वा गां दर्शयित्वा तामाचार्याय दत्वा स्वस्वोक्तक्रमेण स्वस्वद्रव्यैः क्षालनं कृत्वा पुनः पूर्वोक्तैः कलशैरभिषिच्य उपहारसमर्पणादिपुण्याहान्तं कृत्वा शाकुनादिसूक्तैः मण्डपं नीत्वा शयने स्वायतनसम्मुखतया शाययित्वा प्रोक्तक्रमेण तत्त्वसंहारं कृत्वा

शोषणादिभिर्विशोध्य[1] तत्त्वमूर्तिमन्त्रप्राणायामादिकं कुर्यात्। ततः शुद्धिर्नपीठे तत्तद्वाहनमन्त्रतः अभिवाह्यागम्य बहिर्गत्वा मृत्स्यादिभिः शोधिते ध्वजस्थाने प्रकाशमानं पीठं नपुंसकशिलां च पूर्वोक्तक्रमेण संस्कृत्य दर्भमृत्तिकाभिः ध्वजदण्डघर्षणं विधाय संक्षाल्य ध्वजदण्डस्य पीठस्य च पुण्याहमाचरेत्। दण्डं शोषणादिभिः विशोध्य प्रणवेन सम्पूज्य तस्य मूलमध्याग्रेषु वृषं[2] षण्मुखं वायुं ओं वृषभाय नमः, ओं स्कन्दाय नमः, ओं वायवे नमः इति नाममन्त्रैः पूजयेत्। पुनः पीठादिकं शोषणादिभिः संशोध्य स्वस्वशक्त्या पूजयित्वा प्रणवेन नपुंसकशिलां सम्पूज्य आत्विन्नं संरक्ष्य मण्डपान्तर्गत्वा तत्त्वहोमादिकं कुर्यात्। स्वस्वदेवोक्तपञ्चतत्त्वमन्त्रैः निजोक्तक्रमात्[3] हुत्वा सम्पातं वाहने समर्प्य स्वस्वागमोक्ताधिवासहोमं[4] शान्तिहोमाद्यं कुर्यात्। वाहनमण्डलादिषु सम्पूज्य ब्राह्मणभोजनादिकं कृत्वा बहिर्बलिं दत्वा अन्तः प्रविश्य प्रसाद्य स्तुतिं कुर्यात्। ततः प्रासादसंस्थं देवमपि प्रपूज्य प्रीणयेत्। अधिवासहोमादौ विशेषः उच्यते। गुरुर्मूर्तिपालाश्च यथोक्तक्रमेण वह्निं विहृत्य ध्वजवाहनस्य देवस्य च गायत्र्या पक्वं जुहुयुः। अथ सकलेषु देवेषु समिदन्नाद्यं द्रव्यं स्वस्ववाहनमन्त्रेण जुहुयुः। विष्णौ- कचटतपवर्गैस्सहितं स्वाहान्तं वैनतेयपदं वाहनमन्त्रः। क्रमात् चतुर्दिक्षु मध्ये च पञ्चकुण्डेषु जुहुयुः। यथा ओं कं खं गं घं ङं वैनतेयाय स्वाहा इत्यादिरूपः। विष्णौ अष्टदिक्षु- ध्वजवासिभ्यो भूतेभ्यो नमः इति बलिमन्त्रः। ध्वजवाहनभूतोऽसौ इत्यादिः स्तुतिमन्त्रः। ध्वजवाहनभूतोऽसौ विष्णोर्विष्णुपरायणः। सुपर्णः प्रीयतां मह्यं विनताकुलनन्दनः। अन्यत्रोह्यम्। एवमधिवासं कृत्वा उत्तरेद्युः प्रातः देवं परिपूज्य प्रसाद्य ध्वजस्थानमुपेत्य देवप्रतिष्ठायामुक्तक्रमेण नान्दीमुखादि पुण्याहसहितं नपुंसकशिलां संस्थाप्य सम्पातं समर्प्य सर्वदेवेषु नपुंसकशिलायां सुवर्णसहितरत्नानि विन्यसेत्। हरौ तु- वैडूर्यपुष्यरागमौक्तिकगारुडमाणिक्यानि पञ्चरत्नानि कचटतपवर्गैः[5] क्रमात् पूर्वादिमध्यान्तं विन्यसेत्। इतरेषु सर्वत्र स्वस्वतन्त्रोक्तानि ग्राह्याणि। पुनः सर्वदेवेषु मण्डपं गत्वा तोरणध्वजादिकं प्रोद्वास्य तण्डुलपूर्णे पात्रे

---

1 वाहनबलिपीठादिविषये देवस्यैव मूलमन्त्रविधानेनात्मनः सकलीकरणादि कार्यमिति बोद्धव्यं इति विकल्पे। 2 अयं क्रमः शिवे. इतरेषु देवेषु वृषस्थाने स्वं स्वं वाहनं योज्यम्। 3 शिवे उद्घातकृतिः सूचिता। 4 प्रणवसंहितायां वैकल्पिकं ध्वजदण्डतत्पीठनपुंसकशिलानामष्टशो हुत्वा तत्सम्पातस्पर्शनादि कुर्यात्। प्रणवेन रत्नन्यासहोमोऽपि सूचितः। 5 ओं कं खं गं घं ङं (वैनतेयाय) नमः इत्यादि क्रमः। तन्मन्त्रपुटितेन प्रणवेन पराबाहनम्।

पताकाघण्टास्रक्सहितं वाहनविम्वं न्यस्य तत्समस्तं मूर्तिपैरानाय्य, स्यान्नीराजनमग्रतः इति क्रमेण कुम्भेशात् पुरतः कलशपञ्चकं नवकं वा समानाय्य, देवस्य गर्भालयं समेत्य देवं सम्पूज्य प्रसाद्य देवस्याग्रसन्निहितात् वाहनात् सपताके वाहनबिम्बे आवाह्य सम्पूज्य निद्राकलशकुम्भेशादिभिः सकलैः समन्वितं यथा भवति तथा ध्वजस्थानमुपेत्य प्राज्ञान् ब्राह्मणान् प्रसाद्य तदाज्ञया स्थापनं कुर्यात्। तत्रायं क्रमः- स्थापनकाले ध्वजाग्रे पीठपूजानन्तरं परावाहनादि कृत्वा प्रणवोपचारमूलानि निजमन्त्र[1] पुटितपञ्चतत्वानि निजमन्त्रं प्रणवं चोक्त्वा संस्थापयेत्। मन्त्रन्यासानन्तरं अभिपूज्य वाहनकलशस्थजलेन निजमन्त्रेणाभिषिच्य जीवावाहनाद्यं कृत्वा मन्त्रावाहनन्यासपूजाद्यं विधाय ध्वजाग्रे कीलस्थापनादिना सुस्थिरमारचय्य पूजितपीठे गर्ते उत्तरे वामे वा पार्श्वलम्बिन्यो घण्टास्रगुज्वलपताकाश्च यस्मिंस्तत्र ध्वजदण्डं देवस्य सम्मुखं भवति तथा संस्थाप्य पूर्वोक्तमन्त्रैः प्रतिष्ठितं साधु सम्भाव्य ध्यात्वा तदभिमृशन् ध्रुवाद्यौरिति मन्त्रान् जपेत्। वाहनमन्त्रावाहनविन्यासानन्तरं दिगधीशकुम्भैः[2] तदीयमन्त्रैर्वेद्यामेवाग्रतः सिक्त्वा पुनःकर्करीजलेन[3] परिषिच्य क्रमेण घटेशनिद्राकुम्भजलेनाभिषिञ्चेत् तत्तन्मन्त्रन्यासपूर्वकमर्चयित्वा तस्मै हविर्निवेद्य वलिं विकिरेत्। निर्माल्यं विमृज्य भुवं परिशोध्य प्रसाद्य प्रसन्नपूजां विधाय स्तुतिं कुर्यात्। विष्णौ- ओं नमोऽष्टकुलनागभूषणाय नागशोणितलिप्ताङ्गाय समस्तपातालवासिज-नविक्षोभणकराय देवदानवगन्धर्वोरगमथनाय मातुरर्थे नागमोहनाय हन हन विघ्नं नाशय स्वाहा इति स्तुतिमन्त्रः। शिवे- नमस्तेऽस्तु त्रिणेत्राय ध्वजाधिपतये नमः। नन्दिने तु नमस्तुभ्यं उत्सवस्य प्रसिद्धये, इति स्तुतिमन्त्रः। पुनः गर्भगृहं गत्वा यथाशक्ति वैभवेन देवमाराध्य ध्वजवाहनसहितपरिवाराणां पूर्ववत् समन्तात् बलिं कृत्वा दिनत्रयं नीत्वा चतुर्थे दिवसे देवं यथाशक्ति कलशैरभिषिच्य अवस्रावप्रोक्षणं भूतबलिं च कुर्यात्। इति ध्वजप्रतिष्ठा।

।। इति सपरिवारदेवप्रतिष्ठाविधिः।।

**जीर्णोद्धारः**- स च निष्क्रामणविधिना सङ्कोचविधिना वा कर्तव्यः। विम्वादिर्जीर्तौ निष्क्रामविधिः। प्रासादादिजीर्तौ सङ्कोचविधिः। तत्रापि चिरकालचिकीर्षिते प्रासादादौ निष्क्राम एव। जीवकलशपक्षो निष्क्रामः। विम्वे एव तत्त्वनिगूहनं सङ्कोचः। तत्र निष्क्रामपक्षो द्विविधः।

**1 वाहनमन्त्रो मूलमन्त्रश्च निजमन्त्र इत्युच्यते। 2 विष्णौ- चतुर्भिः अन्येषु अष्टभिश्च। 3 अस्त्रकलशजलेन।**

बालालयाल्पबिम्बादिपक्षसहितः, कलशैककार्य इति द्विविधः[1]। मूलालयाद्दक्षिणभागे बालालयं ईशकोणस्थमण्डपसहितं, लौहं दारुमयं वा अल्पविम्वं कारयित्वा अङ्कुरारोपणजलाधिवासबालालयप्रासादशुद्धिं तन्मण्डपसंस्कारं कृत्वा जलादानीय बिम्बशुद्धिकलशैरभिषिच्य शय्यायां प्रणीयाधिवासयेत्। ततः तन्तुवेष्टनमारभ्य मूलप्रासादशुद्धिं विधाय प्रक्षाळनाद्याः सप्त मूलप्रतिमाशुद्धीः कुर्वीत। ततः प्रायश्चित्ततत्त्वहोमद्रव्यकलशैः संस्नाप्य परिवारबलिं विकीर्य निष्क्रामणं कर्म प्रारभेत। **संहृतितत्वहोमः**[2]- तद्यथा- अग्रमण्डपस्थिते कुण्डे अग्निं प्रतिष्ठाप्य परिधिस्थापनात्पूर्वं पार्श्वे विधिवत् कलशं सम्पूज्य परिधिस्थापनादि कुर्यात्। पूजाहोमान्तं विधाय समिदादिद्रव्यहोमं विधाय तत्सम्पातं कुम्भे समर्प्य अखिलतत्त्वमन्त्रैः सृष्टिक्रमेणैकैकामाज्याहुतिं जुहुयात्। ततःगर्भगृहं गत्वा पीठपूजानन्तरं देवमावाह्य तत्त्वन्यासादिभिः तं देवं सकलीकृत्य समभ्यर्च्य तत्सम्पातघृतं समर्प्य निखिलतत्त्वैः परिवारैश्च पूर्णं भावयित्वा ततः कुसुमं विकीर्य साञ्जलिः संहारानुज्ञां प्रार्थयेत्। लब्धानुज्ञः प्रासादमूर्तेः, कुण्डस्य, कलशस्य च क्रमात् प्रतिमायाः अग्नेः, जलस्य च, तेषां चैतन्यानां च नाडीनां योगार्थं प्रथमं देवाय प्लुतप्रणवेन कुसुमं त्रिवारं दत्वा कुण्डस्थाग्निसमीपं गत्वा अग्नौ, कलशे च, प्लुतप्रणवेन त्रित्रिशःपुष्पाञ्जलिं विधाय एवं नाडीसन्धानं कृत्वा संहारकर्मणः सांमुख्यदानार्थं मूलेनाष्ट घृताहुतीर्हुत्वा क्षेत्राधिपादिद्वाःस्थान्तैः बलिपरिवारमन्त्रैः निर्माल्यधार्याद्यावरणमन्त्रैः समष्ट्यादिगुरुपर्यन्तैः पीठमन्त्रैश्च सकृत्सकृदाज्यं हुत्वा विष्णवादौ कोपतत्त्वादिभिः, इतरेषु पृथिव्यादिप्राणान्तैश्चतुर्विंशतितत्त्वैः, शिवे तु शक्तितत्त्वान्तैः पञ्चत्रिंशत्तत्त्वैः पुनः सर्वेषु अग्निसोमसूर्यमण्डलहृत्पुण्डरीकैः, पुनः विशेषान्वितैः[3] स्वैः स्वैः पञ्चतत्त्वैश्च जुहुयात्। अथ देवस्य परतत्त्वप्राप्तये सर्वेषु देवेषु जीवतत्त्वेन, शिवे- अन्तिमेन शिवतत्त्वेन जुहुयात्। तत्र सर्वत्र तत्त्वेषु अष्टशतं, अष्टोत्तरविंशतिः, अष्ट वा संख्या भवति। तत्त्वे तत्त्वे पूर्णाहुतिः कर्तव्या। ईशे- उद्घातवृत्या पञ्चतत्त्वैर्जुहुयात्

---

1 मासादर्वाक् कलशपक्षः तदूर्ध्वं बालालयपक्षः। तदुक्तं- मासादर्वाक् समाधाने कुम्भे शक्तिं समर्चयेत्। तदूर्ध्वं द्वादशाब्दं तु समाधानविलम्बने। कृत्वा बालगृहं तत्र बालबिम्बं यथाविधि। इत्यादि। 2 अत्र कलशस्थापनादिविशेषविचारस्तत्त्वहोमे द्रष्टव्यः। 3 विशेषान्वितपञ्चतत्त्वानि- विष्णौ- लां नमः पराय सर्वात्मने नारायणाय गन्धतन्मात्रस्वरूपाय समानात्मने नमः। वं नमः पराय निवृत्त्यात्मने अनिरुद्धाय रसतन्मात्रस्वरूपाय उदानात्मने नमः। रां नमः पराय विश्वात्मने प्रद्युम्नायरूपतन्मात्रस्वरूपाय

व्यानात्मने नमः। यं नमः पराय सङ्कर्षणाय स्पर्शतन्मात्रस्वरूपाय अपानात्मने नमः। ओं षो नमः पराय परमेष्ठ्यात्मने वासुदेवाय शब्दतन्मात्रस्वरूपाय प्राणात्मने नमः इति। निष्क्रामणे नमोन्तत्वं; सूत्रच्छेदे तु नमःपदस्थाने हुं फट् इति योजनीयम्। होमे स्वाहाकारो वक्तव्यः। एवमुत्तरत्र सर्व देवेषु योजनीयम्। हरिहरे- ह् लां नमः पराय सद्योजाताय सर्वात्मने [सद्योजाताय नारायणात्मने] गन्धतन्मात्रस्वरुपाय समानात्मने नमः। हिंवं नमः पराय वामदेवाय निवृत्त्यात्मने [वामदेवायानिरुद्धात्मने] रसतन्मात्रस्वरूपाय उदानात्मने नमः। हुं हां नमः पराय अघोराय बिश्वात्मने [अघोराय प्रद्युम्नात्मने] रूपतन्मात्रस्वरूपाय समानात्मने नमः। हें यं नमः पराय तत्पुरुषाय पुरुषात्मने [तत्पुरुषाय सङ्कर्षणात्मने] स्पर्शतन्मात्रस्वरूपाय अपानात्मने नमः। हों षों नमः पराय ईशानाय परमेष्ठ्यात्मने [ ईशानाय वासुदेवात्मने] शब्दतन्मात्रस्वरूपाय प्राणात्मने नमः इति। दुर्गायां- लौं नमः परायै सर्वरूपाशक्त्यात्मन्यै जां कन्यकायै गन्धतन्मात्रस्वरुपायै समानात्मन्यै नमः। वौं नमः परायै निवत्तिनीशक्त्यात्मन्यै तं भगवत्यै रसतन्मात्रस्वरूपायै उदानात्मन्यै नमः। रौं नमः परायै विश्वरूपाशत्यात्मन्यै । वें देव्यै रुपतन्मात्रस्वरूपायै व्यानात्मन्यै नमः। यौं नमः परायै पौरुषीशक्त्यात्मन्यै दं आर्यायै स्पर्शतन्मात्रस्वरूपायै अपानात्मन्यै नमः। षौं नमः परायै श्रोष्ठाशक्त्यात्मन्यै सें दुर्गायै शब्दतन्मात्रस्वरूपायै प्राणात्मन्यै नमः इति। स्कन्दे- वं नमः पराय निवृत्त्यात्मने सनत्कुमाराय गन्धतन्मात्रस्वरुपाय समानात्मने नमः। चं नमः पराय प्रतिष्ठात्मने स्कन्दाय रसतन्मात्रस्वरुपाय उदानात्मने नमः। दभुं नमः पराय विद्यात्मने इन्द्राय रूपतन्मात्रस्वरूपाय व्यानात्मने नमः। वें नमः पराय शान्त्यात्मने विशाखाय स्पर्शतन्मात्रस्वरूपायापानात्मने नमः। नं नमः पराय शान्त्यतीतात्मने षष्ठाय (षष्ठिने) शब्दतन्मात्रस्वरूपाय प्राणात्मने नमः।

विघ्ने- गं नमः पराय निवृत्त्यात्मने विघ्नाय गन्धतन्मात्रस्वरुपाय समानात्मने नमः। गिं नमः पराय प्रतिष्ठात्मने विनायकाय रसतन्मात्रस्वरूपाय उदानात्मने नमः गुं नमः पराय विद्यात्मने वीराय रूपतन्मात्रस्वरूपाय व्यानात्मने नमः। गें नमः पराय शान्त्यात्मने शूराय स्पर्शतन्मात्रस्वरूपायापानात्मने नमः। गों नमः पराय शान्त्यतीतात्मने वरदाय शब्दतन्मात्रस्वरूपाय प्राणात्मने नमः।

शास्तरि- घ्रं नमः पराय निवृत्त्यात्मने रेवन्ताय गन्धतन्मात्रस्वरूपाय समानात्मने नमः। घ्रिं नमः पराय प्रतिष्ठात्मने महाशास्त्रे रसतन्मात्रस्वरूपाय उदानात्मने नमः। घ्रुं नमः पराय विद्यात्मने गोप्त्रे रूपतन्मात्रस्वरूपाय व्यानात्मने नमः। घ्रें नमः पराय शान्त्यात्मने प्रभवे स्पर्शतन्मात्रस्वरूपायपानात्मने नमः घ्रों नमः पराय शान्त्यतीतात्मने दीप्त्रे शब्दतन्मात्रस्वरूपाय प्राणात्मने नमः।

शास्तृगणपयोर्मूर्तीनां व्युत्क्रमपाठो विचारणीयः। दुर्गायां- संहारक्रमस्थमूर्तीरादायानयोः सृष्टिमार्गोक्तमूर्तयः किमर्थं स्वीकृता इति। क्रियासारव्याख्याता नारायणोऽप्येवमलिखत्। शिवे- ओं ह्रीं हौं यं कं नमः शिवाय ब्रह्मणे पृथिव्यधिपतये ह्लां निवृत्तिकलात्मने नमः। ओं ह्रीं हौं वां खं नमः शिवाय विष्णवे अबधिपतये ह्रीं प्रतिष्ठाकलात्मने नमः। ओं ह्रीं हैं शिं गं नमः शिवाय रुद्राय तेजोधिपतये ह्रूं विद्याकलात्मने नमः। ओं ह्रीं हौं मं घं नमः शिवाय ईश्वराय वाय्वधिपतये ह्रैं शान्तिकलात्मने नमः। ओं ह्रीं हौं नं

उद्घातो नाम ऊर्ध्वोर्ध्वं ह्रासः। तत्र प्रथमेन पञ्चविंशत्यधिकशतं, द्वितीय शतं, तृतीयेन पञ्चसप्ततिः, चतुर्थेन पञ्चाशत्, पञ्चमेन पञ्चविंशतिः इति संख्याविभागः। अन्यैःतत्त्वैः एकैकशो वा जुहुयात्। सूत्रच्छेदकर्मणि[1] तत्त्वानि हुं फडन्तानि कार्याणि; निष्क्रामादौ न हुं फडन्तत्वमुक्तम्। तथा निष्क्रामवर्ज पञ्चसु तत्वेषु विशेषवत्त्वं च नापेक्षितम्। निष्क्रामणे कनिक्रदादिमन्त्रैः स्वस्त्यादिमन्त्रैश्च सकृत्सकृदाज्यं जुहुयात् सूत्रच्छेदकर्मणि वास्तोष्पते प्रतीति, वास्तोष्पते शग्मयेतिमन्त्राभ्यां चतुर्गृहीतपूर्णाहुतिं च जुहुयात्। तत्सम्पातद्वयं रक्षेत्। एवं कृत्वा गर्भगेहं गत्वा देवस्य परमान्नं निवेद्य कुण्डस्थाग्नौ पूजाहोमं विधाय निवेद्य विसर्जनं कृत्वा प्रसाद्य बहिरागत्य स्विष्टकृदादिहोमशेषं समाप्य तत्त्वकलशे सम्पातं समर्प्य अग्निमुद्वास्य देवस्याग्रतः पूजितपीठे स्वस्तिके तत्कलशमुपनीय स्थापयेत्। यात्राद्याहुतिशेषद्वयं रक्षेत्। पुनः निर्गत्य अग्रमण्डपे विप्रान् समुह्य सुवर्णादिदानेन प्रसाद्य तत्तन्मन्त्रेण देवं प्रणम्य चिकीर्षितं कर्म निवेदयेत्। विष्णौ- नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च। जगद्धिताय कृष्णाय गोविन्दाय नमो नमः। शिवे- नमः शिवाय साम्बाय सगणाय ससूनवे। प्रधानपुरुषेशाय सृष्टिस्थित्यन्तहेतवे इति। पूजाबिम्बमिदं विष्णोः स्थापितं पूर्वसूरिभिः। अनेन दूणणेनाद्य दूषितं चेह वर्तते। दुष्टबिम्बस्य जोद्धारः कर्तव्य इति शासनम्। आगमस्य वयं कर्तुं व्यवसायमुपास्महे। अत्रेदं यदि कर्तव्यमागमार्थतया भवेत्। भवन्तो नोऽनुजानन्तु भवेमाज्ञाकरा वयम्। अत्र नमो ब्रह्मण्येति विष्णौ, नमः शिवायेति शिवे च प्रार्थनामन्त्रः। अन्यदेवेषु स्वस्वमूलमन्त्राः। पूजाबिम्बमिति मन्त्रत्रयं हरौ विषये ब्राह्मणेभ्यो विज्ञापने वर्तते। परेषु देवेषु पूजालिङ्गमित्याद्यूह्यम्। अथ विप्रैः क्रियतामित्युक्ते सामान्यजनप्रबोधकं आगमोक्तं वचनं निवेदयेत्। यथैव देवपूजायां विनियुक्तमनिन्दितम्। द्रव्यं पुष्पादिकं पश्चान्निर्माल्यमिति निन्द्यते। एवं बिम्बमदुष्टं यत् पूजायां विनियुज्यते।

तदेव दूषितं पश्चान्निर्माल्यमिति निन्द्यते। तस्माद्दुष्टमिदं बिम्बं भवद्भिर्मुक्त संशयैः। निर्माल्यबुद्ध्या त्यक्तव्यमिति शास्त्रस्य शासनम् इति। अनन्तरं कर्तृन् प्रति-कियन्तं कालमत्रेशः प्रवासवसतिं वसेत्। मासादूर्ध्वं द्वादशाब्दादर्वाक् कालावधिः स्मृतः। नार्वागूर्ध्वं क्लेशवासं वासुदेवोऽनुमन्यते। अथ प्रासादाश्रितदेवताः

---

ॐ नमः शिवाय सदाशिवायाकाशाधिपतये ह्रौं शान्त्यतीतकलात्मने नमः इति। सूत्रच्छेदे नमःस्थाने हुं फट् योजनीयम्। होमे अन्ते स्वाहाकारो वक्तव्यः। 1 सूत्रछेदो नाम आयतनात् बिम्बस्योद्धारः त्याग इति यावत्।

प्रति- श्रृण्वन्तु देवताः सर्वाः प्रासादमिममाश्रिताः। यदुच्यमानमस्माभिरनुगृह्णन्तु तेन सः। पूर्वैः पूर्वं कृतमिदं देवालयमसारवत्। प्राप्तं कालवशाद्भूयो वयं तत्कर्तुमुद्यताः। कालेनैतावता भूयः प्रासादेऽस्मिन् पुनर्नवे। स्थापयामो वयं सत्यं तदनुज्ञातुमर्हथ। अथ देवं प्रति- भगवन्वास्त्वभिनवं बिम्बं वा तव शोभनम्। कारयिष्यन्ति ते भक्तास्तदनुज्ञातुमर्हसि। क्लेशवासस्त्वया देव रोचनीयोऽल्पके गृहे। यावन्नवं शुभं कृत्वा पुनः संस्थापयामहे। जीर्णं बिम्बमिदं देव सर्वदोषावहं नृणाम्। अस्योद्धारे कृते शान्तिरित्येवं भाषितं त्वया। तत्त्वयाऽधिष्ठितं देव उद्धरामि तवाज्ञया। तदुपक्रान्तमस्माभिस्तदनुज्ञातुमर्हसि इति। एतद्विष्णुविषये। अन्यत्रोह्यम्। पुनरन्तर्गत्वा केवलं पद्माय नमः इति पूजितपीठे देवं सन्निहितं संङ्कल्प्य प्रतिलोमतत्त्वैर्मूलेन प्रणवेन संहारव्यापकं कृत्वा संहारक्रमेण त्रिर्व्यापय्य ततस्तत्त्वकलशेन तैरेव मन्त्रैरभिषिच्य तैरेवोद्वाप्य तं केवलं चिन्मयं प्रकल्पयेत्।

**ध्यानसङ्कोचं कुर्यात्**- देवस्याग्रे उपविश्य नाडीयोगेन देवं मनसा गत्वा प्रणवेन देवाभेदेन स्थितः सन् इदं क्षेत्रं महामर्यादापर्यन्तं स्थानं अब्जयुगं यथा- बाह्यहारामध्यहारान्तहारान्तर्मण्डलानि प्रासादश्च क्रमाद्बाह्यकमलस्य दलाग्रदलदलसन्धिकेसराः कर्णिका च, प्रासादगर्भगृहपीठप्रतिमाः प्रतिमाहृदयं च आभ्यन्तरपद्मस्य क्रमात् दलाग्रदलदलसन्धिकेसराः कर्णिका च एवं पद्मयुगं ध्यात्वा अन्तः सुषुम्नायां मूलचक्रात् आरभ्य द्वादशान्तात्मस्थस्तूपिकापर्यन्तं विद्युदाकारं तेजः प्लुतप्रणवेन व्यापय्य प्रणवेन पुष्पाञ्जलिं विकीर्य सुषुम्नानाड्या संव्याप्तमिदं तेजःपरितः प्रसार्य महामर्यादापर्यन्तं संव्याप्तं परिकल्प्य सप्तमात्रप्रणवेन संहृतिमुद्रया पुष्पाञ्जलिं कुर्वन् महामर्यादाया (बाह्यहारायाः) आरभ्य मध्यहारापर्यन्तं स्थितान् परिवारान् तेजसा सङ्गृह्य जाग्रदवस्थया सहानीय तत्पर्यन्तमानयेत्। तथा तस्मात् षण्मात्रप्रणवेन पुष्पाञ्जलिं कुर्वन् मध्यहारामारभ्य स्वप्नावस्थया सह अन्तहारापर्यन्तं स्थितान्परिवारान् तेजसा सङ्गृह्य स्वप्नावस्थया सह तत्पर्यन्तं नयेत्। तथा पञ्चमात्रप्रणवेन पुष्पाञ्जलिं कुर्वन्, अन्तहारामारभ्य अन्तर्मण्डलान्तं स्थितान् परिवारांस्तेजसा सङ्गृह्य सुषुप्त्यवस्थया सहानीय, तत्पर्यन्तं नयेत्। पुनः चतुर्मात्रप्रणवेन पुष्पाञ्जलिं कुर्वन् अन्तर्मण्डलादारभ्य प्रासादपर्यन्तं स्थितान् परिवारांस्तेजसा सह सङ्गृह्य तुरीयावस्थया सहानीय तत्पर्यन्तं आनयेत्। पुनः त्रिमात्रप्रणवेन प्रासादात् गर्भगृहपर्यन्तं स्थितान्परिवारान् तेजसा सहाकृष्य गर्भगृह पर्यन्तं नयेत्। द्विमात्रप्रणवेन गर्भगृहात्पीठपर्यन्तं स्थितान्परिवारांस्तेजसा

मङ्गृह्य पीठपर्यन्तं न्यसेत्। एकमात्रप्रणवेन पीठात् मन्त्रविम्बपर्यन्तं स्थितान् परिवारान् तेजसा सङ्गृह्य अवस्थाभिः सहाकृष्य कवलीकृतपरिवारं तत्तेजो नयेत्। पुनर्बिम्बात् प्रतिलोमतत्त्वैस्तारेण च तदखिलं तेजोभूतं बिम्बस्यान्तर्गतचिदात्मनि नयेत्। इति क्रमेण बाह्यप्राकारादिप्रासादपर्यन्तं प्रासादादि प्रतिमाहृदयान्तं तत्तद्विभूत्या सहाकृष्य विम्बहृत्कमलस्थचैतन्ये संयोज्य देवं चिन्मात्रं प्रकल्प्य अस्मात् स्वयं पृथग्भूतो भवेत्।

**सङ्क्रामविधिः**- पुनः देवस्याग्रतः स्वस्तिकादिभिः क्लृप्तपीठे संस्कृतं लोहमयं घटं सकूर्चकं दूर्वाक्षतकाञ्चननवरत्नादिसहितं च कृत्वा शुद्धजलेन मानसपूरणानन्तरं सावकाशमूर्ध्वार्धपर्यन्तं पूरितं कृत्वा पुनः लिपिपङ्कजपूजनं मूर्तिकलावाहनाद्यं च कृत्वा, नमस्ते सर्वलोकेश भूतानामभयप्रद। भक्तप्रिय नमस्तेऽस्तु प्रसीद भुवनेश्वर। आगच्छ देव देवेश सर्वकारणकारण। नवीकरणसिद्ध्यर्थं कुम्भेऽस्मिन्सन्निधिं कुरु इति देवं संप्रार्थ्य मन्त्रविम्बे कनिक्रदादि, वास्तोष्पत्यादिहुतसम्पातद्वयं बिम्वहृदये समर्पयेत्। ततः सर्वेषु स्वस्वगायत्र्या स्थूलं, स्वस्वमूलेन सूक्ष्मं, तारेण परं च रूपं अणुबिम्बात् उद्वासनारूपेण कलशे आवाहयेत्। तत्र स्थूलावाहने गायत्रीस्थाने स्वस्वोपचारैर्वाऽऽवाहयेत्। हरौ- अष्टाक्षरद्वादशाक्षरप्रणवैर्वा, हरे षडक्षरप्रासादप्रणवैर्वा स्थूलसूक्ष्मरूपाणि चावाहयेत्। स्वस्वमूलमन्त्रन्यासान्तं कर्म विधाय किञ्चित् यजेत्।

**जीवोद्वासनप्रकारसूचना**- शङ्खे जलं प्रपूर्य स्वमूलमन्त्रसमर्चि तेन जलेन प्रतिमाया हृदयारविन्दात् आवाह्य कलशमूर्तौ संयोज्य होमक्रमेण क्षेत्रपालादिकं निर्माल्यधार्यादिकं चोक्त्वा सृष्टिसंहारक्रमेण मूलपुटितपञ्चतत्त्वानि चोक्त्वा जलं पादादिद्वादशान्तस्थपरमात्मपर्यन्तं नीत्वा कलशस्थमूर्तौ प्राणन्यासवर्जमावाह्य सकलीकरणाद्यं विधाय किञ्चिदिष्ट्वा निवेद्य तत्रत्यं देवं प्रीणयेत्। ईशेतु- (वीज) बिन्दुनादशक्तिशान्तप्रकाशितैः प्रणवपुटितैः पञ्चव्रह्ममहितैः पञ्चतत्त्वैरेवावाहनविधिं कुर्यात्। पुनः सर्वत्र सुवाससा दर्भदामयुक्तेनाच्छाद्य कनिक्रदादिहुतसम्पातं समर्प्य उत्तिष्ठमनुं जपन् कलशमुत्थाप्य उष्णीषं वध्वा जीवकुम्भं शिरसि अधिरोप्य तस्मान्निर्गत्य शाकुनसूक्तकनिक्रदादिसूक्तानि जपन् प्रासादं पर्येत्य लघुमण्डपं पर्येत्य द्वारि अर्घ्यं दत्वा अन्तरुपनिनीय शय्यामारोप्य समर्च्य रक्षेत्। बिम्बत्यागपक्षस्तु उत्तरत्र वक्ष्यते।

**बालालयपक्षः**- सुविशोधिते अल्पगेहे अल्पपीठं संशोध्याल्पविम्बं सजीवकुम्भमधिवास्य संरक्ष्य जीवकलशसन्निधौ विनिद्रः रात्रिं गमयेत्। प्रभाते नान्दीमुखादिक्रमतः अल्पपीठं प्रतिष्ठाप्य संरक्ष्य पूजितबिम्बे[1] अखिलमुद्राग्य बिम्बघटक्रमेण उक्तवन्नीत्वा परावाहनपूजनादि कृत्वा उक्तनीत्यां विम्बं प्रतिष्ठाप्य निद्राघटस्नपनान्तं कर्म विधाय, भगवन्नल्पगेहेऽस्मिन् वासक्लेशोऽपि ते हरे। वस्तव्यो भगवंस्तावत् यावद्गेहं समाप्यते। कारकस्य परामृद्धिमनुजानन् महोदयाम। भक्तानामनुकम्पार्थं इह त्वं स्थातुमर्हसि इति संप्रार्थ्य जीवकलशेन सिञ्चेत्। प्राणन्यासादिकं च कुर्यात्। देवतान्तरेषु ऊहः कार्यः। विम्बपक्षे- यावद्बिम्बंसमाप्यते- इत्यूह्यम्। पुनरत्र स्थूलावाहनपुरःसरं सर्वकर्म निर्वर्त्य देवमभिपूज्य चरुं निवेद्य परिषद्बलिं दत्वा देवं परितोष्य द्वारं पिधाय पूर्ववत् त्रिदिनं गमयेत्। चतुर्थेऽहनि स्नपनाद्युत्सवान्तं पूर्वोक्तं सकलं कर्मात्रापि कुर्यात्। किन्त्वस्मिन् पक्षे नपुंसकशिला इष्टकोपधानादिकं न कार्यम्। पुनः बिम्बे रचिते पीठनपुंसकशिलासहिते, कारुकरतः विम्बं परिगृह्य जलेऽधिवास्य प्रासादशुद्ध्यादिपुण्याहान्तं कृत्वा बिम्बं जलादुद्धृत्य बिम्बशुद्धिकलशैरभिषिच्य अग्रस्थितसंस्कृतमण्डपे शय्यायामधिवास्य तत्पार्श्वे अल्पबिम्बस्थचैतन्यं सूत्रच्छेदोक्तमार्गेण संहृतितत्त्वहोमपुरस्सरं प्रार्थ्य जीवकलशे अभिवाह्यानीय रक्षेत्। पुनः यात्रां कुरुष्व देवेश भक्तानामनुकम्पया। जीर्णमुद्धृत्य तत् भक्तैः कल्पितं विम्बमुज्ज्वलम्। गृहे तु- तेन गेहं विशाद्येश उत्तिष्ठ शिखिवाहन। जीर्णमुद्धृत्य . . . . मुज्ज्वलम्। अन्यत्रोहयेत्। वक्ष्यमाणविधिना बिम्बमुत्पाट्य बहिरुपनीय दारवं चेत् गोसर्पिस्नपितं कृत्वा अग्नौ निर्माल्यधारिणमावाह्य दहेत्। लोहं चेत् विद्राव्य लोहं गुरवे दद्यात्। अथवा नालं छित्वा कौतुकं कुर्यात्। पुनः पूर्वेद्युः पीठाधिवासादियुक्तं प्रतिमाधिवासं विधाय परेद्युः कृतरत्नन्यासे पीठे विम्बमानीय प्रतिष्ठाप्य कुम्भेशनिद्राकलशजीवकलशैरभिषिञ्चेत्। **बिम्बमात्रजीर्णौ**- यत्र एकेनैवाह्ना उक्तं कर्म निर्मातुं शक्यं, बिम्बमात्रस्य वैकल्यं चेत् तत्राप्येवं प्रोद्धास्य, जीवकलशं कृतजलाधिवासाद्यया मूर्त्या सहाग्रमण्डपेऽधिवास्य विशीर्णां प्रतिमां पीठादिभिः सह यथोक्तप्रकारेणोद्धृत्य त्यक्त्वा कृतप्रासादशुद्ध्यादिके कृतरत्नन्यासे च प्रासादे संस्थाप्य जीवावाहनकाले जीवकलशाभिषेकाद्यं कुर्यात्।

---

1 **मूलबिम्बवत् अधिवासहोमादि कृत्वा देवमभ्यर्च्येत्यादिना पूजितबिम्बे।**

**प्रासादमात्रवैकल्ये** - प्रासादमात्रजीर्णौ तस्य चिरकालेनैव कर्तुं शक्यत्वे च तत्रोक्तकर्मणां मध्ये सूत्रच्छेदमेकमेव कर्म मुक्त्वा अन्यत्सकलं कर्म विधाय उद्वासनात्पूर्वं, "नमस्ते सर्वलोकेश भूतानामभयप्रद। भक्तप्रिय नमस्तेऽस्तु प्रसीद भुवनेश्वर आगच्छ देव देवेश सर्वकारणकारण। नवीकरणसिद्ध्यर्थं कुम्भेऽस्मिन्सन्निधिं कुरु" इति प्रार्थ्य तं देवं जीवकलशे संयोज्य बहिर्नीत्वा अल्पगेहे स्थापयित्वा मूलबिम्बं परिरक्ष्य प्रासादं निर्माप्य कारुकरतः परिगृह्य परिशोध्य प्रासादे स्थितं बिम्बं संहृत्य अग्निमयं परिकल्प्य जलाधिवासशुद्ध्या[1] वारुणवारिणा स्नापयित्वा स्वकाले बद्धकौतुकं अर्चितपीठे सम्भाव्यावाह्य तत्रैव बिम्बघटाभिषेकाद्यं कृत्वा अग्राहितमण्डपे शय्यायां न्यस्ते जीवघटे बिम्बे च सम्पूज्य विधिवदधिवास्य मण्डपे एव हुत्वा तत् सम्पातं जीवकलशे बिम्बे च संयोज्य पूर्वोक्तवत् सर्वं कर्म निर्माय उत्तरदिवसे रत्नन्यासादिकं मनसा विधाय जीवघटाद्यखिलं गर्भालयं नीत्वा पीठे प्रतिष्ठापनं मनसा कल्पयित्वा जीवन्यासविधौ जीवकलशेनाभिषिच्य पूर्वोक्तवत् कर्मकलापं कुर्यात्

**सङ्कोचपक्षः**- प्रासादमात्रजीर्णौ निष्क्रमणात् सङ्कोचे विशेषज्ञः निष्क्रमणप्रधानत्वेन विहितं विधिं मुक्त्वा शेषकर्म विधाय " देवेश" इति सम्प्रार्थ्य तथा पूर्वोक्तप्रकारेण तत्त्वकलशेनाभिषिच्य सङ्कोचमाचरेत्। मासादधिकः प्रासादकरणकालश्चेत् निष्क्रमणम्। ततोऽर्वाक् चेत् सङ्कोचपक्षः इति विकल्पाभिप्रायः। " देवेश प्रतिमामूर्ते तन्त्रमूर्ते परावरे। अत्र सङ्कुचितो भूत्वा वासं कुरु तवाज्ञया। " इति प्रार्थनं कृत्वा, स्वयं देवाभेदेन स्थित्वा देवस्य तेजसि, महाप्रासादपर्यन्तं बहिरङ्गादन्तरङ्गाच्चोक्तक्रमेण बाह्यपद्मादन्तःपद्मादाकृष्य स्वस्मिन् चैतन्यमात्रे सुयोजिते सति स्वस्येच्छाशक्तेरुद्भूतं तदावारकं ऊर्ध्वाधःक्रमात् पद्मयुगं ध्यात्वा देवात् स्वस्य भेदं भावयित्वा आधारपद्माग्रदलमध्यास्य ऊर्ध्वारविन्दात् च्योतद्भिरमृतमयैरुपहारैर्देवं प्रतर्प्य गुरूपदेशक्रमात् देवमूर्ध्नि पद्मविकसनपर्यन्तं ब्रह्मरन्ध्रे निपतन्तीं सुधाधारां साधु विचिन्त्य स्वयं तस्मात् बहिष्ठो भूत्वा तदम्बुजं मुकुलितं कुर्यात्। ऊर्ध्वाब्जेनावतार्य अधोभागं नीत्वा आधाराम्बुजं कवलितं कृत्वा त्रिगुणात्मकेन सत्वरजस्तमोमयतन्तुरूपेण मपरेण संवेष्ट्य तद्बहिरस्त्रतेजसा चारक्ष्य स्वस्मादुद्गतसुषुम्नानाड्या मार्गस्य विश्रान्त्या छेदेन हेतुना स्वस्मिन्नेव स्थितो

1 बुद्ध्या।

भूत्वा वस्त्राद्यैरावृतामर्चां परिरक्ष्य प्रासादं तक्षभिर्यथावत्कारयेत्। पुनः प्रासादे कृते प्रासादं शोधायित्वा तद्विम्वं क्षालनादिमप्तशुद्धिभिः प्रायश्चित्तादिहोमैः कृते प्रासादं शोधयित्वा तद्बिम्ब क्षालनादिसप्तशुद्धिभिः प्रायशित्तादिहोमैः कलशस्ना नादिभिश्च शोधयेत्। इह शोधनसमये धारायामारभ्यमाणायां पद्मयोः सङ्कोचमपनयेत्। [1] **बिम्बत्यागपक्षः**- बिम्बत्यागपक्षे प्रासादाग्रत अग्निं प्रतिष्ठाप्य तद्दक्षिणतः शान्तिकलशं प्रतिष्ठाप्य अन्वाधाय सावित्र्या त्रिमध्वाप्लुतदूर्वाभिः अष्टसहस्रं जुहुयात्। व्याहृतिभिः क्षीरवृक्षाणां समिद्भिर्वा जुहुयात्। तत्सम्पातं शान्तिकलशे निषिच्य प्रातिलोम्येनाष्टशः पञ्चतत्त्वैर्जुहुयात् ससम्पातम्। संहारक्रमतः तत्त्वहोमे कृते शान्तिघटेनाभिषिच्य पायसनिवेदनाद्यं वा कुर्यात्। तत्त्वघटेन सिक्त्वा जीवकलशे उद्वास्य देवं बहिर्नीत्वा शान्तिजलेनाभिषिच्य बिम्बसमुद्धृतिं वितनुयाद्वा। बिम्बमुज्जिहीर्षुः- विप्रोत्तमैः सह देवं प्रणिपत्य पुरःस्थितः अनन्यचेताः शान्तिं प्रवाचयेत्। यथा-शान्तिरस्तु शिवं चास्तु पुष्टिरस्तु सुमङ्गलम्। स्वस्ति चास्तु समृद्धयस्तु सर्वेषां सन्तु सम्पदः। गोब्राह्मणेभ्यः क्षत्रेभ्यः विट्शूद्रेभ्यस्तथैव च । लोकेभ्यः सर्वभूतेभ्यः राज्ञे जनपदाय च। ग्रामाय यजमानाय गुरवेऽस्मै गृहाय च। बिम्वोद्धारविधेरस्तु साकल्यमिह सर्वदा। इति प्रार्थ्य गुरुः स्वयं गर्भागारं प्रविश्य पुण्याहं कृत्वा यजमानस्य मूर्तिपानां च कौतुकं बध्वा सर्वानारक्ष्य पूर्वहुतसंहृतिपञ्चतत्त्वहोमसम्पातान्वितैः पुष्पैः सह प्रतिमागतां वासनाशक्तिं प्रणवतः भास्करमण्डले प्रोद्वासयेत्। उद्धारकाले उच्छ्वं चस्व, नासदासीत्, आतेपितः, सहस्रशीर्षेत्यादि सूक्तं मूलमन्त्रं चावर्तयेत्। पुनः निर्माल्यधारिणो मन्त्रेण सकलीकृतो भूत्वा पशुबालरोमकुशादिभिः कृतरज्वा बद्धेन वृषेण सौवर्णलाङ्गलमुखेन पीठबन्धं विदार्य बिम्वं प्रोद्धारयेत्। शिवे-पीठस्य अध एव विदारणं कृत्वा पूर्वं पीठमपास्य बिम्बोद्धारः कार्यः। पीठिकाबन्धविश्लेषे स्वस्य मूलमन्त्रः। बिम्वसमुद्धृतौ भूर्भुवस्सुवरोमिति मन्त्रः। अत्र पीठे याम्यशिरस्कं शाययित्वा क्षालयित्वा मनागिष्ट्वा वासनां पूर्ववदुद्वास्य वस्त्राच्छादितशिरःपूर्वकं बहिर्नीत्वा प्रासाददक्षिणस्थमण्डले स्थण्डिलं कृत्वा सिकता दर्भांश्च विन्यस्य दक्षिणशिरस्कं न्यस्य तिलाक्षतान् विकिरन् अपसव्येन बिम्बं त्रिधा पर्येतु। पुनर्वस्त्रादि विसृज्याभिषिच्य किञ्चिदुपहृत्य तत्स्थां शेषवासनामपि रवौ समुद्वास्य वाससा

---

1 तत्वहोमकलशस्नानादिकमेव पद्मद्वयस्य सङ्कोचविकासादिकमित्यर्थः।

कुशैश्च सुवेष्ट्य नद्यादिजलाशयं गच्छेत्। अगाधे जले इष्टपीठे निर्माल्यंधारिणं तत्तन्मन्त्रेणावाह्य सम्पूज्य बिम्बं तदधीनं कृत्वा अप्सु प्रक्षिपेत्। कर्त्रा सह स्नात्वा यथाविधानं स्वमूलमन्त्रेण तर्पयेत्। पुनरागत्य पीठनपुंसकशिलाद्यमपनीय मूलप्रासादमभिरक्ष्य सजीवकुम्भाल्पबिम्बप्रतिष्ठादि सर्वं कर्म कुर्यात्

**अष्टबन्धे जीर्णे**- प्रासादशुद्ध्यादिभूतबलिपर्यन्तां शुद्धिं कृत्वा पूजामन्त्रहोमान्ते संहारमार्गेण नवशक्तिहुतसम्पातं स्वीकृत्य पुनः सृष्टिक्रमेण नवशक्तिभिर्यथाशक्त्याज्यं हुत्वा चतुर्द्रव्यहोमस्विष्टकृदादिहोमं समाप्यान्तर्गत्वा संहारसम्पातेन जीर्णाष्टवन्धचैतन्यं प्रणवेन देवे व्याप्य उद्वास्य जीर्णाष्टवन्धमलं परिशोद्ध्याभिषिच्य रत्नसुवर्णसिकताभिस्तद्विवरं प्रपूर्य बीजेन शक्तिं मूलेन पुरुषमावाह्य पीठे बिम्बे च लिपिन्यासादिभिः सकलीकृत्य पुण्याहं विधाय सृष्टिमार्गेण हुतनवशक्तिसम्पातं समर्प्य पूर्वोक्तक्रमेणाष्टबन्धं कृत्वा प्रणवव्यापकेनान्योन्यमेलनं विभाव्य मूलेन देवमावाह्य सकलीकृत्य चतुर्थदिनीयस्नपनादि कुर्यात्। नात्र कवाटबन्धनादिकं, मूलबिम्बे एव त्रिदिनं यावत्पूजनम्।

**परिवारजीर्णोद्धारः**- वलिपीठमहाध्वजादिजीर्तौ विहितैः देवस्य सप्तशुद्धिशेषैः होमकलशशेषैः जीर्णं पीठादिकं सुविशोध्य देवं समर्च्य भूतवलिं चाधाय देवाय अनुष्ठेयं विज्ञापयेत्। ततः बलिपीठादेः पुरतः स्वस्य देवस्य पञ्चतत्त्वैः संहारक्रमेण तत्त्वहोमं विधाय तत्तत्तत्त्वहोमघटेन तमभिषिच्य तस्मिन् स्वविभूतिसंहारमञ्जसा प्रकल्प्य तदग्रे परिपूरितकलशे सूत्रच्छेदविधानयुक्तं यथा भवति तथा अत्र स्थितां चितिमावाह्य कलशमन्तरुपनीय देवाग्रे गर्भालये सिक्त्वा न्मार्गेण देवं गमयेत्। पुनस्तत्सर्वं जले त्यक्त्वा गर्भन्यासादिविधिना पूर्ववदेव कारुणा कारयित्वा जलाधिवासबिम्बशुद्ध्यादिभिः संशोध्य पूर्वोक्तवदधिवास्य प्रतिष्ठादि सर्वं कुर्यात्। चतुर्थदिने देवस्नपनं तदवस्रावप्रोक्षणं बलिदानमुत्सवादिकं च कुर्यात्। पूर्वं प्रायश्चित्तप्रकरणेऽनुक्तानि कानिचित् प्रायश्चित्तानि वक्ष्यामः- वीजाङ्कुरादिनाशे- तच्चैतन्यमादर्शे सुवर्णे वा समुद्वास्य दुष्टं सर्वं त्यक्त्वा स्नात्वा पुनः वीजावापं कृत्वा तच्चैतन्यं पुनस्तत्र सङ्क्रमय्य पञ्चतत्त्वैः पञ्चविंशतिसंख्यं घृतं हुत्वा तत्सम्पातं वीजे समर्प्य मूलेनावाह्य यजेत्। दिनत्रयात् प्राक् चेत् पुनर्वीजावापः अनन्तरं चेत् तण्डुलावाप इति विशेषः। अत्र प्रायश्चित्तहोमे

प्रणवव्याहृदिपीठमन्त्रैर्हुत्वा मूलेनाष्टवारमाज्यं हुत्वा पूर्वोक्तपञ्चतत्त्वहोमे कृते पुनर्मूलेनाष्टवारं हुत्वा पूजामन्त्रव्याहृतिप्रणवैर्जुहुयादिति विशेषः। अङ्कुरेषु श्यामवर्णेषु तिर्यक्प्रसृतेष्वपि केचित् पुनर्वापमिच्छन्ति। परे प्रायश्चित्तहोममात्रमिच्छन्ति। बलिदेवताद्रव्यव्यत्यामे तल्लोपे वा सवनत्रयपूजाकालातिक्रमे च मूलेनाष्टशतमाज्यं जुहुयात्। ध्वजोपघाते- नन्द्यादि तत्तन्मन्त्रैरष्टशतमाज्यं जुहुयात्।

**अग्निविनाशप्रायश्चित्तम्**- सामान्यतः स्थापिताग्नेर्विनाशे सति तत्रस्थं भस्म हृत्वा तदन्तर्भागं गोमयपिण्डेन त्रिस्त्रिधा विशोध्य अग्निं निक्षिप्य अष्टगुणितप्रणवाहुतिभिर्गर्भाधानादिसंस्कारं विधाय स्रुचि चतुर्गृहीतेनाज्येन **"मनोज्योति"** रिति मन्त्रेण हुत्वा भूरादिभिः पञ्चतत्त्वैश्च स्रुवेण हुत्वा मुलमन्त्रेणावाह्य परिपूज्य मूलेन अस्त्रेण चाष्टोत्तरशताज्याहुतीर्जुहुयात्। यद्यग्निरशुद्धो भवति तमग्निं दर्पणे प्रतिफलय्य दर्पणे क्षालनाद्याः सप्तशुद्धीः कृत्वा ततोऽन्यतः आदर्शहिरण्यादौ उद्वास्य अशुद्धस्थलगतैर्भस्मादिभिः सहितं हुतवहं सन्त्यज्य गोमयजलेनालिप्य पुनरग्निं जनयित्वा पीठपूजानन्तरं मूर्तिकल्पनायां कृतायां शुद्धां आदर्शादिषु स्थितां अग्निचितिं अनले योजयित्वा पूर्वोक्ताग्निनाशप्रायश्चित्तीयमनस्वत्याद्याज्याहुतीर्जुहुयात्। अग्निनाशप्रायश्चित्तानन्तरं अग्नये पवमानाय स्वाहा, अग्नये पावकाय स्वाहा, अग्नये शुचये स्वाहा इति मन्त्रत्रयेणाशुद्धेर्बलाबलं ज्ञात्वा स्रुवेण चतुर्गृहीताज्ययुक्तस्रुचा वा जुहुयात्। अथवा अग्न आयूंषि, अग्ने पवस्व, अग्ने पावकरोचिषा, सनः पावक दीदिवः, अग्निः शुचिव्रततमः, उदग्ने शुचयस्तव इति द्वौ द्वौ मन्त्रावुक्त्वा तिष्ठन् विधिवत् पूर्णां जुहुयात्। **विहृताग्निनाशे**- अधिवासादिषु विहृताग्नीनां नाशे तदानीमेव भस्मादिकं परित्यऽज्य गोमयपिण्डेन विशुद्धे आचार्यकुण्डात् पूर्ववदग्निं निधाय निक्षिप्ताग्नौ आज्ये सिद्धे सति एकां समिधं हुत्वा स्रुचि चतुर्गृहीतमाज्यं कृत्वा पूर्वदक्षिणोत्तरदिक्कुण्डेषु क्रमात् पञ्चहोता, चतुर्होता, षड्ढोता मन्त्रेण, पश्चिमकुण्डे कोणस्थकुण्डेषु च मनस्वतीमन्त्रेण जुहुयात्। आचार्यः स्वीयाग्नौ ब्राह्मण एकहोता इत्यादिदशमन्त्रैर्दशाहुतीः स्रुवेण जुहुयात्। पुनः विहृताग्नौ व्याहृतिपञ्चतत्त्वैर्नवभिर्मन्त्रैः अन्तरान्तरा पूर्णाहुतिसहितं प्रत्येकमष्टशः स्रुवाहुतिं जुहुयात्। आचार्यकुण्डाग्नौ मूलमन्त्रेणाष्टोत्तरशतघृताहुतीर्जुहुयात्।

आचार्यकुण्डस्थाग्नौ नष्टे उत्तरदिग्गतकुण्डात् अखिलमग्निमाचार्यकुण्डे निधाय गर्भाधानादिसंस्कारं विधाय पूर्वोक्तसामान्यनाशप्रायश्चित्तं विधाय उदक्कुण्डेग्निं प्रणीय अस्य स्वनाशोक्तं प्रायश्चित्तं कृत्वा मूलाग्नौ तद्वत् ब्राह्मण एकहोता, अग्निर्द्विहोता, पृथिवी त्रिहोता, अन्तरिक्षश्चतुर्होता, वायुः पञ्चहोता, चन्द्रमाः षड्ढोता, अन्नं सप्तहोता, द्यौरष्टहोता, आदित्यो नवहोता, प्रजापतिर्दशहोता इति मन्त्रैर्दशाहुतीर्जुहुयात्।

आचार्यकुण्डोदक्कुण्डस्थयोर्द्वयोरग्न्योर्नाशे तु। तु विधिवदाचार्यः स्वकुण्डेऽग्निमुत्पाद्य चित्तिःस्रुक्प्रमुखैः दशहोतृचतुर्होतृ-पञ्चहोतृषड्ढोतृसप्तहोतृवाग्घोतृणां मन्त्रै चित्तिः स्रुक् पृथिवीहोता, अग्निर्होता, सूर्यन्ते, महाहविः, वाग्घोता इति षड्भिर्होतृभिः पृथक् चतुरवत्ताज्यं हुत्वा पुनरेकहोत्रादिमन्त्रैः स्रुवेण दशाहुतीर्जुहुयात्। भूराद्यैश्चतुर्भिश्चतुर्गृहीतं पृथगष्टधा मन्त्रं चोक्त्वा जुहुयात्। पञ्चतत्त्वैः प्रत्येकं चतुरवत्ताज्यं विभज्याष्टधा हुत्वा मूलेनाष्टोत्तरशतं जुहुयात्। पुनरुदक्कुण्डेऽग्निं नीत्वा पुनः तन्नाशविहितप्रायश्चित्तं कृत्वा मूलाग्नौ एकहोत्रादिमन्त्रैर्दशाहुतीर्जुहुयात्। तत्त्वहोमादिषु प्रधानाग्निनाशे दोषयुक्ते वा आचार्यकुण्डाग्निनाशवत् सर्वं प्रायश्चित्तं कुर्यात्। प्रायश्चित्ताऽपरिज्ञाते मनोज्योतिः, अयाश्चाग्ने, यदस्मिन् कर्मणि, स्वस्ति नः, मिन्दाहुतिद्वयं व्याहृतयश्च दश सर्वनिष्कृतयः भवन्ति। विंशतिगुञ्जामितं सुवर्णं सर्वप्रायश्चित्ततया दद्यात्। कर्ममध्ये अन्तरागमने मनस्वतीं जूहुयात्। दोषाधिक्ये पञ्चदुर्गामनस्वतीव्याहृतिभिर्वा पूर्णाहुतिः कार्या। पूजितकलशे अशुचित्वमापन्ने तेन कलशेन हिरण्ये अभिषिच्य सप्तशुद्धीः कृत्वा तत्स्थानं विशोध्य तत्रैव पूरितान्यकलशे संयोज्य तत्पुरतोऽग्निं प्रतिष्ठाप्य तत्र, अधि वासाग्नौ वा स्वैः पञ्चतत्त्वैः पृथगष्टवारमाज्यं स्रुवेण, चतुर्गृहीताज्यवता स्रुचेन वा हुत्वा स्वमूलेन स्वास्त्रेण चाष्टोत्तरशतं घृतं हुत्वा सम्पातं कलशे समर्प्य तावज्जपेत्। तेन यथाविधि अभिषिञ्चेत्। घटे भिन्ने तु अन्यं कलशं संस्थाप्य शेषो लभ्यते चेत् तच्छेषेण अन्यजलैर्वा प्रपूर्य इष्ट्वा पञ्चतत्त्वमन्त्रैः स्रुवाहुतिं हुत्वा विधिवत् शेषं कुर्यात्। कलशे जलादिरहिते तु पुनर्मूलमन्त्राभिमन्त्रितजलपूरणं पूजनं च कुर्यात्। एकदेशकलशस्नपने कृते उपहतिश्चेत् कलशे मन्त्रबिम्बे च प्रायश्चित्ताहुतिसम्पातस्पर्शनं कुर्यात्। जीवकुम्भनिद्राकलशब्रह्म-कलशतत्त्वकलशानामुपघाते मिन्दाहुतिं (पूर्वोक्तं प्रायश्चित्तं) कुर्यात्।

वल्यर्थ नीयमाने कर्मबिम्बे दुष्टे निपतिते वा अत्रैव स्थले तन्निधाय सप्तशुद्धीः कृत्वा पञ्चतत्त्वमूलास्त्रादिभिः पूर्वोक्तैर्युक्तितो हुत्वा वलिकौतुके सम्पातं संस्पृश्य कर्मशेषं समाप्य अन्तर्गत्वा मूलबिम्बे योजयित्वा दोषानुसारेण प्रायश्चित्तं कुर्यात् कर्मबिम्बे मार्गमध्ये भग्ने तु ततोऽन्यबिम्बे देवं संयोज्य सप्तशुद्ध्यनन्तरं पञ्चतत्वहोमाद्युक्तं प्रायश्चित्तं कृत्वा शेषं समाप्य मूलबिम्बे नीत्वा सम्यक् प्रायश्चित्तमाचरेत्। सामान्यतः प्रायश्चित्तौ भूरादिव्याहृतिभिः चतुर्गृहीतं हुत्वा मनस्वतीदशाहुतीर्हुत्वा पञ्चतत्त्वमूलास्त्रहोमद्विजतर्पणादिकं कुर्यात्। अनुक्तप्रायश्तित्तेषु मेधया, उक्तेषु प्रायश्चित्तेषु अन्यतमप्रायश्चित्तमाचरेत्।

नरसिंहतनूजेन वासुदेवेन धीमता।
अनुष्ठानस्य पद्धत्याः शेषो विलिखितो ह्यभूत्।



**उत्सवः-** (परिशिष्टम्) वक्ष्याम्युत्सवमादितः (मुर) पुरभिदः सम्प्रीतिदं वृद्धिदं पुण्यं पापहरं च वत्सरकृतं षण्मासमर्धं ततः। मासं पक्षमसम्भवे परिमितं स्याद्द्वादशाहं नवं सप्ताहं च ततश्च पञ्चदिवसं[1] योग्यं यथा कारयेत् १

आदौ गणाधीशमथार्चयित्वा पुण्याहनान्दीमुखविप्रघोषैः।[2]
बीजानि संक्षाल्य पृथक् क्रमेण रात्रौ वपेत्तत्तिलसर्षपादीन्[3] २

1 एकाहोत्सवत्रिदिनोत्सवावन्यत्र विहितौ, तयोः क्रमेण शैव इति गौण इति च नाम। तत्र कश्चन विशेष उक्तः सङ्ग्रहे। त्रिरात्रे चैकरात्रे च दीक्षाकर्म न कारयेत्। त्रिदिने ध्वजबन्धः स्याद्वपनं कौतुकादिकम। एकोत्सवे न कुर्याच्च वपनं कौतुकं ध्वजम् इति च। 2 नान्दीविशेषो लक्षणसंहितायां द्रष्टव्यः। 3 अङ्कुरार्पणं पूर्वमुक्तम्। अन्यथाऽप्यन्यत्रोक्तम्। तथाहि- अतःपरं प्रवक्ष्यामि मङ्गलाङ्कुरमुत्तमम्। उत्सवे स्नपने चैव स्थापने प्रोक्षणे तथा। अन्यस्मिन् मङ्गले कार्ये मङ्गलाङ्कुरमुच्यते। ध्वजाङ्कुरं तु प्रथमं द्वितीयं चोत्सवाङ्कुरम्। तीर्थाङ्कुरं तृतीयं स्यादुत्सवस्य विधीयते। मृत्तिकामानयेत् पुर्वं बीजनिर्वपणाय च। आचार्यः पुरतो गच्छेत् सर्वालङ्कारभूषितः। ....प्राङ्मुखोदङ्मुखो वाऽपि पश्चिमे दक्षिणेऽपि वा। गत्वा पुष्पवनं चापि नदीतीरमथापि वा। तटाकं वाऽथ वापीं वा चोद्धृत्य मृदमाहरेत्। ....यथाविधि समानीय बीजनिर्वापमाचरेत्। ....शिवमुद्दिश्य यत्कर्म क्रियते यत्र वै दिने। तस्मात् पूर्वं प्रयुञ्जीत नवमे सप्तमेऽपि वा। पञ्चमे त्रितये वाऽपि कुर्याद्वा बीजवापनम्। मृत्तिकाहरणं वक्ष्ये तच्छृणुष्व जनार्दन। चण्डेश्वरसमोपेतं सर्वालङ्कारशोभितम्। नानाध्वजसमायुक्तं नानाशस्त्रसमन्वितम्। प्रसूनैर्नाळिकेरैश्च दूर्वापुष्पाक्षतैर्युतम्। प्रोक्षयेद्वालुकामध्ये बीजमन्त्रमनुस्मरन्। प्रोक्षयेद्भूतल सम्यक् शिवतोयेन बुद्धिमान्। पुण्याहं वाचयित्वा तु अर्चयेद्धृदयेन तु। आवाहयेत्ततो भूमिं गन्धाद्यैरर्चयेद्धृदा। परितो लोकपानिष्ट्वा अस्त्रमन्त्रेण [भूमिमस्त्रेण) पूजयेत्। खात्वा च पुनरस्त्रेण खनिं तामक्षतेन वा। कुशेन वा परिस्तीर्य प्राङ्मुखो वाप्युदङ्मुखः। मृत्तिकां वालुकेनापि व्रीहिस्थाल्यां कुशोपरि। ईशानेन तु मन्त्रेण हृदा मौनेन निक्षिपेत्। पुनः प्रोक्ष्य हृदा मन्त्रैः पुष्पं तस्यां तु विन्यसेत्। शङ्खदुन्दुभिनिर्घोषैर्गीतनृत्तसमाकुलैः। एवं मृद्ग्रहणं प्रोक्तं तया चोत्सवमारभेत्। शरावाः पालिकाश्चैव घटिकाश्च त्रिधा भवेत्। सुवर्णं रजतं वाऽपि ताम्रजं मृण्मयं तु वा। सर्वेषां स्थापनं तेषां भवेद्यागगृहे तु वा। देवाग्रे पार्श्वयोश्चापि गोमयेनानुलेपयेत्। पुण्याहं तत्र

कुर्वीत ताम्बूलं दापयेत्पुनः। पञ्चगव्येन सम्प्रोक्ष्य सूत्रपातं तथा भवेत्। प्राचीनदशसूत्राणि दशोदीचीनि सूत्रकैः। मध्यमे च चतुर्दिक्षु तद्द्वयावृतिलाञ्छितम्। आदित्ये पार्श्वयोर्द्वन्द्वे यमे चैव जलाधिपे। सोमे च लोपयेदेवं पञ्चविंशतिसंख्यकम्। मध्यमे तु पदे कृत्वा शालिभिर्द्रोणसम्मितैः। तण्डुलैः शोभितं कृत्वा चाष्टपत्रं समालिखेत्। पूर्णकुम्भं तथा स्थाप्य सोमराजाधिदैवतम्। सकूर्चं सपिधानं च सवस्त्रं सहिरण्यकम्। गन्धाद्यैरर्चयेत्सोमं स्वनाम्ना चापि मन्त्रतः। द्विभुजं कुसुमोपेतं श्वेतपद्मोपरि स्थितम्। सर्वैराभरणैर्युक्तं मुक्ताभरणभूषितम्। किरीटकुण्डलोपेतं प्रभामण्डलमण्डितम्। कृत्तिकां दक्षिणे पार्श्वे रोहिणीं वामपार्श्वके। दुकूलवसनोपेतं सर्वाभरणभूषितम्। एवं ध्यात्वा विधानेन पूर्णं पूर्ववदाचरेत्। पायसं दापयेत्पश्चात् ताम्बूलं दापयेत्पुनः। ईशानेन तु मन्त्रेण पालिकादीनि विन्यसेत्। ईशो विरिञ्चो विष्णुश्च पालिकाद्यधिदेवताः। आदित्यश्चार्यकश्चैव विवस्वांश्च यमस्तथा। जलाधिपश्च मित्रश्च सोमश्च पृथिवी तथा। घटिकायां विशेषेण स्थानमेतत् प्रचोदितम्। हुताशनस्तथा पूषा पितृदौवारिकास्तथा। रोगो नागो दितिश्चैव ईशश्चाष्टौ प्रकीर्तिताः। तेषां स्थाने शरावाणि स्थापयेत् स्थापकोत्तमः। आपश्चैवापवत्सश्च सविता सावित्र एव च। इन्द्रो इन्द्रजयश्चैव रुद्रो रुद्रजयः क्रमात्। एते द्विपदभोक्तारो विदिक्ष्वष्ट स्थिताः सुराः। तेषां तु पालिकाश्चाष्टौ स्थाप्य बीजानि वापयेत्। नीवारमुद्गौ तिलमाषशिम्बकुळुत्थनिष्पाकसर्षपांश्च। सम्पाद्य धीमान् पयसाऽऽहृतेन संक्षाल्य विद्वान् शिवबीजमन्त्रैः। दळाग्रेषु च सर्वेषु लोकपालान् समर्चयेत्। मरुतो दळमध्ये तु दलमूले वसूनपि। एवं तदा समभ्यर्च्य स्वस्तिमङ्गलवाचकैः। कुम्भस्थेन जलेनैव नित्यं सम्प्रोक्षयेत्सुधीः। नित्यं सम्पूजयेद्गन्धतोयेनैव घटं पुनः। पिधायापिं पिधानेन स्वर्णगुप्ताभिधाप्तये [स्वर्णरौप्याद्यवाप्तये] एवमर्चनमुद्दिष्टं यावदुद्धरणान्तिकम्। निर्दिष्टदिवसे प्राप्ते सोममुद्वासयेत्सुधीः। अवक्राणि च शुभ्राणि सर्वसम्पत्कराणि च। धूम्राणि चाथ कुब्जानि श्रेयोविघ्नकराणि च। एवं ज्ञात्वा शुभं कुर्याच्छान्तिहोमं तु देशिकः। द्राविडसूक्ष्मसुप्रभेदेषु अङ्कुरार्पणम्। अशक्तौ पक्षान्तरमप्युक्तं यथा- प्रागग्रा उदगग्राश्च पञ्चरेखा विधाय च। मध्ये चतुष्के पद्मं च विलिखेत्सोमपूजने। परितः स्वस्तिकेष्वत्र पालिकादिचतुष्टयम। विष्णुब्रह्मेश्वरान् पूज्य सोमं सम्पूज्य मध्यमे। यवसर्षपमुदगाश्च निष्पावाश्च प्रियङ्गवः। माषकौलित्थशाल्यश्च तिला राजमाषास्तथा। आढकी श्यामकश्चैव बीजानि द्वादश स्मृताः। ब्रह्मरुद्रौ विष्णुवायू गुहेन्द्राग्निरविस्तथा। यमश्च वरुणश्चैव श्रीश्च सोमश्च देवताः। देवताभिर्वापयित्वा त्रियम्बकाय मन्त्रतः। त्रियम्बकाय शर्वाय शङ्कराय शिवाय च। सर्वलोकप्रधानाय शाश्वताय नमो नमः। पुरुषेण च संसिच्य वस्त्रेणाच्छाद्य यत्नतः। नीराज्य वाद्यघोषैश्च विकिरेच्च बलिं ततः इति।

भोरीं समुत्ताड्य ततः प्रभाते[1] तेनाह्वयामास समस्तदेवान्।
आचार्यऋत्विग्यजमानपूर्वं ब्रह्माणमेकं वृणुयाद्यथावत्[2]। ३
शुभे मुहूर्ते च शुभग्रहोदये ध्वजं समुत्थाप्य सकेतुयुक्तम्[3]।
ताम्बूलदानादि महाजनानां दत्वा वदेत् स्वस्ति जनौघयुक्तः ४

---

1 भेरीताडनस्यान्यत्र रात्रावुक्तेः सम्प्रदायमनुसृत्योत्तरत्र वक्ष्यते।

2 प्रभाते ऋत्विजो वृणुयात्। आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः। तथा त्वं मम यागेऽस्मिन्नाचार्यो भव सुव्रत इति वरणादिकेतुविसर्जनान्तं तत्तत्कर्म कर्तुमाचार्यं, यजमानः स्वर्गलोके देवानां धनदो यथा। तथा त्वं शिवयागेऽस्मिन् यजमानो हि सुव्रत। इति वरणादिकेतुविसर्जनान्तं तत्तद्द्रव्यं दातुं यजमानं, यथा चतुर्मुखो ब्रह्मा स्वर्गे लोके पितामहः। तद्धोमरक्षणार्थाय ब्रह्ममूर्तिमहं वृणे। इति ब्रह्माणं, दास्यामि वरणं विप्र अनुगृह्णीष्व मां विभो। न्यूनातिरेकविद्यागे सदस्यत्वं च मे विभो इति सदस्यं, मूर्तिपास्तु यथा स्वर्गे दिगीशा मूर्तिधारकाः। तथा त्वं मम यागेऽस्मिन् मूर्तिपं त्वामहं वृणे। इति मूर्तिपांश्च वृणुयात्।

3 ध्वजस्यावश्यकता उक्ता- कुम्भं शक्तिं महापीठं वाहनं ध्वजमेव च। पञ्चाङ्गसहितं देवं दृष्ट्वा पापैः प्रमुच्यते। हरदृष्टिसमुद्भूतज्वालातापोपशान्तये। पुरतः स्थापयेद्दण्डं दारुजं शैलजं तु वा इति। ध्वजस्थापनविधिर्यथा ध्वजस्थानमहं वक्ष्ये शृणु वह्ने विशेषतः। पीठगोपुरयोर्मध्ये पीठाग्रे वृषभाग्रतः। ध्वजस्थानमिदं प्रोक्तं ध्वजदण्डमथो शृणु। चन्दनं क्रमुकं वाऽपि देवदारुं च वेणुजम्। त्वक्सारमन्तःसारं वा दण्डं सङ्गृह्य देशिकः। वक्रं बालं च सन्त्यज्य कृमिकोटरवर्जितम्। प्रासादस्य समं वाऽपि गोपुरस्य समं तु वा। प्रासादग्रीवमानं वा वृषस्थानसमं तु वा। द्वितीयान्तं तृतीयान्तं गोपुरग्रीवकान्तकम्। विंशद्धस्तप्रमाणं वा द्वादशं दशहस्तकम्। आयामं ध्वजदण्डस्य प्रोक्तं मात्राङ्गुलेन तु। सप्तविंशाङ्गुलं नाहं ध्वजदण्डमथोत्तमम्। मध्यमं तु चतुर्विंशद्द्वाविंशत्तदसम्भवे। वेणुयष्टिं तथा ग्राह्यं पावकं चाव्रणं तथा। पञ्चपर्व क्षयं लोके षट्पर्व तु श्रियं लभेत्। सप्तपर्व क्षयं ग्रामे ह्यष्टकं सस्यवर्धनम्। नवपर्व कुलं हन्ति दश वै सर्व कामदम्। एकादशीसूत्रहानिर्द्वादशीपुष्टिकामदा। अत ऊर्ध्वं न कर्तव्यं हस्तमानमथोच्यते। अष्टषट्पञ्चमात्रं वा वेणुदण्डस्य नाहतम्। पञ्चांशं [शात्] द्वादशान्तं तं मूले नाहं विधाय च। एकांशेनोनमग्रं स्यात्तथा दण्डाग्रमिष्यते। उभयोर्योगसिद्ध्यर्थं स्कन्धत्रयमथारभेत्। स्कन्धद्वयं च तद्दैर्घ्यं द्वादशाङ्गुलमानतः। षट्त्रिंशत् स्तम्भपर्यन्तं स्कन्धदैर्घ्यं प्रकल्पयेत्। सप्ताङ्गुलं समारभ्य गायत्र्यर्णाङ्गुलावधि स्कन्धविस्तारमुद्दिष्टं मूलाग्रे च त्रिभागतः। अर्धेन वा त्रिपादेन दर्व्याकारो यथा तथा। मूलाग्रे सुषिरोपेते

दण्डयष्ट्यनुरूपतः। अर्धच्छिद्रं च यत् स्कन्धप्रान्ते यष्ट्यग्रदेशिके। दण्डप्रान्ते विधेयं स्याद्वलयं स्कन्ध एव वा। दण्डं चात्र प्रमाणं तु दण्डाग्रवलयस्थितः। तदग्रं वलयादूर्ध्वं यष्ट्यग्रं परिकीर्तितम्। रज्जुर्वलयसिद्धिः स्याज्ज्येष्ठाद्यङ्गुलिना हतः। ध्वजारोहणकार्ये तु दैर्घ्येण च समन्वितम्। कार्पासतन्तुजो रज्जुर्भवेद्दृढतरं समम्। तद्दण्डद्विगुणायाम [ : ] त्रिवृता ग्रन्थिवर्जिता [तः] दक्षिणेन क्रमेणैव वेष्टितं दर्भमालया। मालापल्लवसंयुक्तं यन्त्ररज्जुसमन्वितम्। वेद्यां चाब्जं प्रकर्तव्यं चतुरङ्गुलमानतः। चतुरष्टदलं पद्मं विकारदलमेव वा। वृत्तं वा चतुरस्रं वा विधाय दलवेशनम्। एवं पद्मं समासाद्य शुद्धदण्डे विधाय च। प्रासादपुरतो विद्वान् मण्डपे संस्कृते शुभे। मनोरम्येऽन्यदेशे वा कुण्डे वा द्वयसंयुते। मध्यमे वृषमादाय प्रोक्षयेद्धेतिना पुनः। सुवर्णदूर्वाङ्कुराभ्यां वृषगायत्रिमन्त्रतः। मूलन्यासं [मन्त्रं] षडङ्गं तु वक्ष्ये गायत्रिसंयुतम्। सप्तमस्वरसंयुक्तं वकारान्ते जनार्दन। बिन्दुनादसमायुक्तं मूलबीजं कथ्यते। वृषभाय नमश्चान्ते तारमाद्यं च शस्यते। वकारेण समायुक्तं हृदयादि प्रकल्पयेत्। तीक्ष्णशृङ्गाय विद्महे वेदपादाय धीमहे। तन्नो वृषः (भः) प्रचोदयात्। सर्वात्मनाऽत्मनाऽभ्युक्ष्य वृषभं तत्र निक्षिपेत्। वृषस्थानमलङ्कृत्य वितानध्वजचामरैः। फलपुष्पादिभिश्चैव धूपदीपैरलङ्कृतम्। उत्तराभिमुखो भूत्वा सुखासीनस्तु देशिकः। अङ्गन्यासं करन्यासं पूर्वोक्तविधिना चरेत्। ततो नवपदं कृत्वा कलशांस्तत्र विन्यसेत्। ससूत्रकूर्चवस्त्रेषु कलशेषु यथाक्रमम्। विद्येशान् पूजयेदष्ट मध्यमे कलशे तथा। वृषमुक्षं गोपतिं च शृङ्गिणं नन्दिनं तथा। ततो वृषपतिं चैव वृषभं शङ्कुकर्णकम्। महोदरं यजेत्तत्र मध्ये पूर्वादिषु क्रमात्। परितो लोकपालांश्च विधानेन समर्चयेत्। तस्याग्रे स्थण्डिलं कुर्याद्वालुकैर्हस्तमात्रकम्। शिवाग्निं जनयेद्धीमानग्निकार्योक्तमार्गतः। तत्रावाह्य वृषं साङ्गं उपहारैश्च पूजयेत्। बिल्वदारुसमित्सर्पिश्चरुलाजयवान् गुरुः। शतमर्धं तदर्धं वा वृषमूलेन देशिकः। वृषमूलेन हुत्वाऽथ कुर्याद्रक्षां समन्ततः। वृषाधिवासनं प्रोक्तं ध्वजस्यारोहणं शृणु। प्रातःकाले पटं पूज्य कलशांश्च यथाविधि। हुत्वा वसुशतं चाग्नौ पूर्णाहुतिमथाचरेत्। परिचारकमाहूय प्रोक्षयेदस्त्रवारिणा। एकवासःपरीतं च सोत्तरीयांशुमालिनम्। पात्रे तण्डुलपूर्णे तु विन्यस्तं ग्राहयेत् पटम्। शङ्खदुन्दुभिनिर्घोषैर्ब्रह्मघोषसमाकुलम्। शिबिकायां समारोप्य कुर्याद्ग्रामप्रदक्षिणम्। आचार्यश्चाग्रतो गच्छेद्यजमानस्तु पृष्ठतः। एवं प्रदक्षिणीकृत्य ध्वजस्थानमथानयेत्। ध्वजं सम्प्रोक्ष्य मूलेन तण्डुलोपरि संस्थितम्। पूजयित्वा विधानेन वृषगायत्रीमन्त्रतः। ग्राह्याधिवास्य कलशं वृषविद्येश्वरात्मकम्। घटान् ध्वजस्य तन्मध्ये वृषबिम्बं विनिक्षिपेत्। वृषगायत्रीमन्त्रेण प्रोक्षयेत् कलशोदकैः। पूजयित्वा यथान्यायं नैवेद्यान्तं विचक्षणः। ततो ध्वजं समुद्धृत्य यन्त्ररज्वा तु देशिकः। वृषमारोपयेत्पश्चात्सर्ववाद्यसमन्वितम्। ब्राह्मणेभ्यस्तदा दद्याद्दक्षिणाश्च विशेषतः। पटं बध्वा विधानेन योज्य मूलं तथैव च।

वेदान् पुनः सूक्तमथाम्त्रमन्त्रान् सम्यग्जपेयुर्बहुभिर्द्विजैश्च[1]।
ततोऽभिषेकं च महानिवेद्यं मनोहरैर्भक्षयुतैश्च भक्तैः ५

प्रदक्षिणक्रमेणैव वेष्टयेद्रज्जु सूत्रकैः। वृषध्वजावरोहान्तं द्विकालं पूजयेद्...। दिक्ष्वष्टसु बलिं दद्याद्ध्वजमूले यथाविधि। ध्वजस्य स्थापनं प्रोक्तं सर्वशान्तिकरं परम्। इति शैवे ध्वजारोपणम्। वामित्यादि षडङ्गानि। हेमालङ्कृतशान्तशृङ्गशिखरं लम्बिस्फुरच्चामरं प्रालेयाचलतुङ्गशृङ्गककुदं व्यालोलकर्णाञ्च (च) लम्। सास्नान्यस्तसुवर्णक्लृप्तविलसत्सत्सूत्रघण्टान्वितं चञ्चद्बालसमिन्दुसुन्दररुचिं मन्त्री महोक्षं स्मरेत्। ओं वृं वृषभाय नमः इति मूलम्। वैष्णवे विशेषः- गरुडं वाहनं चैव नागराजं तथैव च। नागशत्रुं महाघ्राणं तथा वै विष्णुवाहनम्। पक्षिराजं कुण्डलिनं तार्क्ष (क्ष्य) विद्येश्वरानिमान्। पूर्वादि कलशे मध्ये वैनतेयं समर्चयेत्। काश्यपऋषिः त्रिष्टुप्छन्दः गरुडो देवता। क्षामित्यादि षडङ्गानि। अमृतकलशयुक्तं कान्तिसम्पूर्णदेह सकलनिगमविद्यावेदशास्त्रार्थतत्वम्। सकलपृथुलपक्षं स्तूयमानान्कुलं सकलविषविनाशं चिन्तये पक्षिराजम्। ओं कं खं गं घं ङं वेनतेयाय स्वाहा। वैनतेयाय विद्महे पक्षिराजाय धीमहे तन्नो गरुडः प्रचोदयात्। गणपतौ- वाहनाय गणेशस्य महाचाषाय धीमते। मध्ये तु पार्षदेशानां भ्राजमानाय ते नमः। ओं मं महाचापाय नमः इति। इतरेषामुत्सवपटलात् ज्ञेयः। ध्वजारोहणानन्तरं ध्वजमूले पीठपूजां विधाय नवशक्तीः पूजयेत्- दीर्घबाला विशालाक्षी प्रबला स्थूलनासिका। व्योमान्तःस्था हेमवती भोगदा च सुखप्रदा। सर्वसम्पत्प्रदा चेति ध्वजस्य नवशक्तयः। ध्वजेशाय विद्महे दण्डहस्ताय धीमहे। तन्नो ध्वजः प्रचोदयात्। वामदेवऋषिः पङ्क्तिः छन्दःध्वजेशो देवता। ध्वामित्यादि षडङ्गानि। दण्डाकारं स्वर्णवर्णं त्रिनेत्रं व्योमान्तः-स्थं भीमरूपं हसन्तम्। रज्वाकारं चोग्रनादं ध्वजेशं वन्दे विश्वाधाररूपं प्रसन्नम्। ओं ह्रीं ध्वं ध्वजेशाय हु फट् (स्वाहा) । अथ नामपूजा- ध्वजेशाय। ध्वजाधिपतये। ध्वजाग्रस्थाय। ध्वजसङ्कर्मरहिताय। ध्वनियुक्ताय। ध्वान्तपदाय। धर्मवर्धनाय। धूमकेतवे। व्योमकेतवे। महाकेतवे। केतुरूपाय। वाहनाग्रस्थाय। वर्षातीताय। वाञ्छितार्थप्रदाय (वरप्रदाय)। व्योमान्तस्स्थाय। दीर्घदेहाय। दण्डाकाराय। धैर्ययुक्ताय। धैर्यप्रदाय। दण्डाक्षाय। दान्ताय। शान्ताय। शिशुवर्धनाय। श्रीप्रदाय। देवगेहाग्रनिलयाय। देवशिखरसाम्याय। सर्वदेवकेतवे। सर्वदेववाहकाय इति। त्रिनेत्राय नमस्तुभ्यं ध्वजाधिपतये नमः। वृषभाय नमस्तुभ्यमुत्सवस्य तु सिद्धये। ध्वजारोहणभूतोऽसौ हरस्यामिततेजसः। वृषभः प्रीयतां मह्यं सुरभेः कुलनन्दनः। इति प्रार्थयेत्। वृषाधिवासहोमं समिदाज्यचर्वाज्यैः कुर्वन्ति शिष्टाः। तथा क्वचित् ध्वजाधिवासहोममपि कुर्वन्ति। तत्रापि मूलेन चतुर्द्रव्याणि जुहुयुः। 1 अग्रमण्डपे गणपतिं सम्पूज्य वेदारम्भं कुर्यात्।

गम्भीरवाद्यैर्नटनर्तकाद्यैर्बहुप्रदीपैर्बहुभिः प्रसूनैः।
दिने दिनेऽप्येवमनेकभेदैरन्नाद्यमुख्यैश्च दिनानि तेनुः ६
तद्रात्रिरक्षोहणरज्जुवन्धमाशाधिपान् सम्यग्यजेच्च दिक्षु[1]।
तथोर्णसूत्रं[2] सहरिद्रखण्डमाचार्यऋत्विक्प्रभुभिश्च धृत्वा ७

1 तद्रात्रौ कर्तव्यरक्षोघ्नहोमवास्तुहोमदिशाहोमरज्जुबन्धनविधिः पूर्वमुक्तः। दीर्घोत्सवेऽस्मिन्नेव रात्रावङ्कुरार्पणं कुर्यात्। तथा चोक्तम्- उत्सवस्त्रिविधः प्रोक्तो भेरीताडनपूर्वकः। मङ्गलाङ्कुरपूर्वो वा ध्वाजादिर्वा यथाक्रमम्। दीर्घोत्सवे ध्वजादिः स्यादन्यो बीजाङ्कुरादिकः इति। अस्मिन्नेव दिने रात्रौ कर्तव्यभेरीताडनं यथा- अत उर्ध्वं प्रवक्ष्यामि भेरीसन्ताडनं परम्। रात्रौ भेरीं समुत्ताड्य सर्वदेवप्रियार्थिकाम्। स्थण्डिलं सुशुभं कुर्याद्देवदेवस्य सन्निधौ। पद्मत्न (डुत्थ) मासनं कुर्यान्मूले भेर्या गुरूत्तमः। तां भेरीं स्थण्डिले स्थाप्य नववस्त्रेण वेष्टिताम्। गन्धपुष्पाक्षतान् न्यस्य मध्ये रुद्रं समर्चयेत्। ब्रह्माणं दक्षिणे वक्त्रे विष्णुं वाममुखे यजेत्। वलये दक्षिणे सूर्यमुत्तरे चन्द्रमर्चयेत्। सप्तकीलेषु मातॄश्च नवकीले नवग्रहान्। रुद्रान् तत्संख्यके न्यस्त्वा चर्मसूत्रेषु वासुकिम्। प्रहारे षण्मुखं पूर्वं मस्तकेऽभ्यर्चयेत् क्रमात्। पटहो विष्णुदैवत्यः सुषिरो वायुदैवतः। तच्छब्दो ब्रह्मदैवत्यो रसनावास ईश्वरः। वासुकिश्चर्मसूत्रं तु वलयौ रविचन्द्रकौ। मातरः सप्तकीलं तु प्रहारः स्कन्ददैवतः। गन्धपुष्पादिभिर्दिव्यैर्नैवेद्यान्तं पृथक् पृथक्। भेरीसन्ताडनं कुर्यादस्त्रराजं तमुच्चरन्। ताडयेत् प्राणिनः [पाणिना] सर्वे [सर्व] वाद्यादीन् विविधानि च। आहूय वादकान् प्रोक्ष्य मन्त्रं पञ्चाक्षरं स्मरन्। वस्त्रं वै गन्धमाल्ये च सोत्तरीयं ससूत्रकम्। तद्धस्ते कुसुमं दद्यात् तत्तदस्त्रमनु [नुं] स्मरन्। भेर्यां पुष्पं विनिक्षिप्य देशिकानुज्ञया सह। वादकस्ताडयेत् पश्चान्नन्दिमन्त्रेण संयुतः। भेरीं स्कन्धे समारोप्य वादयेत् सर्वताळवित्। शिवादि सर्वदेवांश्च साष्टादशगु [ग] णान्वितान्। इन्द्रादिलोकपालांश्च समुद्रान् पर्वतानपि। सप्तद्वीपांश्च पाताळान् समाहूय विशेषतः। उत्सवाय भृशं पश्चाज्ज्ञापयेत्सकलं जनम्। वादकस्ताडयेत्पश्चाद्वलितालं विशेषतः। गेहनृत्तादिसंयुक्तं दिशातालं न लङ्घयेत। स्वच्छपुटं तु प्रथमं चापपुटं द्वितीयकम् (स्यात्)। इन्द्रस्य समतालं तु अग्नेर्बद्धापणं भवेत्। यमस्य भृङ्गिणी प्रोक्ता नैऋतं मल्लतालकम्। वारुण्यां तत्प्रहरकं वायव्यां मञ्जरी भवेत्। सोमे तु बलितालं तु ईशान्यां ड (घ) मरी भवेत्। एतैस्तालैश्च संयुक्तो वादकस्ताडयेत्ततः। कहाळः पटहः शङ्खो भेरी च जयघण्टिका। एते पञ्च महाशब्दाः पञ्चवाद्याः [द्यं] प्रकीर्तिताः [तम्]। वाद्यराज नमस्तेऽस्तु महागम्भीरनिःस्वन। देवसन्तोषकाराय पटहाय नमो नमः इति। 2 क्रमप्राप्तं कौतुकबन्धमाह तथेति-सर्ववाद्यैः सह त्रिशूलमादाय प्रासादं प्रविश्य कौतुकं बध्नीयात् यागमण्डपे वा। तदुक्तं-

ततो निवेद्यं च पुनः प्रकल्प्य नीराजनं चार्च्य विचित्रदीपैः।
ततो गुरुः सज्जलपात्रयुक्तो दद्याद्बलिं नित्यमथोत्सवस्य।
सम्मार्ज्य वीथीः शिबिकेन देवं निनीय दीपैर्बहुवाद्ययुक्तैः[1] [हृद्यैः] ८

उत्सवादौ प्रवक्ष्यामि कौतुकादेस्तु निर्णयम्। स्वर्णं राज्यप्रदं राज्ञो रौप्यं रोगहरं सुत। तन्तुस्तुष्टिप्रदो नृणां तस्मात्सूत्रं तु धारयेत्। चतुर्विंशाङ्गुलायामं नवग्रन्थिसमन्वितम्। नवतन्तुसमायुक्तं स्वर्णसूत्रक्रमोह्ययम्। षोडशाङ्गुलविस्तारं सप्तग्रन्थिसमन्वितम्। व्याळाकारेण तं कुर्यात्तावत्सूत्रसमन्वितम्। इति रौप्यमयं सूत्रं तन्तुसूत्रमथो शृणु। तन्तुं क्षौममयं श्रेष्ठं ग्रन्थित्रयसमन्वितम्। निशामूलयुतं कुर्याद्द्वादशाङ्गुलसंयुतम्। तन्तुं सम्यग्दृढीकृत्य तावत्सूत्रं तु योजयेत्। यावत्कुण्डमिते जाते तावद्ग्रन्थिं सुतोत्तम। तदलाभे निशामूलयुतं क्षौममयं तथा। उत्सवादौ प्रतिष्ठायां सर्वकर्मणि सुव्रत। रक्षार्थं विघ्ननाशार्थं कर्तव्यं मूलमन्त्रतः। अधमं चास्त्रशूलस्य देशिकादेस्तु मध्यमम्। होतॄणां मध्यमं चैव मूलबेरस्य चोत्तमम्। शूलदण्डस्य मध्ये तु मणिबन्धे स होतॄणाम्। सूत्रं तद्देशिकादीनां करमध्ये प्रशस्यते। बेरस्य दक्षिणे हस्ते सूत्रबन्धे त्विदं स्थलम्। घोषयात्रावुत्सवस्य वरणे बन्धकर्मणः। जीर्णोद्धृतौ तु सङ्कोचे प्रशस्तं कौतुकं नृणाम्। देवतास्तु ततो वक्ष्ये ग्रन्थिसूत्रादिभेदतः। महाशेषं च सूत्रेषु गौतमं ग्रन्थिषु प्रभो। निशामूले हिमांशुं च समावाह्यास्त्रमन्त्रतः। पूजाकाले तु सम्पूज्य ततःसम्प्रार्थ्य बन्धयेत्। शेषराज नमस्तेऽस्तु नमस्ते धरणीधर। सूत्ररूप नमस्तेऽस्तु सर्वमङ्गलदायक। इति सम्प्रार्थ्य सञ्जप्य मूलमन्त्रेण देशिकः। नवपञ्चत्रिवारं वा ममाग्रे मण्डपेपि वा। प्रासादे वाऽथ सूत्राणि बन्धयेद्भक्तिपूर्वकम्। प्रथमं देशिकेन्द्राय धनदाय द्वितीयकम्। तृतीयं तु सदस्याय सूत्रं धात्रे चतुर्थकम्। होतृभ्यः पञ्चमं बध्वा पूजादौ मूलशूलयोः। सूत्रबन्धक्रमो ह्येतत्प्रशस्तं यागकर्मणि इति। मध्ये मृतकादिपाते विशेष उक्तः- अथ सूत्रादिमध्येतु (मध्यान्ते) मृतजातादि मृतके। होतॄणां मृतकं चास्ति तथा धातृसदस्ययोः। धनादाचार्ययोर्नास्ति सूत्रान्ते सूतकं तयोः। मृतकं गुरुपुत्रादेः प्रमादाद्यदि सम्भवेत्। धनदाचार्ययोश्चास्ति सूत्रमध्ये न संशयः। तदा शिष्यं समाहूय विधिवत् ज्ञाप्य देशिकः। सेचयेद्द्विशतैः कुम्भैरष्टयुग्माधिकैः शिवम्। स शिष्यस्य द्वयोः सूत्रं बन्धयेन्मूलमन्त्रतः। सशिष्यस्तं प्रणम्याथ शेषकार्यं समाचरेत्।

1 अनन्तरं नैशिकीं पूजां कृत्वा उत्सवबलिं कुर्यात्। अत्र बहुवक्तव्यमुपयुक्तत्वात्। तत्रायं क्रमः- सृष्टिस्थितिविनाशानां कर्तर्भू [तृभू] तपते विभो। त्वत्पार्षदानां मुख्यानां (त्वत्पारिषदमुख्यानां) बलिदानाय (मादाय) शाधि माम्। इति देवं, नन्दिकेश्वर सर्वज्ञ चान्द्रायण परायण। देवदेवस्य वाह्यार्थं त्वमनुज्ञातुमर्हसि।

इति नन्दिनं च प्रार्थ्य शिष्यं नन्दिनं भावयित्वा तत्त्वसंख्याकजयघण्टा ताडनानन्तरं सर्वालङ्कारसंयुक्तामुत्सवप्रतिमां शिष्यहस्ते दत्वा सोष्णीषः सोत्तरीयः जलपात्रधरः शाकुनं सूक्तमुच्चरन् बहिर्गत्वा बलिं कुर्यात्। बलिपात्रलक्षणं यथा-चतुरङ्गुलविस्तारमुन्नतं तु त्रियङ्गुलम्। नाळं षडङ्गुलं प्रोक्तं पृष्ठमेकाङ्गुलं भवेत्। प्रस्थप्रमाणकं तोयं बलिपात्रस्य लक्षणम्। अथवा-पृष्ठमेकाङ्गुलं प्रोक्तमुन्नतिर्द्वाशाङ्गुला। गळमेकाङ्गुलं प्रोक्तमोष्ठं चोर्ध्वं तथैव च। वृत्ताकारं तथा वक्त्रं द्वादशाङ्गुलविस्तृतम्। द्वादशाङ्गुलिकं दण्डं दशार्णे परिपूरयेत्। बलिकर्मणि सम्प्रोक्तं जलपात्रं मनोहरम्। बलिकूर्चलक्षणं यथा- सप्ताङ्गुलमितं दण्डं ग्रन्थिरेकाङ्गुलः स्मृतः। दर्भैर्द्वादशभिः कुर्याद्बलिकूर्चस्य लक्षणम्। अन्यथाऽपि-एकाङ्गुलाग्रा शुकतुण्डनम्रा सचन्द्रचन्द्रार्धगुणैर्युताङ्गा। दशाङ्गुलीखण्डनखेन्दुनाळा द्वात्रिंशद्दर्भाबलिकूर्चिका स्यात्। वा-पञ्चविंशतिदर्भैस्तु बलिकूर्चं प्रशस्यते। अग्रे मध्ये च मूले च ब्रह्मविष्णुशिवात्मकम्। बलिद्रव्याणि-जम्बुर्द्रोणं च निर्गुण्डी बिल्वपत्रं च पाटली। पुन्नागं चम्पकं चैव बलिपत्रं प्रकीर्तितम्। अथवा- बलिद्रव्यं समुद्दिष्टं कूष्माण्डं मरळं तथा। प्रियङ्गुभाविकं जातं तमालं रम्भदण्डकम्। अन्नं हारिद्रमुद्दिष्टं रक्तवर्णं प्रकल्पयेत्। तथा- कूर्चेनाथ जलं दद्याद्वराहस्य च मुद्रया। विवृतेन तथाङ्गुल्या चरुं दद्याद्विचक्षणः। पुष्पं द्रव्यं चाभियोगे मुद्रया च प्रकल्पयेत्। मुखं तु जलपात्रस्य दक्षिणं हस्तमाश्रितम्। वामहस्ते गृहीत्वा तु कनिष्ठाङ्गुलिसक्थके। लयं पादस्य करणे लयका च [य] निरूपकम्। बहिर्विशेषभूतानां मण्डूकप्लवनं चरेत्। इति च। आचार्यस्तु बलिं दद्याद्द्वारपालबलिं हरेत्। द्वौ पादौ सम्पुटीकृत्य आचार्यस्तु बलिं हरेत्। नन्दीशं च महाकालं पश्चिमाभिमुखं [खो] बलिं [यजेत्]। बलिपीठे जलं दद्यात् पञ्चमाषजलं क्षिपेत्। गणेशं दक्षिणेशं च उत्तराभिमुखो यजेत्। शूलपाणिं परशुपाणिं पश्चिमाभिमुखो यजेत्। बलिदानात् परं तत्र क्षालितं गोमयोदकैः। आचार्यस्य मुखं पुर्वे इन्द्रस्य बलिदानके। दक्षिणाभिमुखाचार्यो वीतिहोत्रबलिं हरेत्। उत्तराभिमुखो दद्याद्यमस्य बलिदानके। आचार्यः पश्चिमे स्थित्वा मुखमीशानतः क्रमात्। निर्ऋतिपीठे बलिं दद्याद्वरुणं पीठसन्निधौ। वरुणपीठे बलिं दद्यात्पूर्वाभिमुखतः क्रमात्। पश्चिमाभिमुखाचार्यः बलिदानं क्रमेण तु। वरुणपीठे बलिं दद्यात् वायव्यां बलिदानके। उत्तराभिमुखो दद्यात् पूर्वे वा तन्मुखं भवेत्। सोमपीठे बलिं दद्याद्दक्षिणाभिमुखो गुरुः। पूर्वाभिमुख आचार्य ईशपीठे बलिं ददेत्। ब्रह्मपीठे बलिं दद्यादनन्तं पीठसन्निधौ। वृषपीठे बलिं दद्यात् मण्डपे पूर्वदिङ्मुखः। दक्षिणाभिमुखो दद्याद्वीरभद्रगणाधिपौ। पूर्वं गणपतिं चैव मातृणां पूर्वपश्चिमे। मातृपीठबलिं दद्याच्छास्तार पीठसन्निधौ। शास्तृपीठे बलिं दद्यादुत्तराभिमुखं क्रमात्। [वायुपीठसमीपे तु आचार्ये चोत्तरमुखः] आचार्योऽपि बलिं दद्यादुक्तमार्गेण वै क्रमात्। दक्षिणाभिमुखो दद्याद्धनेशाय बलिं ततः। पूर्वाभिमुख आचार्यश्चण्डेशाय बलिं हरेत्। चण्डेश्वरबलिं दत्वा

निःशब्देन ततो व्रजेत्। प्राङ्गणाद्विगतिं [णद्वारि च ] स्थित्वा तीक्ष्णदंष्ट्रबलिं हरेत्। पश्चिमाभिमुखं दद्याद्बहिः प्रासादमेव च। पूर्वाभिमुख आचार्यो भृङ्गिपीठे बलिं हरेत्। भृङ्गिपीठे बलिं दत्वा महाकालस्य सन्निधौ। शङ्खध्वनिसमायुक्तो देवं मूर्ध्नि समावहेत्। पश्चिमाभिमुखो मन्त्री महाकालं बलिं हरेत्। ईशानाभिमुखाचार्यो भूतनाथबलिं हरेत्। महीधरे पूर्वमुखो उत्तरः पर्वतेश्वरे। गुहेश्वरे दक्षिणमुखो कालपाशोक्तमार्गकः। कपर्दिनस्तथा चोक्तः क्षेत्रपीठस्य सन्निधौ। क्षेत्रेशपीठपरित अष्टौ देवाः प्रकीर्तिताः। भूतिदं त्रिभुजं पीठे दक्षिणाभिमुखो बलिः।? पिङ्गलो हरसेनान्तं? [सेनश्च] उत्तराभिमुखो बलिः। एतेषां लक्षणं देवि बलिदानं क्रमेण तु। लक्षणसंहितायां विशेषः- प्राकारान्तर्वहिस्सोऽपि कराभ्यां मूर्ध्नि तद्बहिः। शैवबलिसूत्रं यथा- आचार्यस्तु बलिं दद्याद्द्वारपालबलिं हरेत्। नन्दीशं च महाकाळं गणेशं दक्षिणेश्वरम्। बलिपीठे जलं दद्यात्पञ्चमाषबलिं क्षिपेत्। शूलपाणिं परशुपाणिं दिक्पालांश्च यथाक्रमम्। ब्रह्मानन्तौ वृषं चैव वीरभद्रगणाधिपौ। ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही च तथेन्द्राणी चामुण्डाः सप्तमातरः। मातृभ्यो लोकमातृभ्यः सर्वमातृभ्य एव च। सर्वमातृगणेभ्यश्च लक्ष्मीर्भूचरखेचरौ। यमराक्षसयोर्मध्ये शास्तारं, वायुसन्निधौ। दुर्गां च, वायुसोमान्ते स्कन्दं वैश्रवणं तथा। सोमेशयोश्च मध्ये तु चण्डेशबलिमाहरेत्। तीक्ष्णदंष्ट्रमृगास्यौ च गोपुरद्वारपालकौ। भृङ्गी चैव महाकालो भूतनाथो महीधरः। पर्वतेशो गुहेशश्च कालपाशकपालिनौ। तेभ्यः सर्वबलिं दद्यात् क्षेत्रपालबलिं हरेत्। फेरुकःप्रथमः प्रोक्तस्तथैव त्रिपुरान्तकः। अग्निनेत्राग्निजिह्वौ च करालः काल एव च। एकपादो भीमरूपो दिक्ष्वष्टसु बलिं हरेत्। भूतिदो दुर्निरीक्षश्च भीमरूपः सुलोचनः। सुमुखश्च सुबाहुश्च द्विभुजस्त्रिशिरास्तथा। अधः पिङ्गलकेशश्च हरसेनस्तदूर्ध्वतः। जलं पत्रं जलं पुष्पं जलमन्नं पुनर्जलम्। गन्धं कनिष्ठिकामूले पुष्पमङ्गुष्ठकं तथा। तर्जनीमध्यमाभ्यां च धूपदीपौ समर्पयेत्। अनामिकाग्रे नैवेद्यं बलिमुद्राः प्रकीर्तिताः। नन्द्यादिहरसेनान्तं बलिदेवा इमे हरे इति।

वैष्णवे-चण्डप्रचण्डौ गरुडोऽनन्तो विघ्नेश्वरः शिवः। दिक्पाला वीरभद्रैकदन्तौ ब्राह्म्यादिकास्तथा। शास्ता दुर्गा च धनदो [स्कन्दयक्षौ] विष्वक्सेनोऽथ गोपुरे। चक्रपाणिः शङ्खपाणिः श्रीर्भूमिः परितो बहिः। कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः। शङ्कुकर्णः सर्पनेत्रः सुमुखः सुप्रतिष्ठितः। क्षेत्रेशोऽन्ते चाथ बलिपीठे किष्किन्धपूर्वकाः। किष्किन्थः शङ्करो हेमो भीमश्च सुकुमारकः। ततो बाहुलकश्चैव विजयोऽनन्तविक्रमः। अधः पिङ्गलकेशश्च? हरिसेनस्तदूर्ध्वतः। एते बलिभुजो नित्यं देवा विष्णोः समीरिताः इति।

गणपतौ-वज्रदन्तगजास्यौ च महाचाषो विनायकः। शिवदिक्पा मातृशास्तृदुर्गास्कन्दादयस्तथा। कुम्भोदरो गोपुरे तु चण्डविक्रमसंज्ञकः। ततो विघ्नकरो

दिक्षु वज्रदन्तो गजास्यकः। भीमश्च महिषास्यश्च मेघनादस्तथैव च । विरूपाक्षश्च वरदः सर्वभक्षक एव च। तदन्ते क्षेत्रपालश्च गतवक्त्रादिकस्ततः। गजवक्त्रगणेशाख्यौ ततश्चैव विनायकः। चण्डविक्रमको विघ्नकरः सर्पादिमेखलः। शूर्पकर्णस्ततो नागदन्ती स्याद्द्रुद्रवक्त्रजः। अधश्चैव तथा मध्ये [चोर्ध्वे] विघ्नसेन इतीरीतः। बलिपीठस्य दिक्षु स्युरध ऊर्ध्वेत्विमे स्मृताः इति।

दुर्गायां- चण्डिका चाम्बिका सिंहो दक्षिणे गणपेश्वरौ। दिक्पा वीरेशविघ्नेशमातृकाद्याः पुरोदिताः। शास्ता दुर्गा स्कन्दयक्षौ मुण्डिनी गोपुरे ततः। ह्लादिनी मोदिनी द्वारि विजयन्ती [जयन्ती च] ततः परा। कात्यायनी बहिरथो काळयाद्या बलिदेवताः। काळी कराळी विरजा मन्दरा विन्ध्यवासिनी। सुप्रभा सिंहवक्त्रा च दैत्यमर्दिन्यतः परम्। क्षेत्रेशो बलिपीठे सुघोषी तु ब्रह्मघोष्यादिदेवताः। ब्रह्मघोषी सुघोषी च यज्ञवेष्टी सुरङ्गिणी। सुमुखी सुभुजा दिक्षु प्रमोदिन्यथ चात्मनी। ब्राह्मी मध्ये [चोर्ध्वे] चैवमुक्ता दुर्गाया बलिदेवताः इति।

वाहनानि- मयूरं सिहयन्त्रं च मराळं वृषयन्त्रकम्। अश्वं गजं रथं चेति उत्सवे वाहनं भवेत्। रथोत्सवपूर्वदिने रात्रौ रङ्गपूजोत्सवः प्रचलति। लक्षणसंहितायामपि यात्रापूर्वदिने रात्रौ विहिता। सङ्ग्रहेऽपि तद्रात्रौ देवदेवं च ध्वजान्तं वा विशेषतः। रङ्गपूजा प्रकर्तव्या दीपधारादिभिः सह। तथा- निशि यामोर्ध्वतः पश्चाद्रङ्गपूजां समारभेत्। क्रमेण चोत्सवं कुर्यात् पुनः सूर्योदयान्तिके। ब्रह्मार्पणं ततः कृत्वा प्रसादं गृह्य चादृतः। पश्चात् सम्प्रोक्षणान्ते तु नित्यकर्म समाचरेत् इति।

शान्तं पद्मासनस्थं.... नमामि। संस्नाप्याथ महाभिषेक विधिना शुद्धाम्बुभिः पञ्चभिर्गव्यै, पञ्चविधामृतोत्तमरसैस्तन्मन्त्रतस्तत्क्रमात्। हृद्यैःकोमल नाळिकेरसलिलैर्गन्धैस्तुषारोदकैस्तीर्थोदैरभिषेचयेच्च कलशैस्तन्त्रोक्तवत्पूरितैः। संशोद्ध्यालिप्य बिम्बं बहुलपरिमलोद्गारिभिर्दिव्यगन्धैर्नीवीबन्धैरनर्घ्याम्बरपरिविततैर्दीप्यमानैर्विचित्रैः। सौवर्णैः पट्टबन्धैर्मणिगणखचितैर्लम्बमानैरनेकैर्मालाशोभाविशेषैः शुभकुसुमगणैर्भूषयेद्भूषणाद्यैः। द्वारस्यादिध्वजान्तं विरचितफलके शुद्धवस्त्रे सुपात्रे सिद्धान्नं पूगपुष्पं गुडघृतकदळी नाळिकेरोरुभक्षैः। ताम्बूलैः पूगखण्डैर्विलसदुभयतस्त्रिप्रधाराप्रदीपैः कुर्वन् श्रीरङ्गपूजां विधिवदभिमतां सर्वसिद्धिं लभेत। सहस्रं वा तदर्धं वा त्रिशतं द्विशतं तु वा। विंशत्यर्धशतं प्रोक्तमन्त्रलिङ्गं तु कारयेत्। इन्द्रादि लोकपालांश्च मातृश्चावाहयेद्गणान्। वस्वादित्यांश्च रुद्रांश्च कलास्तत्त्वान् समावहेत्। उमाविनायकस्कन्दा नन्दी भृङ्गी च मातरः। वसवोऽष्टौ द्वादशार्का रुद्रा एकादशानलः। चण्डेशो वीरभद्रेशो क्षेत्रेशोऽर्कनिशाकरौ। क्रमेण पूर्णपात्रेषु पूजयेद्दशदिक्पतीन्। गोघृतेन समायुक्तः सात्विको दीप उच्यते। राजसस्तिल तैलेन नालिकेरेण तामसः। त्र्यङ्गुलायामविस्तारश्चोत्तमो दीप उच्यते। द्व्यङ्गुलेन समायुक्तो मध्यमो दीप उच्यते। एकाङ्गुलेन संयुक्तश्चाधमो दीप उच्यते ।

दीपमूले स्थितो ब्रह्मा दीपमध्ये जनार्दनः। दीपाग्रे शङ्करो देवस्तस्माद्दीपो विशिष्यते। पापक्षयोऽभिषेकेण साम्राज्यं पीठपूजनात्। सौभाग्यमतुलं सौख्यं गन्धपुष्पाक्षतार्चनात्। धूपाद्दहति पापानि कान्तिर्दीपप्रदानतः। नैवेद्येन महाभोगो लक्ष्मीस्ताम्बूलदानतः। अष्टैश्वर्यादिसिद्धीनां जप एव हि कारणम्। होमेन सर्वकामानां समृद्धिरुपजायते। धर्मार्थकाममोक्षाणां नमस्काराल्लभेत्फलम्। सर्वेषामपि देवानां तुष्टिर्ब्राह्मणभोजनात् इति। अथवा- रङ्गपूजाविधिं वक्ष्ये शृणु देवि परं शुभम्। भुक्तिमुक्तिप्रदं चैव मम प्रीतिकरं भवेत्। कार्तिके माघमासे वा वैशाखे च विशेषतः। सर्वमासेषु कर्तव्यं सर्वदेवहितं शुभम्। इन्दुवारे प्रदोषे च तथा मन्देन्दुसंयुते। अष्टम्यां च चतुर्दश्यां रङ्गपूजा विशेषतः। काम्यार्थे मङ्गलार्थे च मोक्षार्थे ज्वरदाहके। रङ्गपूजां तदा कुर्यात् मम प्रीतिकरीं शुभाम्। मम मन्दिरमासाद्य प्रभाते देशिकोत्तमः। प्रासादे प्राङ्कणे वाऽपि ईशाने चोत्तरेऽपि वा।

आचार्यो विप्रवर्यैश्च यजमानेन संयुतः। प्राणायामादि सङ्कल्प्य गणेशं पूजयेत्ततः। पञ्चगव्यं ततः कुर्यान्नान्दीपुण्याहमाचरेत्। पावमान्यं स्वस्तिसूक्तं रुद्रसूक्तं त्रियम्बकम्। पञ्चब्रह्मादिसूक्तं च नानामङ्गलसूक्तकान्। नानामङ्गलवाद्यैश्च सेचयेरन् (न्मां) द्विजोत्तमाः। पञ्चामृतैः पञ्चगव्यैः सिञ्चेत्पुष्पफलोदकैः। कुङ्कुमैर्गन्धतोयैश्च नाळिकेरेक्षुदाडिमैः। सेचयेद्विप्रवर्यश्च शतरुद्रातिरुद्रकैः। रुद्रसङ्ख्यांश्च कलशान्कुर्यात्पञ्चकसंयुतान्। अथैकरुद्रमावाह्य महाकलशसंज्ञितम्। कषायं गन्धतोयं च क्षीरं वा पूरयेज्जलम्। शालितण्डुलवस्त्रादिरत्नकूर्चसमन्वितम्। आवाहयेन्महारुद्रं मम मूर्ध्न्यभिषेचयेत्। ततः पूजां प्रकुर्याच्च नानापुष्पसमन्विताम्। गन्धं कर्पूरसंयुक्तं लेपयेन्मम लिङ्गके। तिलाक्षतैर्यवैर्माषैर्गोधूमैश्च प्रपूजयेत्।तुलसीबिल्वपत्रैश्च श्वेतार्कैः करवीरकैः। मल्लिकामालतीजातीचम्पकैः कमलैः शुभैः। माधवीकुन्दमन्दारैः कल्हारैः शङ्खपुष्पकैः। धत्तूरैः पूगपुष्पैश्च पूजयेन्मम मस्तके। षोडशैरुपचारैश्च अष्टोत्तरशतैश्शुभैः। सहस्रनामभिश्चैव पूजयेद्भक्तिसंयुतः। नैवेद्यं च ततो दद्याद्भक्ष्यैः पञ्चसमन्वितैः। ताम्बूलं दापयेद्भक्त्या नीराजनमथार्पयेत् । ततो मन्त्री बलिं दद्यात् ब्राह्मणान् भोजयेत्तदा। सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा। भक्ष्यैर्भोज्यैश्च विविधैर्घृतसूपैश्च षड्रसैः। यथाशक्त्यनुसारेण शाल्यन्नैर्भोजयेद्द्विजान्। पश्चाद्रात्रौ रङ्गपूजाविधानं च शृणु प्रिये। नित्यपूजावसाने तु महापूजां समारभेत्। वितानच्छत्रसंयुक्तं मुक्तादामविभूषितम्। पीठादिहरसेनान्तं विस्तृतं फलकं दृढम्। आस्तीर्य पट्टवस्त्रं च शुभ्रवस्त्रमथापि वा। तस्योपरि पृथक् पात्रं कल्पयेत्स्वर्णकं शुभम्। राजतं वाऽथ कांस्यं वा ताम्रं वा भस्मशोधितम्। अन्नलिङ्गं पृथक् पात्रे लिङ्गरूपं तु कारयेत्। अथवा बलिलिङ्गं तु तन्न्यूनं तु न कारयेत्। लिङ्गाकारं विशेषेण दण्डाकारमथापि वा। नानाभक्षसमायुक्तं कदळीनाळिकेरकैः। पार्श्वयोर्दीपयन्त्रैश्च वितानध्वजसंयुतैः।

तथा परेद्युः कृतमण्डपादिः संस्कृत्य वह्निं जनयेत्क्रमेण।
शेषं क्रमात्पूर्ववदेव कुर्यात्ताम्बूलदानादि पृथग्दिनेषु ९
प्रायश्चित्तमतः परे च दिवसे शन्तिं प्रधानं तथा।
तत्तन्मन्त्रनियुक्तमङ्गकलशैर्देवं च संस्नापयेत् १०
अस्त्रयागमथ पञ्चमे दिने होमयेयुः समिदादिकान् दश।
पूर्ववच्च सकलं समाचरेदन्नपानविहितं यथोदितम् ११
षष्ठेऽह्नि ग्रहयज्ञं च पूजां चैव यथाक्रमम्।
कलशस्थापनं प्रोक्तं तत्तन्मन्त्रैः पृथक् पृथक् १२
ग्रहमन्त्रेण संयुक्तो कलशान् स्थापयेत्ततः।
अन्नाद्यं बहुधा कल्प्य दीपमालां तथैव च १३
रात्रौ भूतबलिं। दद्याच्छेषं प्रोक्तवदाचरेत्।

---

ताम्बूलैः पूगपुष्पैश्च नानापुष्पसमन्वितैः। नानामङ्गलवाद्यैश्च नृत्तैर्नानाविधैरपि। नानामङ्गलघोषैश्च पटतूर्यादिनिःस्वनैः। सहस्रं वा तदर्धं वा त्रिशतं द्विशतं तु वा। विंशत्यूर्ध्वशतं प्रोक्तमन्नलिङ्गं तु कारयेत्। इन्द्रादिलोकपालांश्च मातृ श्चावाहयेद्गणान्। वस्वादित्यांश्च रुद्रांश्च कलास्तत्वान् समावहेत्। इति सम्पूजयेन्मन्त्री धूपं दीपं तु कारयेत्। नैवेद्यं च ततः कुर्यादग्निहोमं तु कारयेत्। ईशान्ये पूर्वके वाऽथ स्थण्डिलं कारयेत्सुधीः। ततो वह्निं प्रतिष्ठाप्य पञ्चब्रह्मविधानतः। विशालैः? [समिद्भि] र्हविषाऽऽज्यैश्च पृथक् साहस्रमेव वा। हुनेदष्टोत्तरशतं तारव्याहृतिपूर्वकम्। मूलमन्त्रेण जुहुयात्पक्वं वक्त्रेण होमयेत्। पीठैरावरणैर्हुत्वा पूर्णाहुति मथाचरेत्। रुद्रानावाहयेद्विप्रान् भोजयेन्मम प्रीतये। देवीं गणेशं द्वारस्थं नैवेद्यं च पृथक् पृथक्। वृषभं हरसेनं च नैवेद्यान्तं समर्चयेत्। नैवेद्यं च विसृज्याथ फलताम्बूलकं ददेत्। नीराजनविधिं कुर्याद्रथोत्सववदाचरेत्। उत्सवाख्यं [ख्यां] समानीय शिबिकां ।आनमेव वा। गजाश्वध्वजसंयुक्तैस्तोरणैश्छत्रसंयुतैः। चतुरङ्गबलैर्युक्तैर्नृपेण सहुतः सुधीः। आचार्यो विप्रवर्यैश्च भक्तैश्च विविधैर्जनैः। वारस्त्रीभिश्च वाद्यैश्च दीपयन्त्रैश्च चामरैः। दर्पणैः पूर्णकुम्भैश्च नानामङ्गलशोभितैः। ग्रामप्रदक्षिणं कृत्वा प्रकुर्याच्च महोत्सवम्। आचार्यविप्रवर्येभ्यो दक्षिणां दापयेत्ततः। एवं यः कुरुते मर्त्यः पुत्रसौभाग्यसम्पदः। इहैव धनवान्भोगी सर्वान् कामानवाप्नुयात्। देहान्ते मम सायुज्यं विंशत्येककुलं व्रजेत्। इति कामिके तन्त्रे रङ्गपूजाविधिर्नाम द्विशताधिकसप्तत्रिंशत्पटलः।

1 भूतबलिर्महाबलिः। स च रङ्गपूजादिः पूर्वमुक्तः।

दिशाहोमं च सप्ताहे महापूजां तथैव च १४

अभ्यङ्गं कारयेन्नित्यं गन्धमाल्यं तथैव च १५

अधिवासमथाष्टमे दिने लाञ्छयेत् कलशपदानि चित्रतः।

स्नानयोग्यकलशान् प्रपूजयेत्स्नापयेत्सकलसम्पदाप्तये १६

पताकयुक्तं च सुवस्त्रवेष्टितं सुतोरणं चन्दनधूपितं च।

सुसंस्कृतं शुद्धिकरं रथं च कृत्वा च सम्यग्बलिदानमुख्यम्[1] १७

---

1 रथोत्सवविधिर्यथा- पञ्चधा प्रोच्यते चापि शैवगौणादिभेदतः। एकाहमुत्सवं शैवं त्रियहं गौणमुच्यते। पञ्चाहं भौति (क्ति) कं प्रोक्तं सप्ताहं भौवनं (भुवनं) तथा। नवाहं दैविकं प्रोक्तमेतेषां विधिरुच्यते। प्रथमं शिबिकायानं द्वितीयं तु मयूरकम्। डोलायन्त्रं तृतीयं स्याद्वाजियन्त्रं चतुर्थकम्। पञ्चमं वृषयन्त्रं स्यात्सिंहयन्त्रं तु षष्ठकम्। सप्तमं गजयन्त्रं स्याद्यान-क्रम इतीरितः। महारथोत्सवं कुर्यात्तदन्त्यदिवसे यथा। तद्विधिं च प्रवक्ष्यामि सर्वपापहरं शुभम्। सुलक्षणसमायुक्तं कारयित्वा महारथम्। निपुणैः शिल्पिभिः सुज्ञैरुत्सवार्थं हुताशन। कारुं सन्तोष्य विविधैर्वस्त्रादिपरिभूषणैः। रथस्थितं शिल्पि [ल्प] मुखं ज्ञात्वा देशिकसत्तमः। विघ्नेशं पूजयेदादौ मधुरैर्मोदकादिभिः। ततो नान्दीमुखं कृत्वा पुण्याहं वाचयेद्गुरुः। स्यन्दनस्याथ संस्कारं कुर्यात्प्रागुक्तमार्गतः। वास्तुं सम्पूज्य विधिवत् कलशैः स्नापयेद्रथम्। सहस्रैर्वा तदर्धैर्वा तदर्धार्धैरथापि वा। सकूर्चैः सादितं सम्यग्वस्त्रादिभिरलङ्कृतैः। अघोरास्त्रं जपेन्मन्त्री स्यन्दनं स्पृश्य पाणिना। प्रायश्चित्ताख्यहोमं च कुर्वीत रथदक्षिणे। दिशाहोमं तथा कुर्यात्प्राच्यादिषु यथाक्रमम्। तत्तद्दिक्पालवर्णाशां बध्वा तद्दिक्षु पूजयेत्। बलिं दद्यात्ततो ध्यात्वा कालात्मानं रथं तथा। तत्र देवान् समावाह्य रथस्याङ्गेषु देशिकः। अक्षेषु मायां चन्द्रार्कौ चक्रेषु परिपूजयेत्। कीलकेषु ऋतूंश्चैव रन्ध्रेष्वाकाशमेव च। महादण्डद्वये शक्तिमाधाराख्यां यथाविधि। पट्टिकासु तथा रुद्रान् गात्रतद्बन्धकेषु च। धर्मादीनर्चयेन्मन्त्री वायुं गात्रान्तरेन्तरे। अन्तेषु? द्वादशादित्या शलाका अचला अपि? रथप्रासादशिखरे स्तूपिकायां सदाशिवम्। तत्पार्श्वेषु चतुर्दिक्षु पूजयेच्च यथाक्रमम्। षण्मुखं दक्षिणामूर्तिं हरिं च चतुराननम्। शूलपाणिं परशुपाणिं द्वारेषु परिपूजयेत्। रथप्रान्ते च दिक्पालान् पूजयेच्च विचक्षणः। दलेषु पूजयेदष्ट विद्येशान्परितः क्रमात्। जयं च विजयं चैव तदग्रे पार्श्वयोस्तथा। दिक्ष्वष्टसु वसूनष्टौ स्तम्भेषु परिपूजयेत्। चतुर्दिक्षु चतुर्वेदान् स्यन्दनस्य यथाक्रमम्। ब्रह्माणं सारथिस्थाने हयेषु मरुतः क्रमात्। मुखे वरुणमभ्यर्च्य जठरेन्दुपदेऽनिलम्। देवानेतान् पृथङ्मन्त्री स्नापयेत्कलशोदकैः। गन्धपुष्पाक्षतैर्धूपदीपैश्च परितोषयेत्।

गुळान्नैः कृसरान्नैश्च फलैर्नानाविधैरपि। भक्षैर्भोज्यैश्चविविधैरुपहारैः प्रतोषयेत्। भूतकूरेण हविषा बलिं दद्याद्विशेषतः। कृत्वैवं विधिवत्सर्वं रात्रौ तमधिवासयेत्। अथ प्रातर्विशुद्धात्मा होमं कृत्वा बलिं हरेत्। महेश्वरं समभ्यर्च्य रथस्यारोपणं प्रति। प्रार्थयेत् परया भक्त्या पार्वतीसहितं प्रभुम्। देव देव जगन्नाथ भक्तानामभयप्रद। रथस्यारोहणं कर्तुमागच्छ परमेश्वर। ( विश्वेश्वर विरूपाक्ष भक्तानां भद्रदायक। रथस्यारोहणं कर्तुमागच्छ परमेश्वर। अहमद्य त्वया प्रोक्तमार्गेणैव महेश्वर। स्वर्चिते सर्वदैवत्ये रथे शुद्धे सुपूजिते। महोत्सवार्थमारोहं करिष्यामि दयानिधे। रथाधिपदवीं देव प्रदत्वा त्वं नृपस्य च। ममापि यजमानस्य जन्तूनां देशकोशयोः। शुभमारोग्यमैश्वर्यं प्रदत्वा रक्ष शाश्वत। ) इति सम्प्रार्थ्य देवेशं सर्वाभरणभूषितम्। दिव्याम्बरधरं दिव्यपुष्पमालाभिरञ्जितम्। शिबिकायां समारोप्य गिरिजासहितं शिवम्। यानान्तरेपि वा रम्ये चित्रवस्त्रैरलङ्कृते। सर्ववाद्यसमायुक्तमानयेत्स्यन्दनान्तिकम्।। गच्छन्तमनुगच्छन्ति सेन्द्रा देवा महाबलाः। तत्प्रियाः शक्तयश्चैव पार्वतीमनुयान्ति वै। त्रिशः प्रदक्षिणीकृत्य रथं वाद्यरवैः सह। झिल्लिकाभिः पताकाभिः पुष्पमाल्यैरलङ्कृतम्। इक्षुभिः कदळीभिश्च दर्पणैः पूर्णकुम्भकैः। तोरणैश्च वितानैश्च छत्रैः सम्यगलङ्कृतम्। चन्दनागरुकर्पूररसैः सिक्तं समन्ततः। घण्टाभिः किङ्किणीभिश्च ध्वजैश्च परिभूषितम्। फलैर्नानाविधैश्चैव मुक्तामालाभिरेव च। धूपैर्गुग्गुळसङ्केतैर्धूपितं च समन्ततः। बीजाङ्कुरैः स्वर्णदामैश्चित्रवस्त्रैश्च चामरैः। हिमाम्बुकणिकाभिश्च समन्तादुपशोभितम्। आरोपयेद्रथं पश्चात् स्वस्तिसूक्तमनुस्मरन्। पार्वतीसहितं देवं त्रिशूलं च विभूषितम्। अन्नं नानाविधं तत्र रथाय च निवेदयेत्। ततो विप्रान् समभ्यर्च्य दक्षिणाभिश्च तोषयेत्। आचार्यं पूजयेद्भक्त्या गोभूवासोहिरण्यकैः। लाङ्गलीभिः फलैस्ताड्य स्वर्णादि विकिरेत्तथा। वासुक्यादिमहानागान् रज्जुष्वावाहयेद्गुरुः। चतुर्वेदान् वदन् रज्जुं ग्राहयेद्देशिकस्तदा। राज्ञां शस्तं रज्जुमूले रज्जुमध्ये तु मन्त्रिणाम्। तयोर्मध्ये भूसुराणां तदग्रे सर्वदेहिनाम्। राज्ञां राज्यप्रदं नृणां तन्मध्यं धनधं तथा। विद्याप्रदं तयोर्मध्यं तदग्रं तु सुखप्रदम्। नृत्तगीतसमायुक्तं यात्रामारम्भयेत्ततः। रथस्यागमने वाद्यान् वादयेत्तु विशेषतः। पटहान् मद्दळान् भेरीं दुन्दुभीनपि काहळान्। वीणावेणूंस्तथा कुर्याच्छङ्खानपि महास्वनान्। अग्रे पृष्ठे च मध्ये च तत्र तत्र च घोषयेत्। यन्त्रडोलादिकांश्चापि क्रमेण पुरतो नयेत्। ग्रामादिवीथीः संस्कुर्यान्निम्नोन्नतविवर्जिताः। वालुकास्तरणां कुर्याद्वीथिकां चोपवीथिकाम्। अलङ्कुर्यात्तथा वीथीं कदळीक्रमुकादिभिः। ये देवमनुगच्छन्ति गच्छन्तं स्यन्दनान्तिके। पदे पदेऽश्वमेधस्य फलं तेषां न संशयः। ये पश्यन्ति रथारूढमुमया सहितं शिवम्। ते सर्वे पापनिर्मुक्ताः शिवसायुज्यमाप्नुयुः। एवं रथोत्सवं वह्ने यः कारयति भक्तितः। इह लोके बहून् भोगान् भुक्त्वा च मनसेप्सितान्। देहान्ते मत्प्रसादेन शिवलोके महीयते। रथोत्सवं प्रपश्यन्ति बाला

ततः प्रभाते विमलेन वारिणा स सर्ववीथीः परिमार्जयेच्च।
भृत्यैरमात्यैर्बहुभिः प्रजाढ्यैः सज्जीकृतैः स्वर्णविभूषणाद्यैः १८
गानैश्च वाद्यैर्नटनर्तकाद्यै रथं निनीयुर्बहुयत्नसाध्यैः
ग्रामेषु चैत्येषु चतुष्पथेषु दद्याद्बलिं साधनमन्त्रयुक्तः १९
प्राच्यादिवीथीः परितः समन्ताद्रथं निनीयुर्धृतरज्जुहस्ताः २०
ग्रामं प्रदक्षिणीकृत्य तीर्थस्ना [स्था] नमतः परम्।
नैवेद्यं किञ्चिदर्प्याथ ततो देवालयं व्रजेत् २१

---

वाऽपि स्त्रियोऽपि वा। तेऽपि पापैः प्रमुच्यन्ते निर्मोकैरिव पन्नगाः। ग्रामं प्रदक्षिणीकृत्य नगरं वाऽपि भूषितम्। निवर्तयेद्रथं पश्चान्नीत्वा वीथिमथापि वा। इति दीप्तागमे रथोत्सवविधिः। पूर्वदिने रात्रौ रथोत्सवदिने प्रातर्वा रथाधिवासहोमं कुर्याद्यथा- चक्षुष्यन्ते रथेश्वरं रथगायत्र्या पक्वेन मूलमन्त्रेण समिदाज्यचर्वाज्यद्रव्यैर्यथासंख्यं चन्द्रं समिच्चर्वाज्यद्रव्यैर्यथासंख्यं उक्षादिदेवेभ्यः लाजसर्षपएलाजीरकश्वेततण्डुलैः क्षीराज्यमधुसम्मिश्रद्रव्यैरेकैकवारं जुहुयात्। उक्षाय [क्ष्णे] गोपतये शृङ्गिणे, नन्दिने, वृषपतये, वृषभाय, शङ्कुकर्णाय, महोदराय, वृषाय, सद्योजाताय वामनाय, अघोराय, तत्पुरुषाय, ईशानाय, इन्द्राद्यष्ट [अनन्ताय ब्रह्मणे] ऐरावताद्यष्ट, अश्वेभ्यः, देवेभ्यः, धात्रे, अर्यम्णे, मित्राय, वरुणाय, अंशवे, भगाय, इन्द्राय, विवस्वते, पूष्णे, पर्जन्याय, त्वष्ट्रे, विष्णवे, आदित्यादिनवग्रहाः, यक्षेभ्यः, किन्नरेभ्यः, सिद्धेभ्यः, अप्सरोभ्यः वास्तोष्पतये, क्षेत्रपालाय, विद्याधरेभ्यः, मनुष्येभ्यः, नागेभ्यः, पक्षिभ्यः, गणेभ्यः, र्पनिभ्यः, विष्णवे, ब्रह्मणे, श्रियै, भारत्यै सर्वसिद्ध्यै, कीर्त्यै, पुष्ट्यै, भूत्यै, तुष्ट्यै, विश्वकर्मणे, पर्वतेभ्यः इत्युक्षादयः। नवशक्तयः- रथमायायै, रथमध्यायै, रथसुन्दर्यै, रथवाहकायै, रथात्मिकायै, रथाधःस्थायै, रथाधिकारायै, रथाधिपतये?, रथमहायै इति। रथेश्वराय विद्महे सुरम्याय धीमहि। तन्नो भद्रः प्रचोदयात्। इति गायत्री। ब्रह्मा ऋषिः। अनुष्टुप् छन्दः। रथेश्वरो देवता। पुष्परथाय हृदयाय। शकटाय शिरसे। स्यन्दनाय शिखायै। सुभद्राय कवचाय। मेरवे नेत्रत्रयाय। रथाय अस्त्राय। वन्दे रथं सकलमङ्गलसन्निधानं कृष्णाजशम्भुनिलयं जनसेव्यमानम्। नानाविचित्रपटरत्नविचित्रधातुरूपं मनोरथमुखं सफलं च चित्रम्। (नमस्ते कुड्मलाकार नमः षट्चक्रधारिणे। जनमोह नमस्तुभ्यं नमस्ते स्यन्दनाभिध।) आज्ञां देहि रथश्रेष्ठ देवमारोपितुं त्वयि। ओं ह्रीं ह्रौं शकटरथाय हुं फट् स्वाहा। अथ द्वादश नामानि- पुष्परथाय। शकटरथाय। स्यन्दनाय। सुभद्राय। मेरवे। रथाय। पुष्कलाय। हलाय। महारथाय। विषमचक्रधराय। रथपुङ्गवाय। रथात्मने इति।

रात्रौ जागरणं कृत्वा नानावि' वसंयुतः।
मृगयात्रां दशाहे तु तीर्थसङ्ग्रहणं ततः २२
रात्रौ भूतबलिं[1] द..च्छयनं[2] परिकल्पयेत्।
स्तोत्रगीतसमायुक्तं रात्रिशेषं प्रहापयेत् २३
उत्थाप्य देवं शयनात्परेद्युर्दानानि दद्युश्च महाजनानाम्।
संस्नाप्य देवं पुनरर्घ्यपाद्यैर्यात्राख्यहोमं[3] विधिवत्प्रकुर्यात् २४
यात्राबलिं देवगृहे समन्ताद्विकीर्य गच्छेत्कृतमण्डपान्तम्।
काश्मीरचूर्णं सहरिद्रयुक्तं कर्पूरगन्धं मनुना प्र. . य २५

1 निशीथसमये प्राप्ते बलिकर्म समाचरेदित्युक्तेर्भूततृप्त्यर्थत्वाच्च रात्रौ भूतबलिरुक्तः। अयं च पूर्वेद्युस्तीर्थयात्राया निशि कुर्यान्महोत्सवम्। इत्युक्तेःतीर्थयात्रापुर्वदिनरात्रौ कर्तव्यः। तत्र विशेषतः क्षेत्रपालपूजा कर्तव्या। रक्ताक्षिणी रक्तमुखी तथा रक्तस्वरूपिणी। चित्रिणी चित्रसंहारी सिंहिनी नरभक्षिणी। भीषणी भयदा चेति क्षेत्रपालस्य शक्तयः। कपालहस्ताय (अनिलाक्षाय) विद्महे घण्टारवाय (नीलवर्णाय) धीमहे। तन्नः क्षेत्रपालः प्रचोदयात्। ...सः ऋषिः। गायत्री (अनुष्टुप्) छन्दः। क्षेत्रेशो देवता। क्षामित्यादि षडङ्गानि। भ्राजच्चक्रजटाधरं त्रिणयनं नीलाञ्जनाद्रिप्रभं दोर्दण्डात्तगदाकपालमरुणस्रग्वस्त्रगन्धोज्वलम्। घण्टामेखलघर्घरध्वनिमिलद्धुङ्कारभीमं विभुं वन्दे संहित..र्पकुण्डलधरं तं क्षेत्रपालं सदा। ओं ह्रीं ह्रौं क्षं क्षेत्रपाल (लाय) हुं फट् स्वाहा। अ.. प्रथमम्। ब्राह्म्यादिभिर्द्वितीयकम्। फेरुकाय। त्रिपुरान्तकाय। अग्निजिह्वाय। अग्निनेत्राय कराळाय। कालाय। एकपादाय। भीमरूपाय इति तृतीयम्। इन्द्रादि चतुर्थम्। वज्रादि पञ्चमम्। सपरिवाराय क्षेत्रपालाय कूष्माण्डनाळिकेरकदळीफलैः सहितं सदीपं महाहविर्निवेद्य नीराज्य पुष्पाञ्जलिं समर्प्य साक्षतहारिद्रोदकेन तर्पणम्। क्षेत्रपालफेरुकादिभ्यः बलिं दद्यात्। (एह्येहि विदुषि विदुषि मुर मुर भञ्जय भञ्जय नर्तय नर्तय विघ्नविघ्न महाभैरव क्षेत्रपाल तर्पणं गृहाण स्वाहा। बलिं गृहाण स्वाहा इति तर्पणबलिमन्त्रः।) 2 शयनोत्सवः प्रतिष्ठापटले उक्तः। 3 यात्रोत्सवः- यात्राहोमः- गायत्र्या पक्वेन कनिक्रददादिपड्भिः स्वस्त्यादिपञ्चभिः ...चेन (तत्पुरुषेण) मूलेन समिदाज्यचर्वाज्यैर्जुहुयात्। बलिसहितः दण्डबलिरत्र विशेषः। तदुक्तं ...संहितायां- प्राप्ताबलिक्रमेणात्र बलिदानं प्रकीर्तितम्। नन्दिं चैव महाकालं विघ्नेशं श.. .. शूलपाणिं परशुपा..मन्द्रं वृषभमेव च। इति बलिक्रमः। प्राप्तबलिः दण्डाकारेण भवति। तदुक्तं- विकिरेदन्तरालेषु य...च्छिद्रसुदण्डवत् जगाबलिरित्यपि नाम।

सुपक्वरम्भान् पृथुनाळिकेरान् यथोपलब्धान् सुफलानि पुष्पम्।
देवाय मान्यास्त [दद्यात्त] दशेषयुक्तं भक्तप्रियेभ्यो गुरुमूर्तिपेभ्यः
ततोऽपराह्णे कृत [T] खेटरूपं निनाय देवं स्वजनैर्भटैश्च।
अन्योन्यसिक्तं पुनरेवमन्यं दद्याद्बलिं नित्यमनित्यकं च २७
पुनर्निवेद्यं पुनरर्घ्यपाद्यं पुनः पुनः सम्भ्रमभाषयुक्ताः।
पार्श्वद्वये ह्यापणवीथिमध्ये कुसुम्भसम्भूतजलानि सेचुः २८
निनाय देवं शिरसा च शिष्यः प्रदक्षिणं ग्रामसभास्थलं च।
नद्याः समीपं द्रुतमेव गत्वा दद्याद्बलिं मण्डपमष्टदिक्षु २९
पुण्याहं वाचयित्वा तु वारुणं[1] होममाचरेत्।
कलशैः स्नापयेत्पश्चान्नैवेद्यं किञ्चिदर्पयेत् ३०
पद्मानि रचयेत्तत्र तण्डुलं परिकल्पयेत्।
घटं तैलेन सम्पूर्य हारिद्रेण समन्वितम् ३१
तत्तन्मन्त्रेण सम्पूज्य घोषशान्तिं वदेत्पुनः।
घटस्थतैलमादाय देवं संस्नापयेत्ततः ३२
आचार्याय प्रदातव्यं तच्छेषं तैलमुत्तमम्।
आचार्यो यजमानाय होतृभ्यश्च ततः परम् ३३
भक्तेभ्यो दापयेत्पश्चात्सर्वसम्पदवाप्तये।
जनेभ्यः सर्वभक्तेभ्यो दद्यात्तैलं सुमन्त्रितम् ३४
जलावगाहनं कुर्यान्नानाभक्तजनैः सह।
विष्णुसूक्तं पावमानं रुद्रसूक्तं तथैव च ३५
हिरण्यवर्णामित्यादि स्नापयेच्छुद्धवारिणा।
स्त्रीपुत्रमित्रसंयुक्तो यजमानस्ततः परम् ३६

---

1 वारुणहोमं कुर्याद्यथा-मध्यकलशे सप्ततीर्थानि परितः विद्येश्वरानावाह्य प्रार्थयेत्। हे देवि गङ्गे यमुने नर्मदे च सरस्वति। सिन्धो गोदावरि क्रौञ्च कावेर्यत्र जलाशये। सन्निधीभव सर्वस्य तीर्थार्थमिदमुत्तमम्। रवेरस्तमयं यावत्तीर्थार्थं पापशुद्धये इति। चक्षुष्यन्ते- शिवं तत्पुरुषेण पक्वं सद्योजातादिपञ्चभिराज्यं आपोहिष्ठेति तिसृभिराज्यं मूलेन समिदादि चतुर्द्रव्याणि जुहुयात्।

स्नानं कृत्वा तीर्थतोये मन्त्रपूतं सुसिद्धिदम् ३७
त्रिः कृत्वाऽथ निमज्जनं च सलिले प्रोत्तीर्य तीर्थात्ततो
न्यस्य स्थण्डिलमध्यतश्च विधिवत्सम्पूज्य गन्धादिभिः।
अन्यैर्भक्षविनिर्मितैर्बहुविधैः सम्यङ्निवेद्य क्रमा-
दारोप्य द्रुतमेव यानमखिलं गच्छेज्जनौघैर्वृतः ३८
तस्मिन्नेव दिने निवेश्य निलयं मूले समारोप्य तम्।
देवं देवमभिप्रपूज्य विधिवत्सम्यक्प्रसूनादिभिः ३९
कुण्डे पूर्णाहुतिं[1] कुर्यात्तद्ध्वजं च विसर्जयेत्।
ध्वजावरोहणं कुर्यादाशीर्भिस्तदनन्तरम् ४०
तद्दण्डं खड्गमन्त्रेण छेदयेन्मनुवित्तमः।
तत्संवेष्टितवस्त्रं च देशिकेन्द्राय दापयेत् ४१
तद्रज्जुं चारकेभ्यश्च तद्दण्ड पटवादिने।
इत्येवं द्वादशाहस्तु ह्युत्सवः परिकीर्तितः[2] ४२

---

1 पूर्णहुतिहोमः कर्तव्यः। द्रव्यमन्त्रस्वरादीनां न्यूनाधिकनिवृत्तये। पूर्णान्ते जुहुयात्पूर्णं फलेनापि फलेप्सुना। पूर्णाहुतिप्रशंसा- संसारे वर्ततां नृणां पूरुषार्थचतुष्टयम्। प्राप्तुं कुर्युर्देवतानां सम्यगाराधनन्त्विह। नृलोके प्रतिमां वीक्ष्य पूजां गृह्णन्ति देवताः। तस्मात्तु देवताः सर्वाः स्थाप्यन्ते भुवि मानवैः। ईशं पञ्चमुखं . . . . । वक्ष्याम्युत्सव . . . . एकाहमुत्सवः शैवो ग्रामरक्षाकरो भवेत्। त्रिदिने चोत्सवः प्रोक्तो गौणो लोकहितप्रदः। भूतप्रेतपिशाचघ्नः पञ्चाहो भौतिकोत्सवः। सर्वेषां प्राणिनामिष्टः सप्ताहो भुवनोत्सवः। नवाहो दैविकः प्रोक्तो दशाहश्च महोत्सवः। एकादशो नीलकण्ठो द्वादशः शिव उच्यते। समिदाज्यचरून् लाजान् सर्षपांश्च तिलान् यवान्। व्रीहीन् सक्तून् पुनश्चाज्यं दशद्रव्याणि होमयेत्। आज्येनायुष्यवृद्धिः स्याच्चरुरन्नसमृद्धिदः। लाजैश्च मङ्गलं प्रोक्तं सर्वरक्षाश्च सर्षपैः। तिलैर्मृत्युविनाशः स्याद्यवैः पापविनाशनम्। व्रीहिभी रोगशान्तिः स्यात्सक्तुभिर्बलवर्धनम्। पुनराज्येन होमस्तु सर्वाभीष्टं प्रयच्छति इति। 2 द्वारप्रवेशसमये संवादः पठनीयः स यथा- रथोत्सवदिनेऽतीते गौर्याः प्रणयविग्रहे। हेतुर्या मृगयायात्रा कर्तव्या सा शुभाप्तये। याते रथोत्सवदिने मृगयाभिधानयात्रोत्सवस्तदनु लोकहिताय कार्यः। तुष्ट्यै हरस्य नगरस्य च रक्षणाय वृद्ध्यै तथा सकलदिग्विजयाय राज्ञाम्। नानाघोरमृगाकृतीः शतमखारातिव्रजोत्थापदस्त्रातुं मन्दरकन्दरालयमुनीन् सम्प्रार्थितो वेधसा। गौरीशः परिवारितामरमहासैन्यस्तथाऽऽखेटकः

क्रीडाकृष्टमना ययावभिमुखः स्कन्दादिभिर्मन्दरम्। उत्तुङ्गपुङ्गवतुरङ्गमनङ्गशत्रावारोहति त्वरितमम्बुजसम्भवाद्याः। देवा गुहेभमुखमुख्यगणाः स्वकीयमारुह्य यानमनुजग्मुरुमाधिनाथम्। हत्वा रात्रिचरान् मृगाकृतिधरान्वैखानसानां क्षणात् कृत्वा क्षेममनेकनिर्जरवधूवृन्दैः सुराणां गणैः। साकं नाकतरङ्गिणीशुभजलक्रीडामुपेत्यादरात्तत्रावाप मनोज्ञरूपतरुणीं नारीमणिं शङ्करः। नानारत्नविनिर्मितोन्नतमहासौधान्तराले मुदा नीत्वा तत्र निशामशेषदिविषद्वृन्दैः परीतस्ततः। गन्तुं गेहमगेन्द्रजाहृतनिजस्वान्तः पुरं मन्दराच्चक्रे सत्वरमस्तमस्तकगते भानौ भवानीपतिः। तत्पूर्वं सुरवैणिको मुनिरुपेत्याद्रीन्द्रजामूचिवान् देवीशः सुरुचा मनोज्ञवपुषा रेमे रजन्यां शठः। नाज्ञासीः शशिशेखरस्य सुमते मुग्धे सुदुश्चेष्टितं वामार्धाङ्ग्यहमस्मि शर्वरमणीत्येवं वृथा मन्यसे। प्रतारयन्ति हि शठाः कान्ताजनमहर्निशम्। उक्त्वेत्थमद्रिजां स्वैरं ययावाकाशगो मुनिः। श्रुत्वाऽद्रिजा सुरमुनेर्मुखतः समस्तं नाथस्य चेष्टितमतीव निशागमं तत्। द्वारस्थितान् परिजनांश्च दिदेश कोपान्नाथस्य सामरगणस्य निवारणाय। रम्भादिनाकगणिकानिकरैः परीता रम्भेक्षुखण्डघनमोदकहस्तपद्मैः। गन्धर्वकिन्नरमहोरगसेव्यमाना रेजेऽद्रिजा दयितसैन्यनिरोधयत्ना। दण्डव्यूहं कारयित्वाऽमरीभिः कोपावेशाद्बन्धयित्वा कवाटम्। आरूढायां सौधमद्रीन्द्रजायां शम्भोः सेना तत्क्षणादाविरासीत्। कदनकाहळडिण्डिमनिःस्वनैः समुदितैर्दयिताभवनान्तरे। हृदि विचिन्त्य किमेतदितीश्वरः सपदि नन्दिनमादिशदग्रतः। समेत्य नन्दी गिरिजागृहान्तिके मन्तर्ज्य (न्ताड्य) मानः सुरकामिनीजनैः। रम्भेक्षुकाण्डाग्रकरैः समन्ततः सन्ताडितोऽभूद्बहिरेव संस्थितः। तदाज्ञयाऽविश्य गृहं स नन्दी निवेदयामास गिरीन्द्रपुत्र्यै। आयाति देवः स्वगणैः परीतो कृत्वा जगत्त्राणमिदं किमत्र। श्रुतं मया तच्चरितं समस्तं किमर्थमायाति किमस्ति मद्गृहे। मां वञ्चयित्वा मृगयापदेशात् स्वैरं वने क्रीडितवान् यतोऽयम्। निशम्य देवीवचनं स नन्दी निवेदयामास समेत्य देवम्। स्वामिन् तवोपर्यतिकोपिता सा प्रसादनीया भवतैव देवी। ततो भवानीभवनोपकण्ठे निरुद्धसैन्यो बहिरेव शम्भुः। तिष्ठन् तदा दूतमुखेन देवीं प्रसादयामास स सामदानैः। हे द्वाःस्थ बन्धितद्वारं कवाटं मोचयाशु मे। शान्तियुक्तेन मनसा प्रोवाच भगवान् शिवः। तच्छ्रुत्वा पार्वती पत्युः सा चेदं वाक्यमब्रवीत्। विलासकलहार्थं तु वचनं पुनरब्रवीत्। कस्त्वं शूली प्रविश भिषजां वेश्म वैद्यं न जाने स्थाणुर्बाले न वदति तरुर्नीलकण्ठः प्रमुग्धे। केकामेकां वद त्वं पशुपतिरबले नैव दृष्टौ विषाणावित्येवं शैलकन्याप्रतिवचनजडः पातु वः पञ्चवक्त्रः। कस्त्वं भूतेश्वरोऽहं हिमगिरिशिखरे पिप्पलं वा वटं वा गच्छ त्वं पञ्चवक्त्रो विपिनमपि शिवः शब्दमेकं कुरुष्व। श्रीकण्ठो नागलोकं कुवलयनयने श्रीनटो नाट्यशालामित्येवं . . . वक्त्रः। कस्त्वं भीमोऽहमम्भोरुहनिभवदने धर्मराजानुजः किं नो दुर्गे वामदेवः किमु मुनितिलको नाहमार्ये गिरीशः।

किं मेरुर्मन्दगो नो गजरिपुरगजे किं पतिस्त्वं मृगाणामित्येवं . . . । मौलौ किं नु महेश मानिनि जलं किं वक्त्रमम्भोरुहं किं नीलालकवेणिका मधुकरी किं भ्रूलता वीचिका। किं नेत्रे शफरीद्वयं स्तनयुगं प्रेङ्खद्रथाङ्गद्वयं साशङ्कामिति वञ्चयन् गिरिसुतां गङ्गाधरः पातु वः।चिह्नं किं हर वक्षसीह भवतः सन्दृश्यतेऽर्धाकृतिः सन्दष्टोऽधर एष विद्रुमनिभो मन्दोष्णरागः कथम्। किं देहेषु नखक्षतव्रणचयो बिन्दुस्रजः स्वेदजा बन्धूकाभदृगन्तिमः प्रकटितः का देवरत्याश्रिता। मैवं देवि वदस्व मस्तकजटाबद्धाहिभीतो भृशं जीवं रक्षयितुं ममोरसि गतो जैवातृको निष्प्रभः। देवारीन् परितर्जयन्निह महाशङ्खो मया पूरितो देवि त्वादृशकामुकीद्विजचयैर्नो मेऽधरः पीडितः। देवारातिशरैरतीव निशितैर्भिन्नानि गात्राणि मे सन्दृश्यन्ति नखक्षतैरुपमितैरम्भोरुहाक्षि त्वया। ईदृग्भवेत्किमु दशा मृगयापराणां गण्डे प्रकीर्णकचता वदनं च खिन्नम्। श्रान्तौ स्तनौ च नयने किमपाङ्गशोणे तथ्यं वदाद्य गलितोऽभिनवाङ्गरागः। बाले मे श्रुणु गण्डयोः कचचयः कीर्णोऽनिलादाननं खिन्नं वाजिगतस्य दूरगमनाच्छ्रान्तिः समावेशिता (तः) नेत्रद्वन्द्वमपाङ्गशोणमभवद्रोषातिरेकाद्रणे मृष्टं चन्दनमम्बरस्य कषणाज्जाता त्ववस्था त्वियम्। यातस्त्वं कुत एव बाल मृगयासक्तो वनान्तं गतो गन्धोऽन्यो वनपुष्पजः श्रमजलं घर्मात्क्षतं कण्टकैः। अस्त्वेवं मृगयागतस्य वदने दष्टोऽधरो दृश्यते शङ्खापूरणमत्र कारणमिदं कुर्यां प्रमाणानि ते। अम्भांसि प्रविशामि कुम्भनिहितं कर्षामि कुम्भीनसं ज्वालाजालकरालिनं हुतवहं निःशङ्कमध्यास्महे। यद्वा मानिनि देवतामभिमतामुल्लङ्घयामि ध्रुवं विश्वासस्तव नास्ति चेदपि तुलामारोहयामि क्षणात्। अम्भस्ते शिरसि स्थितं च सततं त्वद्भूषणं भोगिराट् त्वत्तेजः परमाणुरेष दहनो भृत्याः समस्ताः सुराः। कुक्षिन्यस्तजगत्त्रयस्य भवतः किं स्यात्तुलारोहणं जाने त्वां बहुमायिनं व्रज पुनस्तस्याः प्रियाया गृहम्। गाढं बन्धय बाहुभिस्तनगिरेः शृङ्गाग्रमारोपय त्वद्रागांम्बुनिधौ निमज्जय मदीयाङ्गं तवैवार्पितम्। बध्वा चारुकटाक्षशृङ्खलतया भित्वा क्षताळीनखैः (कृत्वा)। (भित्वा कराळैर्नखैः) कुर्याद्विभ्रमगेहनिग्रहगतं शाधि प्रिये (ऽहं) मां यतः। (प्रियोऽहं यतः) प्रत्यक्षप्रथितापराधविविधैर्मिथ्यावचोविस्तरैर्मच्चित्तं परिवञ्चयन्नखिलया युक्त्या बलिष्ठोऽस्यतः। गच्छ त्वं मम गेहबाह्यविवरं त्यक्त्वा तदीयालयं न स्थातव्यमिह त्वया निगदितं नेच्छामि सौख्यास्पदम्। तदनुमन्दर शैलसमर्पितं मणिमयाङ्कितनूपुरकङ्कणम्। विमलमौक्तिकहारविभूषणैः प्रणिहितं दयितापदपङ्कजे। निश्वस्य सा क्षिप्रमुदीक्ष्य तं क्रुधा निवार्यतामेप कथं प्रवेशितः। निर्भर्त्स्य दूतं दृढबद्धदोर्युगं विसर्जयामास शिवा शिवान्तिकम्। विलोक्य दूतं घनमोदकाद्यैः सन्ताड्यमानं गणिकागणेन। वेगादहीशाभरणः प्रियाया व्यूहं विनिर्भिद्य विवेश सौधम्। इत्याभाष्य तया रुषा त्रिकतले न्यस्यार्धचन्द्राकृतिं मुद्रां क्षुद्र शठेति कोपवचनैर्निर्भर्त्स्य निष्कासितः। तद्द्वारस्थितनाकवारवनितावृन्दैस्तथा ताडिताः

सर्वे ते प्रमाथाः सुराश्च कदलीकाण्डैर्विनैर्मोदकैः। मैवं वद प्रियतमे परिहासशीले त्वय्येव चित्तमनिशं मम जीवितं च। इत्थं वदन् मुकुटरत्नमरीचिजालैर्नीराजनं प्रियतमापदयोश्चकार। दयिते किमिदं निरोधनं क्रियते किं मयि रोषकारणम्। ब्रुवते पिशुना न किं प्रिये वद ते किं करवाणि वल्लभे। त्वदेकशरणाया मे विहाय शरणं मम। कस्या निशान्ते कान्ताया नितान्तमानजागरितः। प्रत्याह तत्र भगवान् शृणु देवि दुष्टैर्दैवारिभिर्विहततीव्रतपःक्षतीनाम्। श्रुत्वाऽर्तघोषमविषह्यमतः मुनीनां यातो वनान्तरमितो दयितेऽस्ति नान्यत्। इत्थं कृते निखिललोकवरप्रदेश कान्तं समेत्य सहसा प्रियमालिलिङ्ग। आविश्य चान्तरखिलैः सुरतोपचारैर्दैवं प्रतोष्य गिरिजा निजगाद वाक्यम्। इत्थं गिरीशगिरिजाप्रणयापराधस्तोत्रं पठेद्यदि बुध . . भक्त्या दोषं विधूय निखिलं विपुलां च कीर्तिं लक्ष्मीं लभेद्वपुषि नित्यमरोगतां च इति शैवमृगयात्रा।

वैष्णवमृगयात्रा- इन्द्रद्वेषितया मुरादिदितिजान् सन्दृश्य मार्गाकृतीन् संहर्तुं दिविजैः प्रजापतिमुखैः सम्प्रार्थितो माधवः। आरुह्याश्वमथो महीध्रमगमद्धत्वा सुरांस्तत्क्षणात् पुष्ट्या नाकमतीत्य कालमनघो लक्ष्म्या गृहं प्रागमत्। अङ्गुल्या कःकवाटं प्रहरति कुटिले माधवः किं वसन्तो नो चक्री किं कुलालो नहि धरणिधरः किं द्विजिह्वः फणीन्द्रः। नाहं घोराहिमर्दी त्वमसि खगपतिर्नो हरिः किं कपीन्द्रो हीत्येवं सिन्धुकन्याप्रतिवचनजडः पातु वः पद्मनाभः। कस्त्वं मत्स्योऽहमम्भोरुहनिभवदने धीवराः सन्ति चात्र कूर्मोऽहं चञ्चलाक्षि प्रविश सुजलधिं नाहमार्ये वराहः। याहि त्वं भूधरेन्द्रं मृगपतिरबले द्राक् हर त्वं हि दैत्यं इत्येवं. . . .। कस्त्वं बाले ह्युपेन्द्रः प्रविश बलिमखं भार्गवोऽहं मृगाक्षि गच्छ त्वं रेणुकायाः प्रतिहननविधौ खड्गमेकं गृहाण। रामोऽहं . . . . . बलमहितस्तारय त्वं पयोधिं इत्येवं. . . .। कस्त्वं कृष्णोऽहमिन्दो . . . . . न प्राविश त्वं हि गोप्यागारे स्थित्वा च तस्मिन् दधिकलशवरान् पायय त्वं हि बालान्। बुद्धोऽहं याहि चैत्यं रमण सुजवनो ग्राहयेद्यः स्वसङ्घान् इत्येवं. . . .। कोऽयं द्वारि हरिः प्रिये हि भवतः शाखामृगेणात्र किं कृष्णोऽहं दयिता बिभर्ति (बिभेति) मुग्ध कृष्णोऽहमम्भोनिधिः। मुग्धेऽहं मधुना (हा) पुराभिलषिता त्वामेव गन्ता वनं इत्येव. . . .। यातस्त्वं कुत एव बाल मृगयासक्तो वनान्तं गतो गन्धोऽन्यो वनपुष्पजः श्रमजलं घर्मात् क्षतं कण्टकैः। अस्त्वेवं मृगयागतस्य वदने दष्टाधरो दृश्यते शङ्कापूरणम। कारणमिम कुर्या प्रमाणानि ते। (अवशिष्टं शैवादूहनीयम्।)

गणपतेः- देवारातितया मृगादिवपुषा सिन्धूरम . . . . त् हन्तुं सर्वानिपूर्वमिक्षुजलधाविन्द्रादिभिः प्रार्थितः। संहृत्याशु ममुष्य बुद्धिसदन . . समागत्पतिं रात्रौ सिद्धिरलङ्कृताऽप्रमहिषी सा द्वारबन्धं व्यधात्। कस्त्वं शुण्डा। शष्टस्त्वमसि यदि गजः सिंहसन्दर्शनात् प्रागच्छान्यत्रासि पुत्रो जगति प . . शृङ्गवाद्यं

नवाहपक्षे वक्ष्यामि शेषं पूर्ववदाचरेत्।
अष्टाहे चोत्सवः प्रोक्तः नवाहे सर्वमादिशेत् ४३
सप्ताहपक्षे वक्ष्यामि ध्वजारोहणपूर्वकम्।
अधिवासः पञ्चमेऽह्नि षडहे तु रथोत्सवः ४४
शेषं समाप्य सप्ताहे स्नपनं चाष्टमेऽहनि।
पञ्चाहपक्षे वक्ष्यामि सर्वेषां च हिताय वै ४५
प्रथमो वृषयागः स्यात्संस्कारो मण्डपस्य तु।
प्रायश्चित्तं तथा शान्तिः पञ्चब्रह्म तथैव च ४६
त्रिसन्ध्यं बलिदानं च द्वितीयेऽह्नि समाचरेत्।
अधिवासस्तृतीयेऽह्नि चतुर्थेऽह्नि रथोत्सवः ४७
चूर्णोत्सवः पञ्चमेऽह्नि शेषं पूर्ववदाचरेत्।
एवं नवविधः प्रोक्त उत्सवः कथितो मया ४८
वर्षोत्सवश्च षण्मासस्त्रिमासो मास एव च।
कलौ युगे न कर्तव्य यदीच्छेत्सिद्धिमात्मनः ४९
कृते युगेऽप्युत्सव वत्सरान्वितः षण्मासयुक्तश्च युगे द्वितीये।

---

कुतो वा। सोऽहं लम्बोदरश्चेद् व्रज मम भवनान्नास्ति ते कुक्षिपूरो दाताऽहं स्वाश्रितानां पटुतरधिषणः सूचकः किं खलानाम्। कस्त्वं क्रोडास्यहन्ता त्वमसि वनचरो नो प्रिये गानलोलो गीतज्ञश्चेन्न पुंसा विरहितवनितामन्दिरे तेऽस्तु वासः। नाट्यज्ञो नाट्यशालां व्रज भुजगधरो भिक्षुकः किं प्रवीणो नाहं चेन्मूषिकेशो वसनभरमिदं खण्डनीयं न तेऽस्ति। कस्त्वं सिद्धकपित्थपक्वफलभुक् किं कुञ्जरो वा भवान्नाहं प्रत्यहमिक्षुखण्डनिकरादः किं शृगालेश्वरः। नो शङ्काऽस्तु पतिः समस्तभुवनप्रख्यातविघ्नेश्वरो शत्रूनिन्द्रमुखस्य दैत्यनिवहान् हन्तुं गतः प्रागितः। किमिदं हृदये तवार्धचन्द्रो ह्यधरः किं तव केन वा क्षतोऽभूत्। परितो नयनस्य रक्तिमा ते कुत एवेति वदाद्य निश्चयं मे। हृदयं मम शस्त्रपातनेन क्षतमधरोऽप्यथ शङ्खपूरणेन। नयनं निशि जागरेण रक्तं मयि कोपं न कुरुष्व देवि चेदम्। जलधिमथ विशामि किं त्वदीयो वसतिरिह प्रथितः स सिन्धुराजः। भुजगमयघटे करप्रवेशः सुकरः खलु सर्पभूषणस्य। कोपाकलितनेत्रान्तामालोक्य दयितां तदा। निजगाद वचो देवः सान्त्वपूर्वकमादरात्। एवं कृते निखिललोकवरप्रदेशं विघ्नं [कान्त] समेत्य सहसा प्रियमालिलिङ्ग। आविश्य चान्तरखिलैः सुरतोपचारैर्देवं प्रतोष्य मुमुदे सहसा प्रियेण।

मासत्रयोक्तश्च युगे तृतीये मासार्मासश्च कलौ युगे स्यात्[1] ४०

इति कामिकागमे शिवपार्वतीसंवादे उत्सवः पटलः। श्रीः

1 प्रायश्चितं प्रवक्ष्यामि शृणु देवि यथाविधि। उत्सवस्य तु काले च चन्द्रसूर्योपरागके। गुरुशुक्रास्तगे काले महामारीप्रवर्तिते। राजपट्टाभिषेके च नृपोत्सवसमाहिते। सङ्ग्रामे राजनाशे च महदुत्पातसम्भवे। प्रायश्चित्तं प्रकुर्वीत उत्सवं [वे] तत्र कारयेत्। नान्दीश्राद्धं च कृत्वाऽथ पुण्याहं वाचयेत्सुधीः। तत्र होमं प्रकुर्वीत घटं संस्थापयेत्सुधीः। पक्वं च रुद्रगायत्र्या पञ्चब्रह्माण [सपञ्चब्रह्म] मन्त्रतः। दशद्रव्यं च होतव्यं पृथगष्टोत्तरं शतम्। स्नपनं कारयेत् तत्र पञ्चविंशतिकुम्भकैः।पञ्चब्रह्माण [सपञ्चब्रह्म] समन्त्रेण संस्पृश्य कलशं जपेत्। मूलमन्त्रसहस्रं वा अघोरास्त्रं च कारयेत्। इन्द्रादिलोकपालांश्च हुत्वा स्विष्टकृतं हुनेत्। सम्पातं कलशे पूर्य अभिषिञ्चेद्यथाक्रमम्। बलिकर्मविहीने तु प्रायश्चित्तं समाचरेत्। पुण्याहं वाचयित्वा तु नान्दीश्राद्धं विधाय च। अघोरास्त्रजपं कुर्यादष्टोत्तरशतं तथा। पञ्चब्रह्मषडङ्गैश्च होमं कुर्याद्यथाविधि। स्नापयेत् कलशैर्देवमेकाशीतिघटैस्ततः।देवं सावरणं पूज्य नैवेद्यं मधुरं ददेत्। देवताभ्यो बलिं दद्याद्ब्राह्मणान् भोजयेत्ततः। एवं प्रातर्विधिः प्रोक्तो मध्याह्ने द्विगुणं भवेत्। सायाह्ने त्रिगुणं देवि प्रायश्चित्तविधिः क्रमात्। (उत्सवप्रायश्चित्तानि-) प्रतिसंवत्सरं मासतिथियुक्ते तु तीर्थभम्। निश्चित्य वर्तते पूर्वं उत्सवो वै सदा दिनैः। पुरा नवाहाद्यैर्युक्तो भेरीताडनपूर्वकम्। तद्दिने सगुणे वाऽथ विगुणे वाऽथ तद्दिने। तदन्यथा कृते यज्ञे राज्ञो दोषावहो भवेत्। तत्र शान्तिं विधायादौ प्राग्वदुत्सवमाचरेत्। किन्तु मासान्तरे स स्यात्तस्मिन्मासे तथा भवेत्। मासाहस्तीर्थनक्षत्रमन्यथा वा नयेत् द्विजः। उत्सवो दिनहीनश्चेत्तस्य व्यर्थफलप्रदः। राष्ट्रक्षोभे च दुर्भिक्षे राजचोरभयादिषु। वित्ताभावे स्वयं चापि प्राक् तत्कर्तुमशक्यता। यदि जायेत तत्रापि शान्तिपूर्वं विधाय च। दिनहीनं तु वा कुर्यादुत्सवं पूर्वमागतम्। वृषाधिवासने हीने ध्वजे चारोपिते सति। गावा नश्यन्ति तत्कुर्यात् शान्तिहोमं तदुक्तवत्। वृषं वाह नयेत्तत्र ध्वजदण्डस्य मूलतः। किन्तु ध्वजे वृषे मन्त्रन्यासाद्यं मनसा चरेत्। ध्वजारोहे विहीने तु नृपतेर्भयमादिशेत्। शान्तिं कृत्वा तदा मन्त्री पुनरारोपयेद्ध्वजम्। ध्वजस्य भ्रमणे हीने ग्रामादावशुभावहम्। शान्तिहोमं ततः कुर्यात्सर्वदोषनिवृत्तये। वेदिर्विहीना वा हीनलक्षणा चाशुभप्रदा। शान्तिहोमं ततः कृत्वा वेदिं कुर्यात्सलक्षणाम्। दण्डो लक्षणहीनश्चेत् प्रधानानां शुभेतरः। मूर्तिहोमं ततः कुर्यात् शान्तिहोममथापि वा। स लक्षणविहीनश्चेन्नृपाणां तु भयप्रदः। स्कन्धमानस्य वै हानौ शान्तिहोमं तदा चरेत्। दण्डोपदण्डस्कन्धादेर्भेदभङ्गादिसम्भवे। शान्तिहोमं तदा कुर्याद्भग्ने शान्त्यन्तरं नयेत् । ध्वजो लक्षणहीनश्चेत् राष्ट्रस्यास्य भयङ्करः । सलक्षणं ध्वजं चान्यं

मासत्रयोक्तश्च युगे तृतीये मासार्मासिश्च कलौ युगे स्यात्[1] ४०
इति कामिकागमे शिवपार्वतीसंवादे उत्सवः पटलः। श्रीः

---

1 प्रायश्चितं प्रवक्ष्यामि शृणु देवि यथाविधि। उत्सवस्य तु काले च चन्द्रसूर्योपरागके। गुरुशुक्रास्तगे काले महामारीप्रवर्तिते। राजपट्टाभिषेके च नृपोत्सवसमाहिते। सङ्ग्रामे राजनाशे च महदुत्पातसम्भवे। प्रायश्चित्तं प्रकुर्वीत उत्सवं [वे] तत्र कारयेत्। नान्दीश्राद्धं च कृत्वाऽथ पुण्याहं वाचयेत्सुधीः। तत्र होमं प्रकुर्वीत घटं संस्थापयेत्सुधीः। पक्वं च रुद्रगायत्र्या पञ्चब्रह्माण [सपञ्चब्रह्म] मन्त्रतः। दशद्रव्यं च होतव्यं पृथगष्टोत्तरं शतम्। स्नपनं कारयेत् तत्र पञ्चविंशतिकुम्भकैः।पञ्चब्रह्माण [सपञ्चब्रह्म] समन्त्रेण संस्पृश्य कलशं जपेत्। मूलमन्त्रसहस्रं वा अघोरास्त्रं च कारयेत्। इन्द्रादिलोकपालांश्च हुत्वा स्विष्टकृतं हुनेत्। सम्पातं कलशे पूर्य अभिषिञ्चेद्यथाक्रमम्। बलिकर्मविहीने तु प्रायश्चित्तं समाचरेत्। पुण्याहं वाचयित्वा तु नान्दीश्राद्धं विधाय च। अघोरास्त्रजपं कुर्यादष्टोत्तरशतं तथा। पञ्चब्रह्मषडङ्गैश्च होमं कुर्याद्यथाविधि। स्नापयेत् कलशैर्देवमेकाशीतिघटैस्ततः।देवं सावरणं पूज्य नैवेद्यं मधुरं ददेत्। देवताभ्यो बलिं दद्याद्ब्राह्मणान् भोजयेत्ततः। एवं प्रातर्विधिः प्रोक्तो मध्याह्ने द्विगुणं भवेत्। सायाह्ने त्रिगुणं देवि प्रायश्चित्तविधिः क्रमात्। (उत्सवप्रायश्चित्तानि-) प्रतिसंवत्सरं मासतिथियुक्ते तु तीर्थभम्। निश्चित्य वर्तते पूर्वं उत्सवो वै सदा दिनैः। पुरा नवाहाद्यैर्युक्तो भेरीताडनपूर्वकम्। तद्दिने सगुणे वाऽथ विगुणे वाऽथ तद्दिने। तदन्यथा कृते यज्ञे राज्ञो दोषावहो भवेत्। तत्र शान्तिं विधायादौ प्राग्वदुत्सवमाचरेत्। किन्तु मासान्तरे स स्यात्तस्मिन्मासे तथा भवेत्। मासाहस्तीर्थनक्षत्रमन्यथा वा नयेत् द्विजः। उत्सवो दिनहीनश्चेत्तस्य व्यर्थफलप्रदः। राष्ट्रक्षोभे च दुर्भिक्षे राजचोरभयादिषु। वित्ताभावे स्वयं चापि प्राक् तत्कर्तुमशक्यता। यदि जायेत तत्रापि शान्तिपूर्वं विधाय च। दिनहीनं तु वा कुर्यादुत्सवं पूर्वमागतम्। वृषाधिवासने हीने ध्वजे चारोपिते सति। गावा ऽनश्यन्ति तत्कुर्यात् शान्तिहोमं तदुक्तवत्। वृषं वाह नयेत्तत्र ध्वजदण्डस्य मूलतः। किन्तु ध्वजे वृषे मन्त्रन्यासाद्यं मनसा चरेत्। ध्वजारोहे विहीने तु नृपतेर्भयमादिशेत्। शान्तिं कृत्वा तदा मन्त्री पुनरारोपयेद्ध्वजम्। ध्वजस्य भ्रमणे हीने ग्रामादावशुभावहम्। शान्तिहोमं ततः कुर्यात्सर्वदोषनिवृत्तये। वेदिर्विहीना वा हीनलक्षणा चाशुभप्रदा। शान्तिहोमं ततः कृत्वा वेदिं कुर्यात्सलक्षणाम्। दण्डो लक्षणहीनश्चेत् प्रधानानां शुभेतरः। मूर्तिहोमं ततः कुर्यात् शान्तिहोममथापि वा। स लक्षणविहीनश्चेन्नृपाणां तु भयप्रदः। स्कन्धमानस्य वै हानौ शान्तिहोमं तदा चरेत्। दण्डोपदण्डस्कन्धादेर्भेदभङ्गादिसम्भवे। शान्तिहोमं तदा कुर्याद्भग्ने शान्त्यन्तरं नयेत्। ध्वजो लक्षणहीनश्चेत् राष्ट्रस्यास्य भयङ्करः। सलक्षणं ध्वजं चान्यं

रोपणार्थं समाचरेत्। शान्तिकर्म नयेद्धीनलक्षणध्वजरोपणे। एवमेव वृषे कुर्यान्निष्कृतिं दोपहानये। ऊर्ध्ववक्त्रविहीनश्चेन्नैव दोषाय कल्पते। रज्जुच्छेदेरिभिर्बाधो शान्तिहोमं तदा नयेत्। पताकां रोपयेदन्यां सप्ताहाभ्यन्तरे द्विजः। दर्भमालाविहीनश्चेत् शान्तिहोमं समाचरेत्।

ध्वजो घण्टाविहीनश्चेन्नस्याद्वृषभसन्निधिः। आवर्तयेदघोरेण त्रिशतं देशिकोत्तमः। घण्टायाः पतने भूमौ दक्षिणं त्रिशतं जपेत्। दण्डे भग्ने तथा छेदे दग्धे च पतिते सति। राजा मरणमाप्नोति देशकोशविनाशनम्। लक्षं जपेदघोरास्त्रं तथा पाशुपताभिधम्। अयुतं जुहुयान्मन्त्री शान्तिहोमसमन्वितम्। स्नापयेत् कुम्भसाहस्रैर्ब्राह्मणान् भोजयेद्बहून्। पुनर्ध्वजं तु संस्थाप्य बीजाद्युत्सवमाचरेत्। वृषकुम्भविभेदादिकारणात् केतुरोहणम्। कृत्वाऽन्ते शान्तिहोमं च कुम्भं संसाद्य पूर्ववत्। मन्त्रन्यासं ततः कुर्यान्मनसोक्षहृदम्बुजे। तदाऽऽवरणकुम्भाद्भिरभिषेको कृतो यदि। एकैकस्य स्वमन्त्रैस्तु जपं कुर्याच्छतं शतम्। भेरीसन्ताडनेहीने लोको मूकः प्रजायते। शान्तिहोमं ततः कृत्वा देवताह्वानमाचरेत्। भेरीचर्मादिभेदादौ कोणच्छेदादि सम्भवे। अघोरं त्रिशतं जप्त्वा भेरीमन्यामथाहरेत्। कोणे च पतिते भूमौ पतेद्राज्ञो भयं महत्। शान्तिहोमं ततः कृत्वा भेरी सम्पूजयेद्धृदा। यागशालाऽग्निदग्धा वा विहीना लक्षणैस्तु वा। विमानकुण्डवेदिर्वा राष्ट्रे दुःस्थितिमावहेत्। विहीनस्थण्डिलाग्नौ वा शान्तिहोमं समाचरेत्। पूर्ववत्स्थण्डिलं कुर्यात्तस्य दोषनिवृत्तये। शिवकुम्भेषु वर्धन्यामाहृतेषु घटेषु च । भेदे वा सुषिरच्छेदे वैलक्षण्यं क्रमेण च। शान्तिहोमं त्वघोरेण जपेत्पञ्चदशं तु वा [शतं तु वा] कुम्भाद्यं नवमानीय प्राग्वत्संस्थापनं नयेत्। वर्धने वाऽथ कुम्भे वा घटविद्येश्वराधिपाः। स्वर्णाम्बुजविहीना वा स्वल्पस्वर्णविनिर्मिताः। दारिद्र्यं सम्भवेत्कर्तुर्जपेद्घोरसहस्रकम्। शास्त्रसिद्धिं पुनर्दद्यात्तद्दोषविनिवृत्तये। कुम्भाद्या वस्त्रहीनाश्चेद्वातरोगो भवेन्नृणाम्। जप्त्वाऽघोरसहस्रं तु दद्याद्वस्त्रं पुनर्गुरुः। पञ्चरत्नादिवैकल्येऽप्येवमेव समाचरेत्। सूत्रकूर्च विधानादेरभावे होममाचरेत्। हीनकौतुकबन्धे तु तद्दिने वा परे दिने। स यागो निष्फलः प्रोक्तस्तस्य तद्दोषशान्तये। शान्तिहोमं तदा कुर्यात्कौतुकं बन्धयेत्ततः। जपेदघोरत्रिशतं कौतुकानां विलोपने। तद्वदन्यत्कृतेम्मन्त्रते तस्मिन् मुक्त्वान्यो? [तद्वदन्यत्कृते तस्मिन् मुक्तवा सद्यो] ऽधिवासनम्। पूर्वस्थानस्थिते देवे प्रोक्तं कौतुक बन्धनम्। पूज्यते मण्डपादौ वा जपेद्घोरशतैर्कम्। बलितालाद्यभावेन सहस्रं दक्षिणं जपेत्। त्रिशतं दीपहीने चेत् द्विगुणं दीपमाचरेत्। उत्सवो यानहीनश्चेत्सर्वदोषो भवेन्नृणाम्। स्नपनं शान्तिहोमं च प्रतियानं समाचरेत्। यागशालाऽग्निदग्धा चेद्धयं स्यादन्तवेश्मनः? । व्यपोह्यापूर्य कुम्भादीन् सम्पूज्य वृषभध्वजम्। मूर्तिहोमं विधायान्ते पूर्ववद्यागमण्डपम्। कृत्वा सद्योऽधिवासं तु पूर्ववत्सर्वमाचरेत्। महासने [नसे] चरुस्थाने मण्डपे गोपुरादिके। विदग्धे शान्तिहोमं तु ब्राह्मणान् भोजयेद्बहून्।

दानं तु द्वि [वि] विधं कृत्वा स्नपनं तु समाचरेत्। विदग्धे गर्भगेहेऽर्धमण्डपे प्रतिमाधके। अन्तस्था [द्] द्वान्तरे बाह्यात्सापेक्षा मशो भवेत्? । देवानां च दिशाहोमं शास्त्रोक्तविधिपूर्वकम्। ध्वजमूले महापाते राष्ट्रक्षोभे महद्भये। ग्रामप्रदक्षिणं नेष्टमिष्टं धामप्रदक्षिणम्। स्नपनं शान्तिहोमं यत्तदा कुर्याद्विचक्षणः। एकवास्तुनि विप्रेन्द्र वर्तमाने शिवोत्सवे। अन्यदेवात्र कृतश्चेत् [वोत्सवकृते] भूपुरग्रामविभ्रमः। तद्दोषविनिवृत्त्यर्थं शान्तिहोमं समाचरेत्। तथैवमन्तराळे तु प्रायश्चित्तं समाचरेत्। शून्यग्रामं समाश्रित्य बलिकाले प्रकल्पिते। तदा राष्ट्रक्षयं विद्यात्कृतं चेच्छान्तिमाचरेत्। आनये बलियाने वा स्यातां देवालये वृतौ?। देवाङ्गवास्तुशय्याच्छ परं वास्तु विशेषतः?। यागोपकरणेऽप्येवं किन्तु यागावसानके। वास्तुहोमो विधेयः स्यादेकाहेऽप्युत्सवेऽपि वा। इति वातुळे उत्सवप्रायश्चित्तम्।

बलिकूर्चस्य पतने प्रायश्चित्तं विजानता। गोदानमर्चनं कुर्यात्कलशान् मन्त्रगोमयम्। अतः परं प्रवक्ष्यामि प्रायश्चित्तविनिर्णयम्। यं कृत्वा विधिवद्विप्रः उभयत्र विराजते। स्वाभिप्रायकृतं कर्म यत्किञ्चिज्ज्ञानवर्जितम्। क्रीडाकर्मेव बालानां तत्सर्वं विफलं भवेत्। यद्विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते। न तेन शुद्धिमाप्नोति प्रायश्चित्ते कृते सति। दीयते यैस्त्वजानद्भिः प्रायश्चित्तं समाहितैः। तत्पापं शतधा भूत्वा तद्वत्तमनुगच्छति। अधीत्य धर्मशास्त्राणि प्रायश्चित्तं ददाति यः। प्रायश्चित्ती भवेत्पूतो किल्बिषः पुरुषो भवेत्। वेदवेदार्थतत्वज्ञो धर्मशास्त्रबहुश्रुतः। उच्चार्य र्मशास्त्राणि प्रायश्चित्तं विनिर्दिशेत्। प्राकारान्ते मृतौ वा रुधिरनिपतने मूत्रविष्टोपसर्गे गोमेपाश्वप्रसूतौ वमनकफसुरापूयमांसादिपाते। खात्वा रत्निं करं वा द्विकरमुपरि वा पांसुमुद्धृत्य दग्ध्वा गव्यैरापूर्य मृद्भिस्तृपितगुसुकृतं विप्रभुक्त्या व [च] शुद्धिः। स्पृष्टेन सूतके बिम्बे प्रविष्टे गर्भमन्दिरे। दुर्भिक्षं जायते लोके बालानां नाशनं भवेत्। मृत्पात्राणि विसृज्याथ गोमयेनोपलेपयेत्। पर्यग्निकरणं कृत्वा पुण्याहं वाचयेत्ततः। पञ्चशुद्धिक्रमं कृत्वा स्नपनं कारयेत्पुनः। मूर्तिहोमं ततः कृत्वा अस्त्रमन्त्रं शतं जपेत्। प्रेतकैः स्पर्शने चैव प्रवि[?] गर्भमन्दिरे। पुत्रपौत्रविनाशः स्यात्तत्तद्ग्रामो विनश्यति। पूर्ववत्सकलं कृत्वा शान्तिहोमं समाचरेत्। अतःपरं प्रवक्ष्यामि उत्पातिकसमुद्भवे। महाशान्तिं प्रवक्ष्यामि दानषोडशकं तथा। मूर्तिहोमं दिशाहोमं अयुतं घोरसंयुतम्। लक्षहोमं कोटिहोमं महादानादिकांस्तथा। देवस्योत्सवकाले तु बलिबेरे तु भग्नके। छिन्ने भिन्ने तथा स्फोटे खण्डिते चाङ्गहीनके। नृपस्य मरणं चैव देशकोशविनाशनम्। सद्यः शान्तिं प्रकुर्वीत पञ्चविंशतिकुम्भकैः। तत्तद्दिक्पालमन्त्रैश्च समिदाज्यचरून् हुनेत्। दानं दशविधं दद्याच्छेषं कर्म समापयेत्। ततः परस्मिन् दिवसे देशिको ब्राह्मणैः सह। भिन्नां मूर्तिं समादाय मूललिङ्गस्य सन्निधौ। स्थापयित्वा ततो मन्त्री कलामुद्रामयेत्ततः। तत्कलां मूलबिम्बे तु योजयेन्मूलमन्त्रतः। संहारोक्तप्रकारेण होमयेन्मन्त्रवित्तमः।

भिन्नां मूर्तिं समादाय शिल्पिहस्ते ददेद्गुरुः। सन्धानयोग्यं सन्धेयं नो चेद्भूमौ विनिक्षिपेत्। सलिले वा समुत्सृज्य नवां मूर्तिं च कारयेत्। तावन्नित्यबलिं कुर्यान्नैव नित्यं विलोपयेत्। त्रिशूलेन समायुक्तो बलिकर्म समाचरेत्। अथवा मन्त्रतःकुर्यात्तत्तत्स्थाने बलिं गुरुः। मूर्तिं कृत्वा विधानेन स्थापयेद्देशिकोत्तमः। रथप्रयाणकाले तु गोमाहिषमृगादयः। स्त्रीबालस्थविराद्याश्च रथचक्रहता यदि। क्षताश्च शीर्णदेहाश्च तथैव रुधिरच्युताः। तत्काले तु मृतिं प्राप्ते तत्फलं शृणु पार्वति। राज्यक्षोभं नृपक्षोभं तथा दुर्भिक्षसम्भवम्। परचक्रभयं चैव देशकोशविनाशनम्। तद्दोषपरिहारार्थं प्रायश्चित्तं विधीयते। लक्षं जपेदघोरास्त्रं तथा पाशुपतास्त्रकम्। मृत्युञ्जयं तथाऽऽग्नेयं तथा दिक्पालमन्त्रकम्। वेदपारायणं चैव ब्राह्मणैः कारयेत्सुधीः। अघोरेणायुतं हुत्वा तत्तद्द्रव्येण देशिकः। स्नापयेत्कुम्भसाहस्रैर्विधिना देशिकोत्तमः। पश्चाद्दद्याद्विधानेन गोशतं समलङ्कृतम्। ब्राह्मणेभ्यस्ततो दद्यात् स्वर्णभूम्यादिकाः क्रमात्। भोजयित्वा द्विजश्रेष्ठान् दीनान्धबधिरानपि। अनुज्ञातस्ततो विप्रैरित्येवं कारयेद्गुरुः। एवं कृते महेशानि यथोक्तफलभाग्भवेत्। इति विजयागमे। रथयात्रादिकाले तु छेदे दग्धे प्रमादतः। राज्ञो राष्ट्रे जनानां च नाशनं तु भवेद्ध्रुवम्। तस्माद्यत्नेन कुर्वीत प्रायश्चित्तं यथोक्तवत्। जपेल्लक्षमघोरास्त्रमयुतं होमयेद्बुधः। सहस्रकलशैर्देवमभिषिञ्चेत्समाहितः। रथाश्वगजदानानि दद्याद्वित्तानुसारतः। ब्राह्मणान् भोजयेत्पश्चाद्यथा विभवविस्तरम्। यथापूर्वं रथं कुर्यादुत्सवं देशिकोत्तमः। इति सन्तानसंहितायाम्।

छत्रकूर्चमुकुटप्रदीपिकाभग्नपातनविनाशनादिषु। सद्य एव वितनोतु देशिकः शान्तिहोमकलशाभिषेचनम्। ततः परस्मिन् दिवसे च मन्त्री शान्तिं प्रदद्याद्विधिवत् प्रयुक्ताम्। अन्नादिकैर्ब्राह्मणतर्पणं च ततोऽभिषिञ्चेत् कलशैः सहस्रैः। रज्जुछेदे रथच्छेदे स्थिते च पतितेऽपि च। अघोरास्त्रं महामन्त्रं लक्षसंख्यं जपेन्मनुम्। सहस्रकलशं कुर्याच्छतसाहस्रहोमकम्। हुनेच्च समिदाज्यादीन् महाभूतबलिं हरेत्। रथं निर्माय भूरादि कल्पयेल्लोककल्पनम्। रथं कृत्वा विशेषेण देवमारोप्य भक्तितः। रथस्य चालनं कृत्वा कारयेद्भूरिभोजनम्। आचार्यं प्रीणयेत्पश्चात् मूर्तिकान् जापकानपि। दीनान्धबधिरादीनां दापयेद्भूरिदक्षिणाम्। समाप्य मूलबिम्बे तु यथाविभवविस्तरैः। इति कारणीये। रथप्रदक्षिणे काले रथभङ्गो भवेद्यदि। अघोरास्त्रं जपेन्मन्त्रं लक्षं तद्दोषशान्तये। तथा पाशुपतास्त्रं च मृत्युञ्जयसुदर्शनम्। आग्नेयं क्षुरिकास्त्रं च ब्रह्मास्त्रं क्षेत्रपालकम्। शूलिन्याश्च महामन्त्रं मृतसञ्जीविनीमपि। प्रत्यङ्गिरं लोकपालानभयङ्करमेव च। नवग्रहाणां मन्त्रांश्च साधिप्रत्यधिदैवतम्। अपमृत्युविनाशार्थं राज्ञो राष्ट्रविवृद्धये। एवं कृते महादेवि सर्वशान्तिर्भविष्यति। इति कारणीये। चक्रभङ्गे महारोगः हुनेत् पाशुपतेन तु। दण्डहीने महामारी मूलेन जुहुयाद्गुरुः । पट्टिका भिद्यते चैवं मसूरि

व्याधिसम्भवम्। अघोरेण हुनेन्मन्त्री सर्वारिष्टविनाशनम्। पत्रहीने दा [गा] त्रहीने दुर्भिक्षं सर्वनाशनम्। हुनेन्मूलेन जुहुयात्सर्वशान्तिकरं परम्। द्वाराणि पट्टिकामूले मनस्तापं धनक्षयम्। मूलेन जुहुयान्मन्त्री सर्वशान्तिकरं परम्। रथप्रासादहीने तु राजा राष्ट्रं विनश्यतः। अघोरेणायुतं हुत्वा सहस्रं स्नापयेद्गुरुः। सर्वशान्तिकरं पुण्यमायुरारोग्यवर्धनम्। मूर्तिहीने च तुरगे सर्वसम्पद्विनाशनम्। हुनेदघोरमन्त्रेण सर्वशान्तिर्भविष्यति। पताकाकलशे हीने दुर्भिक्षं मरणं भवेत्। मूलेन जुहुयान्मन्त्री सर्वारिष्टविनाशनम्। आचार्यमूर्तिपैर्हीने गोधनं सर्वसम्पदः। भाग्यादीनि विनश्यन्ति महाशान्तिं समाचरेत्। रथस्थमूर्तौ पतिते भिन्ने हस्तपदादिके। सर्वलोकक्षयकरं सर्वशत्रुविवर्धनम्। महामहाभूतपीडा बहुधा बहुधा तथा। महाशान्तिं प्रकुर्वीत होमयेद्घोरलक्षकम्। रथे च पतिते भिन्ने राजा राष्ट्रं विनश्यति। पतिते चाग्निदिग्भागे नगरेऽग्निभयं महत्। याम्यायां च महामारी मसूरीव्याधिपीडनम्। पतिते नैरृते भागे प्रजाक्षोभं महद्भवेत्। वारुण्यां पतिते चैव रक्तवृष्टिः सस्यनाशनम्। पतिते वायुदिग्भागे महारोगो धनक्षयम्। कौबेरे पतिते चैव धनधान्यं विनश्यति। पतितैशानदिग्भागे महात्मा गुरवस्तथा। साधु सज्जनगोविप्रा विनश्यन्ति न संशयः। गोभूतिलहिरण्यादिमहादानादिकं चरेत्। हुनेद्घोरं महामन्त्रं लक्षसंख्यं जपेन्मनुम्। स्नापयेत्कुम्भसाहस्रैर्ब्राह्मणान् भोजयेद्बहून्। तदर्थं पूर्ववत्कृत्वा पुनस्तत्सर्वमाचरेत्। सर्वशान्तिर्भवेत्सद्यः सर्वारिष्टविनाशनम्। सहस्रशीर्षं देवं [सहस्रशीर्षः पुरुषः] सहस्राक्षः सहस्रपात्। एवं विराड्रूपं च ध्यानाद्देवः समाहितः। अनेन विधिना मन्त्री प्रायश्चित्तं समाचरेत्। इति किरणागमे।

रथे त्वारोहमाणे तु देवेशेन सुरेश्वरि। रथः शिवात्मकः प्रोक्तस्तद्वदाम्यनघे शृणु। रथाग्रे तिष्ठति ब्रह्मा रथमध्ये सदाशिवः। रथमूले स्थितो विष्णुस्त्रिमूर्त्यात्मा रथोत्तमः। रथाङ्गोपाङ्गमाश्रित्य सर्वास्तिष्ठन्ति देवताः। दिगीशा दिक्षु तिष्ठन्ति कूर्मानन्तावधःस्थितौ। तस्माद्रथस्तु देवेशि सर्वदेवमयः स्मृतः। रथाक्षयो प्रभग्नश्चेद्राजा राष्ट्रं विनश्यतः। उपोष्य तद्दिने तत्र सर्वभोगविवर्जितः। अधःशायी भवेद्रात्रौ राजा परमनैष्ठिकः।पूर्वाह्णे वाऽपराह्णे वा रात्रौ वा पुरसूदिनि।रथाक्ष [भङ्गे सञ्जाते भोजयेत्] वेदपारगान्। कपिलां गां पुरस्कृत्य दद्यात् सर्वस्वदक्षिणाम्। तत्र शान्तिं प्रकुर्वीत द्विजाशीर्भिः समन्वितः। श्रावयेच्चतुरो वेदान् जपेत् प्रासादकं मनुम्। शतलक्षं तदर्धं वा होमं कुर्याद्दशांशकम्। प्रासादोक्तप्रकारेण पूजयेच्च यथाक्रमम्। त्रियम्बकं महादेवं तथा मृत्युञ्जयं जपम्। कुर्यात् सर्वप्रयत्नेन शिवतन्त्रानुसारतः। दानानि पूर्वमुक्तानि दद्यात् स्वश्रेयसे शिवे। मधुरान्नप्रदानेन ब्राह्मणान् पूजयेत्प्रभुः। गोभूहिरण्यदानेन शिवं सन्तोषयेच्छिवे। लक्षं रुद्रजपं चैव शतरुद्राभिषेकतः। रुद्रसूक्तजपाच्चैव रुद्रसूक्ताभिषेकतः। शिवागमविधानेन शिवं सन्तोषयेत्प्रभुः। शिवप्रसादाच्छान्तिः स्यात्तथा ब्राह्मणभोजनात्। रथभङ्गोत्थितो

त्पातो वदामि गिरिजे शृणु। सुवर्णेन रथं कृत्वा रत्नमण्डपमण्डितम्। छत्रध्वजपताकैश्च सर्वतोऽलङ्कृतं शुभम्। उमामहेशं सम्पूज्य रथमध्ये शिवप्रदम्। दद्याद्वित्तानुसारेण ब्राह्मणाय सुशीलिने। अशुभं हर मे देव शुभं मे सर्वदा दिश। सुवर्णरथदानेन श्रेयः सम्यक् प्रयच्छ मे। अनेन मनुना दानं दद्याद्राजा गुणान्वितः। तस्माद्दानेन होमेन शिवलिङ्गार्चनेन च। तुष्ट्वा तं शमयेद्राजा प्रजाश्च परिपालयेत्। इति किरणागमे। उष्णीषमुत्तरीयं च वसनं यज्ञसूत्रकम्। शिरो वा अग्निना दग्धेतच्चिन्ना च विपसुसुते? [दग्धं छिन्नं वा मूषिकादिभिः] 1 ज्वरबाधा भवेद् ग्रामे तद्दोषशमनाय च। गुरुः स्नात्वा शुचिर्भूत्वा शान्तिहोमं समाचरेत्। एवमेव भवेत्कर्तुर्गोत्रादीनां मुनीश्वराः। वस्त्रशय्यासनादीनां दाहे छेदे तु सम्भवे। दष्टे वा मूषिकाद्यैस्तु क्रमात् फलमिहोच्यते। कोणे वा भोगवृद्धिः स्यात्प्रान्तेऽनिष्टं प्रकीर्तितम्। पुत्रोत्पत्तिर्जयश्चैव दशापाशान्तमध्यमे। प्रान्तनिष्ठात्समाख्यानं रोगो मृत्यू रथेऽन्यतः। वस्त्रं तत्त्रिगुणीकृत्य ब्रह्मेन्द्रयमवह्निषु। मनोदोषः समाख्यातो दोषो नान्यत्र कथ्यते। एवमेव नराणां च तदा स्नानं विधाय च। जप्त्वाऽघोरसहस्रं तु दष्टवस्त्राणि दापयेत्। नराणां शिवभक्तानां देशिकाय शिवाय च। वस्त्राद्यं दैविकं चेद्धि प्रोक्ष्य गव्येन शुद्धये। कारयेत् संहिताहोमं अघोरं वा जपेदथ। अदीक्षितैश्च शूद्राद्यैःप्रविष्टे यागमण्टपे। सम्प्रोक्ष्यास्त्राम्बुनाऽघोरं दशवारं जपेन्मनुम्। तत्संस्पृष्टे तु कूर्चं वा तदन्यं विनिवेशयेत्। संहिताहोमपूर्वं वा श्वानादीनां प्रवेशने। गोमयेनोपलेप्यादौ पुण्याहं प्रोक्षणान्तिकम्। गव्यसम्प्रोक्षणोपेतं प्रतिलोमान्त्यजैरपि। सूतकैःप्रेतकैर्वाऽपि कुम्भादींस्तद्गतांस्त्यजेत्। गोमयालेपनं कृत्वा पर्यग्निकरणं नयेत्। मूर्तिहोमं विधायान्ते कुम्भादीन् पूर्ववन्न्यसेत्। श्वादीनां स्पर्शने चैवं निष्कृतिःपरिकीर्तिता। चण्डालाद्यैः प्रविष्टश्चेदेवं कृत्वा तदन्तिके। स्नपनं कारयेच्छम्भोर्दिशाहोमं तु कारयेत्। तत्स्पृष्टाः प्रतिमाद्याश्चेत् प्रागवन्निष्कृतिमाचरेत्। यागशालाग्निदग्धा चेद्द्रव्यं स्याद्राजवेश्मनि। व्यपोह्य पूर्वकुम्भादीन् सम्पूज्य वृषभध्वजम्। मूर्तिहोमं विधायान्ते पूर्ववद्यागमण्टपम्। कृत्वा सद्योऽधिवासं तु पूर्ववत् सर्वमाचरेत्। कुम्भसंस्थापनोपेते विदग्धे यागमण्डपे। महानसेऽथ वा स्ना [स्था] नमण्डपे गोपुरे तु वा। विदग्धे शान्तिहोमं तु कृत्वा पूर्ववदाचरेत्। प्रपायामग्निदग्धायां संहिताहोम इष्यते। नित्ये नैमित्तिके काम्ये उत्सवार्थं विनिर्मिते। मण्डपे तु विदग्धे चेद्द्रव्यं स्याद्राजवेश्मनि। शान्तिहोमं ततः कृत्वा पुनः सन्धानमाचरेत्। उत्सवे उत्सवेऽप्येतत् सामान्यं कर्म सम्मतम्। ग्रामप्रवेशदाहे तु संहिताहोममाचरेत्। महादाहोद्भवे ग्रामे शान्तिहोमं समाचरेत्। इति कामिके। लक्ष्यतेऽद्भुतशान्तिर्वै सर्वारिष्टनिवारिणी। रजन्यां दर्शने भानोः परराजभयं भवेत्। विप्रभोजनसंयुक्तं तत्र शांतिं समाचरेत्। दर्शे चाभ्युदिते चन्द्रे परराजो भविष्यति। पूर्ववत्कल्पिते शान्तिं मध्यमाधममेव वा। सम्भवे भूमिकम्पादौ नृपभङ्गो भवेद्ध्रुवम्। मधुक्षीरघृतैः स्नानं

सहस्रप्रस्थसंमितैः। तदर्धैर्वा तदर्धैर्वा शतप्रस्थैस्तदर्धतः। स्नपनोक्त्या शिवे कुर्यात् त्रिसप्ताहं द्विसप्तहम्। सप्ताहं वाऽखिलक्षोभे श्रेष्ठमार्गेण कारयेत्। प्रतिमारोदने स्वेदे नृपतेर्मृतिमादिशेत्। कृत्वा तु प्रतिमाशुद्धिं श्रेष्ठां शान्तिं समाचरेत्। वृष्टिः पतेत्कुम्भपताकिकासु क्विन्नेषु बिन्दुनिकरैः पतितो विशेषात्। राज्ञां भवेन्मरणशत्रुभयंच तस्माच्छान्तिं चरेत्सकलदोषभयापहां ताम्। उत्पन्ने च तदा वर्षे सिक्ते च जलबिन्दुभिः। पताकाघटकुम्भादौ मूर्तौ वाचा [च] र्य एव वा। तदन्तिकस्थितजले [जने] आदिके पतितेऽथवा। तदा भयं विजानीयाद्राज्ञो राष्ट्रस्य निश्चयम्। तदा शान्तिं प्रकुर्वीत आचार्यो ब्राह्मणैः सह। लक्षं जपेदघोरास्त्रं जुहुयादयुतं बुधः। दानानि विविधं दत्वा स्नापयेत्कलशोदकैः। वरुणप्रार्थनं कुर्यात् शान्तिसूक्तं पठेत्ततः। ब्राह्मणान् भोजयेत्पश्चात्तद्दोषविनिवृत्तये। वर्त्तिभ्रमणकाले तु दीपे पतितनाशने। राजा मृत्युमवाप्नोति तच्छान्तिं कारयेद्गुरुः। लक्षं जपेदघोरास्त्रं उद्दीप्यस्वेति मन्त्रतः। आज्यं हुत्वा सहस्रं तु शेषं कर्म समाचरेत्। पुनर्दीपं दर्शयित्वा राजा सुखमवाप्नुयात्। कूर्चं निपतितं भूमौ चलात्प्राक् प्रतिगृह्यताम्। अत ऊर्ध्वं निगृह्णीयात् गोमयेनावृतः पुमान्। भूतले तु महाघण्ट्राजिह्मा [जिह्वा] निपतने सति। तदा प्रभृति तद्राज्ये दुष्टबाधाविवर्धनम्। तस्माज्जिह्वापतद्दोषाच्छान्तिं चैव समाचरेत्। इति मन्त्रमञ्जूषायाम्।

## तुलारोहणविधिः

तुलारोहणविधिः- ललितागमे- देव्युवाच- विश्वेश्वर जगद्वन्द्य महादेव दयानिधे। तुलारोहविधिं त्वत्तः श्रोतुमिच्छामि साम्प्रतम्। तुलारोहे जनैः कार्यो निमित्तेषु च केषु च। कः कालस्तद्वदेस्तत्र तद्द्रव्यं तत्फलं तथा। एतत्सर्वं मम ब्रूहि कौतुकोऽस्ति महाप्रभो। शिव उवाच- साधु पृष्टं महादेवि यस्मात्त्वं परिपृच्छसि। तत्सर्वं च वदिष्यामि तव प्रीतिवशेन च। सङ्कटे समनुप्राप्ते प्रार्थयेत्तुलया इमाम्। स्वर्णेन सर्वसम्पत्त्यै राज्यकोशाय चायुषे। हृद्रोगनाशनायाशु रजतेन सुखाय च। गुदव्याधिविनाशाय ताम्रे णारचये [णाचारये] तुलाम्। लोहेन सर्वरोगाणां नाशनाय च पार्वति। यक्ष्मनाशाय कांस्येन त्रपुणा गुल्मशान्तये अपस्मारविनाशःस्यात् सीसस्य तुलया ध्रुवम्। पित्थरोगविनाशः स्यात् तुलया पित्तलस्य च । गण्डमालाविनाशाय गुडस्य तुलया भवेत्। तुलया गृहिणीनाशः कदलीफलसञ्चयैः। फलैरन्यैः कपित्थाद्यैर्द्राक्षाखर्जूरकैस्तथा। सर्ववाञ्छाफलैर्देव तुलारोहे भवेद्ध्रुवम्। माक्षिकेण महद्भाग्यं कीर्तिः क्षीरेण चोत्तमा। दध्ना जडविनाशः स्यात्तेजोवृद्धिर्घृतेन च। दिव्यवस्त्राणि वस्त्राणां तुलया भवति क्रमात्। च [च] न्दनैस्तुलया प्रोक्तं सुरूपं च सुखं सदा। कुङ्कुमैश्च तुलारोहः सर्वकामफलाप्तये।

हरिद्राभिस्तुलारोहाच्चारुकान्तिमभीप्सताम्। तृतीया पञ्चमी षष्ठी नवमी च त्रयोदशी। दशम्येकादशी वाऽपि तिथिरुक्ता शुभाप्तये। भानोरिन्दोर्गुरोश्चैव वाराः शुक्रस्य शोभनाः। अश्विनी रोहिणी चार्द्रा पुनर्वसु मघात्रयम्। हस्तज्येष्ठे चोत्तराषाढ [राश्च] नक्षत्राणि शुभानि वै। शुभनक्षत्रवारादौ शुभग्रहयुते तथा। कृतनित्यविधिर्भूत्वा गत्वा देवालयं प्रति। पूर्वभागे तथैशान्यां उत्तरे वा महेश्वरि। मण्डपेऽलङ्कृते शुद्धे [अलङ्कृतं मण्डपं च] कृत्वा विश्वेश्वरीं भजेत्। नान्दीक्रियां च पुण्याहं कृत्वाऽऽचार्यपुरःसरम्। वरयेद्वेदपारार्थं विप्रान् मन्त्र्य जपाय च। [जपपारायणार्थं च वेदज्ञान् वरयेच्छुभान्।] कुण्डे वा स्थण्डिले वाऽपि स्वसूत्रोक्तविधानतः। समिदाज्यचरुद्रव्यै स्तिलसर्षपकैः क्रमात्। अष्टोत्तरशतं वाऽपि देवस्य मूलमन्त्रतः [जुहुयाद्देवमूलतः]। होतव्यं गुरुणा देवि पञ्चविंशतिकुम्भकैः। स्नाप्य सम्पूज्य देवेशं गन्धाद्यैश्चाथ मन्त्रतः। प्रार्थयेद्देवदेवेशं भक्तानुग्रहकारिणम्। त्वं तुले सर्वभूतानां प्रमाणमिह कीर्तिता। तुलामारोढुमिच्छामि देह्यनुज्ञां मम प्रभो। एवं सम्प्रार्थ्य देवेशं तुलामण्डपमाविशेत्। तुलास्वरुपिणीं तत्र विष्णुमायां जगद्धिताम्। अथ पश्चाद्यथान्यायं इति सम्प्रार्थ्य तं च ताम्। धर्माधर्मकृतानां च देहिनां साक्षणीं शिवाम्। मामुद्धर तुलादेवि तस्मात् संसारसागरात्। इति सम्प्रार्थ्य देवेशीं पुष्पाणि प्रविकीर्य च। प्रदक्षिणत्रयं कृत्वा नमस्कारांस्तथैव च। त्वं तुले सर्वभूतानां प्रमाणमिह कीर्तिता। मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते। एकतस्तुलया योग्यं द्रव्यं तत्पात्रके ततः। स्वभारात् किञ्चिदधिकं विन्यस्य तदनन्तरम्। अन्यत्र तु स्वयं कर्ता चोपविश्य तुलां स्मरेत्। स्वस्तिमङ्गलवाद्यैश्च विप्राशीर्वचनैः सह। सर्ववाद्यरवैः सार्धं तत्र स्थित्वा क्षणं ततः। अवरुह्य तुलापात्रात् फलं तां प्रतिमामपि। स्वस्वाभरणवस्त्रादीन् गुरोर्दत्वा मुदान्वितः। तुलाद्रव्यं यथान्यायं गुर्वादिभ्योऽथ दापयेत्। गोप्रदानं गुरोर्दद्याद्दक्षिणां च स्वशक्तितः। विप्रेभ्यो दापयित्वा तु मृष्टान्नैर्भोजयेन्न तान्। इति सम्प्रार्थितो देवि तुलारोहविधिस्त्वया। समीरितो मया तुभ्यमिहामुत्र सुखप्रदः। वातुले तु- तुलाद्रव्यं तुर्यभागं देवतार्थे प्रकल्पययेदिति तुलाद्रव्यचतुर्थभागः देवतायै समर्पयेदित्युक्तम्। तथा तुलामपि- त्रिरावृत्याथ सन्तोल्य तुलापात्रमधो नयेदिति विशेष उक्तः तथा तुलाद्रव्यं च पूर्वोक्तं स्वस्य दक्षिणतो न्यसेदिति स्वदक्षभागे तुलायां द्रव्यस्थापनं विहितम्।

## परिशिष्टं सम्पूर्णम्



हरिद्राभिस्तुलारोहाच्चारुकान्तिमभीप्सताम्। तृतीया पञ्चमी षष्ठी नवमी च त्रयोदशी। दशम्येकादशी वाऽपि तिथिरुक्ता शुभाप्तये। भानोरिन्दोर्गुरोश्चैव वाराः शुक्रस्य शोभनाः। अश्विनी रोहिणी चार्द्रा पुनर्वसु मघात्रयम्। हस्तज्येष्ठे चोत्तराषाढ [राश्च] नक्षत्राणि शुभानि वै। शुभनक्षत्रवारादौ शुभग्रहयुते तथा। कृतनित्यविधिर्भूत्वा गत्वा देवालयं प्रति। पूर्वभागे तथैशान्यां उत्तरे वा महेश्वरि। मण्डपेऽलङ्कृते शुद्धे [ अलङ्कृतं मण्डपं च ] कृत्वा विश्वेश्वरीं भजेत्। नान्दीक्रियां च पुण्याहं कृत्वाऽऽचार्यपुरःसरम्। वरयेद्वेदपारार्थं विप्रान् मन्त्र्य जपाय च। [जपपारायणार्थं च वेदज्ञान् वरयेच्छुभान्। ] कुण्डे वा स्थण्डिले वाऽपि स्वसूत्रोक्तविधानतः। समिदाज्यचरुद्रव्यै स्तिलसर्षपकैः क्रमात्। अष्टोत्तरशतं वाऽपि देवस्य मूलमन्त्रतः [जुहुयाद्देवमूलतः] । होतव्यं गुरुणा देवि पञ्चविंशतिकुम्भकैः। स्नाप्य सम्पूज्य देवेशं गन्धाद्यैश्चाथ मन्त्रतः। प्रार्थयेद्देवदेवेशं भक्तानुग्रहकारिणम्। त्वं तुले सर्वभूतानां प्रमाणमिह कीर्तिता। तुलामारोढुमिच्छामि देह्यनुज्ञां मम प्रभो। एवं सम्प्रार्थ्य देवेशं तुलामण्डपमाविशेत्। तुलास्वरुपिणीं तत्र विष्णुमायां जगद्धिताम्। अथ पश्चाद्यथान्यायं इति सम्प्रार्थ्य तं च ताम्। धर्माधर्मकृतानां च देहिनां साक्षणीं शिवाम्। मामुद्धर तुलादेवि तस्मात् संसारसागरात्। इति सम्प्रार्थ्य देवेशीं पुष्पाणि प्रविकीर्य च। प्रदक्षिणत्रयं कृत्वा नमस्कारांस्तथैव च। त्वं तुले सर्वभूतानां प्रमाणमिह कीर्तिता। मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते। एकतस्तुलया योग्यं द्रव्यं तत्पात्रके ततः। स्वभारात् किञ्चिदधिकं विन्यस्य तदनन्तरम्। अन्यत्र तु स्वयं कर्ता चोपविश्य तुलां स्मरेत्। स्वस्तिमङ्गलवाद्यैश्च विप्राशीर्वचनैः सह। सर्ववाद्यरवैः सार्धं तत्र स्थित्वा क्षणं ततः। अवरुह्य तुलापात्रात् फलं तां प्रतिमामपि। स्वस्वाभरणवस्त्रादीन् गुरोर्दत्वा मुदान्वितः। तुलाद्रव्यं यथान्यायं गुर्वादिभ्योऽथ दापयेत्। गोप्रदानं गुरोर्दद्याद्दक्षिणां च स्वशक्तितः। विप्रेभ्यो दापयित्वा तु मृष्टान्नैर्भोजयेच्च तान्। इति सम्प्रार्थितो देवि तुलारोहविधिस्त्वया। समीरितो मया तुभ्यमिहामुत्र सुखप्रदः। वातुले तु- तुलाद्रव्यं तुर्यभागं देवतार्थे प्रकल्पययेदिति तुलाद्रव्यचतुर्थभागः देवतायै समर्पयेदित्युक्तम्। तथा तुलामपि- त्रिरावृत्याथ सन्तोल्य तुलापात्रमधो नयेदिति विशेष उक्तः तथा तुलाद्रव्यं च पूर्वोक्तं स्वस्य दक्षिणतो न्यसेदिति स्वदक्षभागे तुलायां द्रव्यस्थापनं विहितम्।

## परिशिष्टं सम्पूर्णम्





के. वासुदेवसोमयाजी

## एतत्कर्तृका ग्रन्थाः

### प्रकाशिताः

१. क्षयमासमीमांसा
२. गुरुनरसिंहसुप्रभातम् [ कर्णाटकभाषाभावार्थोपेतम् ]
३. भारतीयधर्मदर्शन [कर्णाटकभाषायाम् ]
४. अनुष्ठानपद्धतिः [ तृतीयमुद्रणम् ]
५. क्रियासारः [ द्वितीयमुद्रणम् ]
६. लक्षणसंहिता
७. वासिष्ठसंहिता
८. विनायकोदयः
९. ऋग्वेदीयनित्यानुष्ठानपद्धतिः [सन्ध्यादि]
१०. शिवपञ्चायतनपूजा

### प्रकाशनीयाः

१. विष्णुसंहिता [ सव्याख्या ]
२. आशौचनिर्णय [ कर्णाटकभाषायां ]

---

प्राप्तिस्थानम् : के. वासुदेवसोमयाजी ☎ ५६३४२८
'मनीषा' १४६९/१, कृष्णमूर्तिपुरम्, मैसूरु–५७० ००४